असक्तपिधानाः । अद्या नूनं च अद्य य श्वश्च[1] । यष्टवे देवान् यष्टुम् । द्वार्भिः प्रविष्टाभियजन्ति ऋत्विजः ।

पाचकासः[2] पुरुस्पृहो द्वारो देवीरसश्चतः (ऋ. वे. १.१४२.६)

इति पादं न विसृजति । तत्रासश्चतः स्तुत्यर्थोऽनुवादः । अत्र तु विधेयमिति ॥

विश्रयन्ताम् । यज्ञगृहद्वारो विवृता भवन्तु । यज्ञस्य वर्धयित्र्योऽसक्ता अद्य च श्वश्च यागाय । नूनमित्यनेकार्थम् ॥ (६)

**नक्तोषासा सुपेशसास्मिन् यज्ञ उप ह्वये । इदं नो बर्हिरासदे ॥**

नक्तोषासा । नक्ता निशा अनक्तिभूतानि हिमेनेति । तयोर्यज्ञाङ्गत्वमहोनात्रयोः[3] कारणात् । सुपेशसा सुरूपेशसा[4] सुरूपे । अस्मिन् यज्ञे उपह्वये । पादोऽयं न विसृज्यते । पुत्रभिप्रपञ्चार्थः[5] । इदं नो बर्हिः तयोरासक्तुमस्तीर्णमिति[6] ॥

नक्तोषासा । अहोरात्रे सुरूपे अस्मिन् यज्ञे उपह्वये तयोरासनायेदमस्माकं बर्हिस्तीर्णम् ॥ (७)

[1] Read अद्य च श्वश्च.
[2] Read पावकासः
[3] Read रात्र्योः
[4] This word is not wanted.
[5] Not clear.
[6] Read तयोरासत्तुमास्तीर्णमिति.

ता सु॒जि॒ह्वा उप॑ ह्वये॒ होता॑रा॒ दैव्या॑ क॒वी । य॒ज्ञं नो॑ यक्षतामि॒मम् ॥

ता सुजिह्वो तह्व सुजिह्वा उपह्वये[1] पार्थिवश्च वैद्युतश्च । वैद्युतस्य[2] सकृत् भवति । तौ[3] देव्यौ[4] होतारौ इति प्रथमान्ताः परशेषाः ।

मन्त्रजिह्वा[5] जुगुर्वणी[6] (ऋ. वे. १. १४२. ८) ॥

इत्यत्र विसृजति । तौ यज्ञं नो यक्षतामिमः[7] । यज्ञो हविर्योगो दानमिति ॥

ता सुजिह्वा । अयं चाग्निरसौ च मध्यमः । तौ शोभनवाचावुपह्वये । दैव्यौ होतारौ कवी यज्ञं नो यजतामिमम् ॥ (८)

इळा सर॑स्वती म॒ही ति॒स्रो दे॒वीर्म॑यो॒भुवः॑ । ब॒र्हिः सी॑दन्त्व॒स्रिधः॑ ॥

इळा । इळा सरस्वती महीति वाचस्तनवः । यदि वा इळा भूमिः । सरस्वती वाक् । मही महती आतित्यस्य[8] दीप्तिः यां भारतीमाहुः ।

इळा कृतानि पत्यते (ऋ. वे. १. १२८. ८) ॥

अग्न इळा समिध्यसे (ऋ. वे. ३. १४. २) ॥

[1] Read ता सुजिह्वा । तौ सुजिह्वौ उपह्वये ।

[2] Folio 10*a* ends with वैद्युत.

[3] The औ mark in तौ completely worm-eaten.

[4] Read दैव्यौ.

[5] Read मन्द्रजिह्वा.

[6] णी mostly worm-eaten.

[7] Read यक्षतामिमम् .

[8] Read आदित्यस्य.

इति सप्तम्यन्ते अन्तोदात्ते । तास्तिस्रो देव्यः सुखस्य भावयित्र्ये[1] बर्हिः सीदन्त्वस्रयो[2]ऽशोषयित्र्यः । गदिवा[3] अनलसाः । मा ध्रेयत[4] सोमिन इति ॥

इळा सरस्वती । इळा सरस्वती महती च भारती तिस्रो देव्यः सुखस्य भावयित्र्यः बर्हिः सीदन्त्वक्षयाः ॥ (९)

**इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये । अस्माकमस्तु केवलः ॥**

इह । इह त्वत्वा[5] देवः तूर्णमश्नुते । त्विषेर्वा स्याद्दीप्तिकर्मणः । त्वक्षतेः[6] तनूकरणार्थात्[7] । आग्र्यं[8] मुख्यम् । विश्वरूपमुह्वये । येन विश्वा[9] रूपाणि विक्रियन्ते यस्य विश्वरूपः पुत्रः तं त्वष्टारमाहुः । स देवेषु शिल्पकुशलः । यावच्छोवै[10] रेतसस्सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छोवै[10] तत्प्रजायते इति ब्राह्मणम् । अस्माकमस्त्विवति गतमिति[11] ॥

इह त्वष्टारम् । इह त्वष्टारं मुख्यं येन विश्वानि रूपाणि विक्रियन्ते तमुपह्वये । सोऽस्माकमस्तु केवलः । यावच्छोचै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छोचै तत् प्रजायते इति ब्राह्मणम ॥ (१०)

[1] Read भावयित्र्यो.

[2] Read सीदन्त्वस्रिधो.

[3] Read यदि वा.

[4] Not quite clear.

[5] Read त्वष्टा.

[6] Perhaps to read त्वक्षते र्वा.

[7] Cf. n. 8. 13.

[8] Read अग्रियं.

[9] Read विश्वानि.

[10] चै instead of वै.

[11] See I. 7. 10. above.

अव॑ सृजा वनस्पते॒ देव॑ दे॒वेभ्यो॑ ह॒विः । प्र दा॒तुर॑स्तु॒ चेत॑नम् ॥

अवसृज । अवसृजा वनस्पते काष्ठेषु स्थेतोऽग्निः[1] वनस्पतिः । देव देवेभ्यो हविः प्रास्तु यजमानस्य चेतनं प्रज्ञानमिति ॥

अवसृज । अवसृज वनस्पते यच्छ देव देवेभ्यो हविः प्रकर्षेणास्तु । दातुर्यजमानस्य प्रज्ञापनं देवेषु त्वया निवेदितस्य ॥ (११)

स्वाहा॑ य॒ज्ञं कृ॑णोत॒नेन्द्रा॑य॒ यज्व॑नो गृ॒हे । तत्र॑ दे॒वाँ उप॑ ह्वये ॥

स्वाहा । स्वाहुतं हविरिन्द्राय कृणोतन यजमानस्य गृहे । तत्रान्यानपि देवानहमुपह्वये इति[2] ॥

स्वाहा यज्ञम् । स्वाहा कृणुत हविरिन्द्राय यजमानस्य गृहे । तत्राहं देवानुपह्वये इन्द्रपुरोगमानिति ॥ (१२)

---

ऐभि॑रग्ने॒ दुवो॒ गिरो॒ विश्वे॑भिः॒ सोम॑पीतये । दे॒वेभि॑र्याहि॒ यक्षि॑ च ॥

ऐभिः[3] । आयाह्येभिर्देवैरग्नेऽस्माकं दुवः परिचर्या गिरश्च विश्वैः सोमपानार्थम् । यज च तान् देवानिति ॥

ऐभिरग्ने । आयाह्येभिः सर्वैर्देवैरस्माकं परिचर्या स्तुतीश्च सोमपानाय यज च तान् देवान् ॥ (१)

[1] Read स्थितोऽग्निः

[2] Here there is the figure 12. But this is the end of sūkta 13.

[3] Read एभिः

आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः । देवेभिरग्न आ गहि ॥

आत्वा । आवन्तः[1] त्वां कण्वाकं वसुताः[2] । नह्यर्षिः[3] कण्वो भवति । ब्राह्मणप्रामाण्या अ[4] । कणिश्शब्दकर्मा । गृणन्ति विप्र मे[5] कर्माणि । तथा सति देवैनग्न[6] आगच्छ ॥

आ त्वा कण्वाः । आहूतवन्तस्त्वां कण्वाः उच्चारयन्ति च मेधाविन् तव कर्माणि देवैरग्ने आगच्छ ॥ (२)

इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् । आदित्यान्मारुतं गणम् ॥

इन्द्रवायू । एतान् यक्षीति पूर्वतरयच्चैकवाक्यत्वम् । तथा च

ताराजानाशुचिप्रता[7] (ऋ. वे. ६. १६. २४)

इत्यत्र आदित्यान्मारुतं गणमिति यक्षक्रियायुक्तः[8] पादो विसृष्टः । मित्रेति द्विवचना[9] मित्रावरुणयोर्ग्रहणम् । गणो गणथतेः[10] । एकरूपाणां बहूनां समूहमिति ॥

[1] Perhaps to read आहूतवन्तः

[2] Read कण्वाः कण्वसुताः

[3] Perhaps to read नह्यृषिः

[4] Read ब्राह्मणप्रामाण्यात्.

[5] Read ते.

[6] Read देवैरग्ने.

[7] Read शुचिव्रता.

[8] Read यक्षिक्रियायुक्तः

[9] Read द्विवचनात्.

[10] Read गणयतेः

इन्द्रवायू । एतान् देवानग्न आवह । अपिवा कण्वा एतानप्याहूषतेति । मित्रेति मित्रावरुणयोर्ग्रहणम् । अपि वा मित्रस्यैवेति ॥ (३)

**प्र वो॑ भ्रियन्त॒ इन्द॑वो मत्स॒रा मा॑दयि॒ष्णवः॑ । द्र॒प्सा मध्व॑श्चमू॒षदः॑ ॥**

प्र वः । प्रभ्रियन्ते वः तुभ्यम् । वैश्वदेवमपि[1] सूक्तमग्निप्रवणशब्दम्[2] । इन्दवः सुकास्थो मात[3] । इन्धेर्दीप्तिकर्मणः । मत्कृसरा[4] माद्यन्तः सरन्तः । मादयिष्णवो मादयन्ति च पातारमत्यन्तम् । मत्सरस्सोमो मन्देते[5]स्तृप्तिकर्मणः (नि. २. ५) इति निरुक्तम् । अपि च मत्सरो रसम्[6] । तद्वन्तो मत्सरा माद्यन्त[7] । न चावगृहीतं शाकल्येन । द्रप्सा वध्व[8] इत्यौपामिकम्[9] । द्रप्सा मिन्दवो[10] द्रवेः स्कन्दनार्थात् । मधुः सारघो[11] मादयतीति । चमूषदः । चमूषसिङन्ति[12] । चमूश्चतेमपानार्थात्[13] । तैः सोमं पिवन्तीति ॥

प्र वः । हविर्धाना युष्मभ्यं प्रभ्रियन्त इन्द्रादिभ्यः इन्दवः । 'इन्दुरिन्धतेर्दीप्तिकर्मण' इत्युक्तम् । मत्सराः सोमा भवन्ति मन्दतेस्तृप्तिकर्मणः । तेषां विशेषणं मादयिष्णव इति । द्रप्सा मधुनश्चमससादिन इत्यौपमिकमिति ॥ (४)

[1] Folio 10*b* ends here.
[2] Not quite intelligible.
[3] Read सुताः सोमाः
[4] Read मत्सरा.
[5] Read मन्दते.
[6] This orght to be मत्सो रसः
[7] Not certain. Sense requires the word रसवन्तः
[8] Read मध्व.
[9] Read इत्यौपमिकम्.
[10] Read इन्दवो.
[11] Word not intelligible. Perhaps to read सोमो.
[12] Read चमूषु सीदन्ति.
[13] Read चमूश्चमतेः पानार्थात्.

ईळ॑ते त्वाम॑वस्यवः कण्वा॑सो वृक्तब॑र्हिषः । हविष्म॑न्तो अरं॒कृतः॑ ॥

ईळते । ईळते त्वामग्ने अव्यवस्यवः अपः अननमिच्छन्तः[1] । कण्वासो वृक्तबर्हिषो हविष्म[2] अरंकृतः अलंकर्तारः । निष्ठान्तमाद्युदात्तम् ।

इमे सोमा अरंकृताः (ऋ. वे. २. १) ॥ इति ।

ईळते । स्तुवन्ति त्वामग्ने पालनमिच्छन्तः कण्वाः स्तीर्णबर्हिषो हविष्मन्तः पर्याप्तकारिणः ॥ (५)

घृ॒तपृ॑ष्ठा म॒नो॒युजो॒ ये त्वा॒ वह॑न्ति॒ वह्न॑यः । आ दे॒वान्त्सोम॑पीतये ॥

घृतपृष्ठाः । घृतपृष्ठा अग्नेरश्वं[3] घृतेनाप्यायितपृष्ठाः ॥

घृतपृष्ठं सपर्यत (ऋ. वे. ५. १४. ५) ॥
सोमपृष्ठाय वेधसे (ऋ. वे. ८. ४३. ११) ॥

मनोयुजो वेगवन्तो मनसा युज्यमान[4] । ये त्वा वहन्ति वह्नयो वा[5] वहनात् । तैरावह देवान् सोमपीतये ॥

घृतपृष्ठाः । अग्नेः पानायाश्वपृष्ठे घृतमास्ते । मनसा युज्यमाना ये त्वां वहन्त्यश्वाः तैरावह देवान् सोमपानाय ॥ (६)

[1] Read अवस्यवः अवः अवनमिच्छन्तः

[2] Read हविष्मन्तः

[3] Read अग्नेरश्वाः

[4] Read युज्यमानाः

[5] वा not wanted.

तान् यज॑त्राँ ऋ॒ता॒वृधोऽग्ने॒ पत्नी॑वतस्कृधि । मध्वः॑ सुजिह्व पायय ॥

तान् । ता[1] देवान्यजत्रान्यजनीयानिमानृतावृधाग्ने[2] पक्तिपतश्च[3] कुरु । पक्तिपाके:[4] पालयति गृहान् ॥

दिवो दुहिता भुवनस्य पत्नी (ऋ. वे. ७. ७५. ४) ॥

मध्वस्सोमस्य । सुजिह्वापयनय[5] तानिति ॥

तान्यजत्राँ । तान् यष्टव्यान् यज्ञस्य वर्धयितॄन् अग्ने पत्नीवतश्च कुरु । कृत्वा च सोमं सुज्वाल पायय ॥ (७)

ये यज॑त्रा॒ य ईड्या॒स्ते ते॑ पिबन्तु जि॒ह्वया॑ । मधो॑रग्ने॒ वषट्कृति ॥

ये यष्टव्या ये चेड्याः मनुष्या वा ईडेन्याः पितरो नमस्या देवा[6] यज्ञियाः (श. ब्रा. २. ५. २. ३) इति ब्राह्मणम् । ते ते पिबन्तु जिह्वया । मयोरग्ने[7] वषट्कृधि[8] । वषट्कृतं हुतमिति । मनुष्याश्च वषट्कृतमेव पिबन्त्य-वशिष्टमपिवेड्याश्च देवा एव इति ॥

ये यजत्राः । ये यष्टव्या ये चेड्याः । 'मनुष्या वा ईडेन्याः पितरो नमस्या देवा यज्ञिया' इति ब्राह्मणम् । ते तव जिह्वया सोमस्य वषट्कृतं हुतं पिबन्तु ॥ (८)

[1] Read तान्.
[2] Read वृधोऽग्ने.
[3] Read पत्नीवतश्च.
[4] Read पत्नी पातेः
[5] Read सुजिह्व पायय.
[6] स्या and द in दे worm-eaten.
[7] Read मधोरग्ने.
[8] Read वषट्कृति.

आकीं सूर्य॑स्य रोच॒नाद्विश्वा॑न्दे॒वाँ उ॑ष॒र्बुधः॑ । विप्रो॒ होते॒ह व॑क्षति ॥

आकीम् । आकीमितिनिपात आङा समः । आवहतु सूर्यस्य रोचनादन्तरिक्षात् । विश्वान्देवानुषर्बुधः उषसि बोधनीयान् उषसि प्रबुद्धान्[1] । विप्रो होतेभाग्निरिति[2] ॥

आकीं । सूर्यस्य दिव आवहत्वग्निः सर्वान् देवान् प्रातः प्रबुद्धान् मेधाव्यत्र ॥ (९)

विश्वे॑भिः सो॒म्यं मध्व॑ग्न॒ इन्द्रे॑ण वा॒युना॑ । पिबा॑ मि॒त्रस्य॒ धाम॑भिः ॥

विश्वेभिः । विश्वेभिः देवैः सोम्य[3] सोममयम् मधु अग्ने इन्द्रेण वायुना पिबन्ति[4] त्वं मित्र . . . [5]धामभिः । याम[6] तेजो देवानाम् । यैस्तत्र तत्र सन्निदधति यैश्च पिबन्ति सोमम् । अयाळग्निरग्नेः प्रिया धामानि (श. ब्रा. १. ७. ३. १०) इति निगद इति ॥

विश्वेभिः सोम्यम् । अग्ने विश्वैर्देवैः सह सोममयं मधु पिबेन्द्रवायुभ्यां मित्रस्य च सर्वैः तेजोभिः । देवानां बहूनि धामानि भवन्ति । यैस्तत्र सन्निधानं कुर्वन्तीति वक्ष्यामः ॥ (१०)

[1] Perhaps to read प्रबुद्धान् वा.

[2] Read होतेहाग्निरिति.

[3] Read सोम्यं.

[4] Read पिब.

[5] Two letters worm-eaten. The second may be च. The end is retained. Perhaps to read मित्रस्य च धामभिः

[6] Read धाम.

त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि । सेमं नो अध्वरं यज ॥

त्वं होता । त्वं होता मनुर्हितस्सन्नग्ने[1] यज्ञेषु सीदसि[2] । तथा सति स त्वं न इममध्वरं यज ॥

त्वं भोता[3] मनुर्हितो वह्निरास (ऋ. वे. ६. १६. ९)

इत्यत्र प्रथमः पादः पृथग्वाक्यम् । अतो न स्पृष्टः । अध्वरं यज कुर्विति ॥

त्वं होता । त्वं होता मनुष्यैर्निहितोऽग्ने यज्ञेषु सीदसि । स त्वमस्माकमिमं यज्ञं यज ॥ (११)

युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः । ताभिर्देवाँ इहा वह ॥

युक्ष्व योजय ह्यरुषीरारोचमाना रथे हरितोऽश्वा[4] रोभिद्वर्णाः[5] । ताभिर्देवानिहावहेति[6] ॥

युक्ष्वाहि । योजय रोचमाना रोहितवर्णा अश्वाः स्वरथे । योजयित्वा च ताभिरिह देवानावह । आग्नेयं सूक्तमन्ये निपातभाज इति वैश्वदेवं भवति (१२)

---

[1] स्स partly worm-eaten.

[2] Folio 11*a* ends here. ई mark in सी worm-eaten.

[3] Read होता.

[4] श्वा mostly worm-eaten.

[5] Read रोहिद्वर्णाः

[6] Here there is the figure 13. But this is the end of sūkta 14.

**इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः । मत्सरासस्तदोकसः ॥**

इन्द्रः[1] । ऋतव्यं सूक्तम् । ऋतवो मासाः । तेषां न व्रधा-चस्सन्तीति[2] देवताभिः संयोजनम् । इन्द्र सोमं पिब ऋतुना मधुना । ऋतुऋतेः[3] प्रेरणार्थात् । पुष्पफलादीनाम् । ऋतुरके[4] गतिकर्मणः (नि. २. २५) इति यास्कः[5] । अपर्यवसितार्थत्वादाख्यातमुदात्तम् । तथा

इन्द्र सोमं पिबा इमम् (ऋ. वे. ८. १७. १)

इति । आ त्वा विशन्त्विन्दवो मत्सरासस्तदोकसस्तद्गृहाः । ओको गृहमुच्चेः सेवार्थात् । इन्द्रनिलया इति ॥

इन्द्रसोमम् । ऋतव्यं सूक्तम् । इन्द्र त्वमृतुना सह पिब सोमम् । आख्यातानुदात्तत्वे कारणमुक्तम् । आ विशन्तु त्वां दीप्ताः सोमास्तदेक-निलयास्तस्मिन्नेवेन्द्रे तिष्ठन्तः ॥ (१)

**मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन । यूयं हि ष्ठा सुदानवः ॥**

मरुतः । मरुतो मितराविणो वाताः स्तोतारः च । मरुतः पिबत ऋतुनामधेचेन[6] । पोत्रात् पोतुः । पौत्रः[7] पुनातीति । पोता

[1] Read इन्द्र.

[2] Read प्रयाजास्सन्तीति.

[3] Read ऋतुरर्तेः

[4] Read र्ते.

[5] स्क mostly worm-eaten.

[6] Perhaps to read ऋतुनामधेयेन. In the previous stanza ऋतुना मधुना occurs. Perhaps this is repeated here.

[7] Read पोत्रः

मन्त्रेण ददाति। तस्माद्यज्ञं पुनीतन। यजमानो यज्ञः। यूवं[1] हि भवथ शोभनदानाः ॥

मरुतः पिबत। मरुतः पिबत ऋतुना सह पोतुः प्रदीयमानं सोमम्। यज्ञं शोधयत। यूयं हि भवथ सुदानाः ॥ (२)

**अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना। त्वं हि रत्नधा असि ॥**

अभि। अभिगृणीभि[2] नो यज्ञं शस्त्रम्। ग्नापः[3] पत्नी पौनागमान्[4]। छन्दांसि वै ग्नाः। (श. ब्रा. ६. ५. ४. ७) इति ब्राह्मणम्। ते ज[5] पक्षिण[6] सुपर्णीतनयाः। यदि वा अगम्या भवन्तीति ग्नाः[7]। नेष्टः नेतस्त्वष्टा। तथामन्त्रितम्। पिब ऋतुना। त्वं हि रत्नया[8] असीति ॥

अभियज्ञम्। कुर्वित्यनुज्ञा अभिगिरणम्। अनुमन्यस्वास्माकं यज्ञं देव पत्नीवन् नेष्टः। पिब च सोममृतुना। त्वमसि रत्नानां दाता। त्वष्टा नेष्टोक्त इति ॥ (३)

**अग्ने देवाँ इहा वह सादया योनिषु त्रिषु। परि भूष पिब ऋतुना ॥**

[1] Read यूयं.

[2] Read गृणीहि.

[3] Read ग्नाव:

[4] Not intelligible.

[5] Read च.

[6] Read पक्षिणः

[7] Cf. N. 321. गच्छन्त्येनाः Perhaps to read गम्या भवन्तीति.

[8] Read रत्नधा.

अग्ने:[1] । अग्ने देवानिहावह । सादय च तान् योनिषु[2] । योनियौंतर्मिश्रणात्[3] । स्थानेषु सवनेषु[4] । परिभूत[5] परितो ह[6] । यज्ञे पिब सोममृतुना ॥

अग्ने देवाँ । अग्ने देवानिहावह । सादय च सवनाख्येषु त्रिषु स्थानेषु । अलंकुरु च यज्ञं । पिब च सोममृतुना ॥ (४)

**ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु । तवेद्धि सख्यमस्तृतम् ॥**

ब्राह्मणात् । ब्राह्मणाच्छंसी । ब्रह्मण आहृत्य शस्त्रं शंसति इति । सोऽयमाद्युदात्तः । जातिर्ब्राह्मणश्चेत् ब्रह्मावहितोऽधीत इति । सोऽन्तोदात्तः ।

ब्राह्मणोऽस्य मुखमासीत् (ऋ. वे. १०. ९०. १२)

इति । इन्द्र राधसः सोमस्य पिब । राधस्सोमो राधयतीति । पिबा सोममृतूँरनु । विभक्तिभेदः पादभेदात् । ऋतूननु । ऋतुहिस्सह[7] । तवेद्धि सख्यमस्तृतमविच्छिन्नमृतुभिः । अपि वा स्तोतृभिरिति ॥

ब्राह्मणादिन्द्र । ब्राह्मणाच्छंसिनः सोममिन्द्र पिब सहर्तुभिः । तव हि सख्यमृतुभिर्न विच्छिद्यते ॥ (९)

[1] Read अग्ने.
[2] Perhaps to read योनिषु त्रिषु.
[3] Read योनियौंतेर्मिश्रणार्थात्.
[4] Perhaps to read त्रिषु स्थानेषु सवनेषु वा.
[5] Read परिभूष.
[6] Read परितो भव.
[7] Read ऋतुभिस्सह.

युवं दक्षं धृतव्रत मित्रावरुण दूळभम् । ऋतुना यज्ञमाशाथे ॥

युवम् । युवं दक्षं धृतकर्माणौ[1] प्रीणौ[2] प्रीणनसमर्थमिन्द्रियाणां दहनकुशलं वा सपत्नानाम् । मित्रावरुणौ सपत्नैर्हिंसितुमशक्या[3] । अष्टुना[4] यज्ञमाशाथे ॥

युवं दक्षं । युवां प्रवृद्धं धृतकर्माणौ मित्रावरुणौ शत्रुभिर्हिंसितुमशक्यं यज्ञमृतुना सहाशाथे ॥ (६)

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ॥

द्रविणोदाः । अग्निद्रविणोदा[5] भवति । द्रविणसो दानात् । द्रविणो द्रवतेः । द्रविणस्ससोमस्य[6] । पिबत्विति[7] । तं ग्रावहस्तास ऋत्विजोऽध्वरे । यज्ञेषु । यज्ञाहर्वी +[8] त्वितोष्वासन्नेषु[9] । देवमीळेते[10] । ग्रावा गृणातेः । हस्ते[11] हन्तेः ॥

[1] This word should, I believe, follow the word सपत्नानाम् .
[2] This word does not seem to be wanted.
[3] Folio 11*b* ends with हिंसितुमश. Read हिंसितुमशक्यम् .
[4] Read ऋतुना.
[5] Read अग्निर्द्रविणोदा.
[6] Read द्रविणसस्सोमस्य.
[7] Perhaps to read पिबत्विति शेषः
[8] Space for one letter blank after हर्वी.
[9] Perhaps to read यज्ञेषु । यज्ञा हवींषि । तेष्वासन्नेषु.
[10] Read देवमीळते.
[11] Read हस्तो.

येज्ञेषु देवमीळते (ऋ. वे. ६. १६. ७)

इति चतुर्थेऽष्टके न स्पृष्टः[1] । तत्र भि[2] ज्ञायाः[3] प्रसिद्धा एवेति । इन्द्रो द्रविणोदा इति कौकिः[4] । स भि[5] धनबलयोर्दाता । इत्यादिकान्निरुक्तं[6] अनुसन्धेयमिति ॥

द्रविणोदाः । द्रविणोदा द्रविणसो धनस्य दाता भवति । तं ग्रावहस्तासो यज्ञेषु देवं स्तुवन्ति । यज्ञेषु अध्वरे इत्यनयोरर्धर्चभेदात् सङ्गतिः । यास्कस्त्वाह— द्रविणोदाः यस्त्वम् । द्रविणस इति द्रविणसादिन इति वा । द्रविणसानिन इति वा । द्रविणसस्तस्मात् पिबत्विति वा । यज्ञेषु देवमीळते याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्ति वेति ॥ (७)

द्रविणोदा ददातु नो वसूनि यानि शृण्विरे । देवेषु ता वनामहे ॥

द्रविणोदाः । द्रविणोदा ददात्वस्मभ्यं वसूनि । यानि श्रूयन्ते त्रिषु लोकेषु । तानि वयं देवेषु वनामहे भजामहे । तया[7] सति द्रविणोदस्तेभ्य[8]

[1] Read स्पष्टः

[2] Read हि.

[3] Word not certain.

[4] Read क्रौष्टुकिः

[5] Read हि.

[6] Read इत्यादिकन्निरुक्तं. The passage in the Nirukta is स बलधनयोर्दातृतमः (८. २).

[7] Read तथा.

[8] After द्रविणोद and before स्तेभ्य something begun and scored; now there is a cross mark like + remaining. Read द्रविणोदास्तेभ्य.

आहृत्य तानि ददातु । तदग्नवो[1] देवेभ्यो वनते । वयमग्नेर्मार्क्षनुषाः[2] (तै. सं. २. ६. ९. ८) इति निगदः ॥

द्रविणोदाः । द्रविणोदा ददात्वस्मभ्यं वसूनि गवादीनि यानि विश्रुतानि । तानि वयं देवेषु स्थितानि द्रविणोदसं याचामहे । स तत आदाय नो ददातु ॥ (८)

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥

द्रविणोदाः । द्रविणोदा[3]स्सोमं पातुमिच्छति । तं जुहोत हविर्धञात्[4] प्र च तिष्ठत । नेष्ट्रात् नेष्टः[5] । सोमं पिबेन्द्रति[6]मृतुभिस्सह प्रेषयत ॥

द्रविणोदाः । द्रविणोदाः सोमं पातुमिच्छति । ततो जुहोताध्वर्यवो हविर्धानात् प्रतिष्ठत च नेष्टुः स्वभूताच्चमसादृतुभिः सह यष्टुमिच्छतः ॥ (९)

यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे । अध स्मा नो ददिर्भव ॥

[1] Read तदग्निर्देवो. There is a hole on the leaf above ग्न and वो. The इ mark in ग्नि must have been missing thereby.

[2] Read वयमग्नेर्मानुषाः . The क्ष is deleted in the manuscript with a small horizontal stroke above.

[3] द in दा completely worm-eaten.

[4] Read हविर्धानात्.

[5] Read नेष्टुः

[6] Passage not intelligible.

यत्त्वा। यदा त्वा चतुर्थःमप्यृतुभिस्सह[1] द्रविणोदो यजामहे। अध स्मा नो ददिर्भव देहि[2] द्रविणमिति॥

यत्त्वा तुरीयम्। यदा त्वां चतुर्थमप्यृतुभिः सह द्रविणोदो यजामहेऽध त्वमस्माकं भव दाता। स्मेति स्फुटीकरणार्थः॥ (१०)

**अश्विना पिबतं मधु दीद्यंग्नी शुचिव्रता। ऋतुनां यज्ञवाहसा॥**

अश्विना। अश्विना पिबतं सोमम्। अरण्योः प्रदीपिकाग्नि[3]।

नासत्या निरमन्थत[4] (ऋ. वे. १०. २४. ४)

इति। शुचिकर्माणौ। ऋतुना सह यज्ञस्य निर्वोढारौ अध्वर्यू इति॥

अश्विना पिबतम्। अश्विनौ पिबतं सोममरण्योर्दीप्तस्याग्नेर्जनयितारौ शुचिकर्माणावृतुना सह यज्ञस्य वोढारौ॥ (११)

**गार्हपत्येन सन्त्य ऋतुनां यज्ञनीरसि। देवान्देवयते यंज॥**

[1] Read चतुर्थम.

[2] दे worm-eaten.

[3] Read प्रदीपिताग्नी.

[4] Read निरमन्थतम्.

गार्हपत्येन । यथा सत्रेषु गृहपतिः गार्हपत्यं नयति एवं[1] त्वं गार्हपत्येन सन्त्य ऋतुना च तेन कालेन च यज्ञं नयसि । स त्वं देवादेवयते[2] यजेति[3] ॥

गार्हपत्येन । कथमहं गृहपतिः स्यामिति । सन्त्य । सनोतेर्दानकर्मणः । सतां वा हित । ऋतुना सह यज्ञस्य नेतासि । स देवान् यज यजमानाय ॥ (१२)

---

आ त्वा॑ वहन्तु॒ हर॑यो॒ वृष॑णं॒ सोम॑पीतये । इन्द्र॑ त्वा॒ सूर॑चक्षसः ॥

आ त्वा । आवहन्तु त्वां हरयो वपीतारं[4] सोमपानावेन्द्र[5] त्वा सरणशीलचक्षसे दूरेदृशः । चक्षश्चक्षतेश्चक्षुरिति ॥

आ त्वा वहन्तु । आवहन्तु त्वामश्वा वर्षितारं सोमपानायेन्द्र त्वा सुवीरदर्शना दूरेऽपि पश्यन्तः । त्वाशब्दावृत्तिरर्धर्चभेदात् ॥ (१)

[1] वं worm-eaten.

[2] Read देवान्देवयते.

[3] Here there is the figure 15 to mark the end of the sūkta.

[4] Read वर्षितारं.

[5] Read सोमपानायेन्द्र.

**इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे ॥**

इमाः धानाः धिन्वक्रीमाः[1] धाना घृतस्कवो[2] घृतं सोमं क्षरन्त्यो भवन्ति । हर्योर्भागधेयभूताः ।

घृतस्तूर्बहिरासदे[3] । (ऋ. वे. ३. ४१. ९)

इति । बहुव्रीहिः । हरी इहोपहत[4] । इन्द्रं सुखतमे रथ[5] स्थितमिति ॥

इमा धानाः । इन्द्राश्वयोर्भागधेयभूता इमा धाना उपस्तरणाभिघारणाभ्यां घृतस्राविण्यः । तदर्थमश्वाविन्द्रमिह सुखतमे रथे स्थापयित्वोपवक्षतः ॥ (२)

**इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ॥**

इन्द्रम् । इन्द्र[6] प्रातस्सवने हवामहे । इन्द्रं प्रत्ययध्वरे[7] माध्यन्दिने । अपि वा द्वयोरप्युत्तरयोः सवनयोः । सोमपानार्थम् । तृतीये पादे पुनरिन्द्रमित्यन्ततः पूरणम् ।

इन्द्रमिद्देवतातये (ऋ. वे. ८. ३. ५)

[1] Read इमा धाना घृतस्रवः । इमाः

[2] Read घृतस्रवो.

[3] Read घृतस्नू बर्हिरासदे.

[4] Read इहोपवहत.

[5] Read रथे.

[6] Read इन्द्रं.

[7] Read प्रयत्यध्वरे.

इत्यत्राध्वरशब्दः सर्वस्मिन् यज्ञे वर्तते[1] । अस्मात्[2] स + + + + विसृष्टः[3] ।

इन्द्रं सोमस्य पीतये स्तोमैः (ऋ. वे. ३. ४२. ४)

इति । अस्यां प्रथमः[4] पादो न विसृष्टः । स ह्यपर्यवसितार्थः । आविदागमत्[5] इति श्रवणादपि चेन्द्रमित्यपूरणम्[6] ।

पृदाकुसानुर्यजतः[7] (ऋ. वे. ८. १७. १५)

इत्यत्र इन्द्रं सोमस्य पीतये[8] इति[9] न सृज्यते । सापेक्षो हि स पादः । यदि वा इन्द्र इत्यश्वविशेषणम् ।

तम्वभि प्रार्चत (ऋ. वे. ८. ९२. ५)

इत्यत्र इन्द्रं सोमस्य पीतये[10] इति न सृष्टः । तमेवेत्यत्र तात्पर्यादपर्यवसितार्थत्वाच्चेति ॥

[1] Folio 12*a* ends here.

[2] Read तस्मात्. त् is mostly worm-eaten and is scarcely decipherable.

[3] Three syllables completely worm-eaten. Only small bits of letters remain. Read स पादो न विसृष्टः

[4] म worm-eaten.

[5] Read कुविदागमत्. (R. V. III. 42. 4.)

[6] र completely worm-eaten.

[7] जत completely worm-eaten.

[8] R. V. VIII. 17. 15.

[9] ति mostly worm-eaten.

[10] R. V. VIII. 92. 5.

इन्द्रं प्रातः। इन्द्रं प्रातः वर्तमाने यज्ञे सोमपानार्थं हवामहे। पुनरिन्द्रमिति पूरणम् ॥ (३)

**उप॑ नः सु॒तमा ग॑हि॒ हरि॑भिरिन्द्र के॒शिभि॑ः। सु॒ते हि त्वा॒ हवा॑महे ॥**

उप नः उपागच्छास्माकं सुतं सोमम्। हरिभिरिन्द्र केशिभिः प्रशस्तकेशैतम्[1]। सुते हि त्वा हवामह इति ॥

[2]उत्तरा निगदसिद्धा ॥ (४)

**सेमं न॒ः स्तोम॒मा ग॒ह्युपे॒दं सव॑नं सु॒तम्। गौ॒रो न तृ॑षि॒तः पि॑ब ॥**

सेमम्। स त्वमिमन्तः[3] स्तोममागच्छ। उपपिब चेदं सवनं सोतव्यं सोमामित्मकं[4] अन्धस्सुतम्। गौर इव तृषितः। गे[5]

उग्रा सन्ता हवामहे (ऋ. वे. १. २१. ४)

इत्यत्रोपमर्मप्रवचनीयः[6]। सवनशब्दश्च यज्ञपरः। ततो न सृष्ट इति ॥

सेमन्नः। स त्वमिममस्माकं स्तोममागच्छ। आगत्य चेमं सुतं सोमं तृषितो गौरमृग इवोदकमुपपिब ॥ (५)

[1] Read प्रशस्तकेशैः

[2] उत्तरा 'उप न' इति चतुर्थी ऋक्।

[3] Read त्वमिमन्नः

[4] मि between मा and त्म not wanted and deleted by a dot above.

[5] गे not wanted.

[6] Perhaps to read इत्यत्रोपः कर्मप्रवचनीयः

इमे सोमा॑स॒ इन्द॑वः सु॒तासो॒ अधि॑ ब॒र्हिषि॑ । ताँ इ॑न्द्र॒ सह॑से पिब ॥

इमे । इमे सोमा दीसा[1] सुता अध्यासते बहिषि[2] । तां[3] इन्द्र सहसे पिब । सहो बलं सहेरिति ॥

इमे सोमासः । इमे सोमा दीप्ताः सुता बर्हिषि अध्यासते । तानिन्द्र बलाय पिब ॥ (६)

अ॒यं ते॒ स्तोमो॑ अग्रि॒यो हृ॑दि॒स्पृग॑स्तु॒ शन्त॑मः । अथा॒ सोमं॑ सु॒तं पि॑ब ॥

अयः[4] अयं ते स्तोमो अग्रियः श्रेष्ठः । अग्र्यमग्रे[5] वहत्य-ग्रन्तूलं[6] अगेश्चलनार्थात् । अग्रमागतं भवति (नि. ६. ३) इति यास्कः । हृदिस्पृगस्तु । हृन्मनो हरणात् । शंतमः । अथ सोमं सुतं पिब ॥

अयं ते । अयं तव स्तोमो मुख्यो हृदिस्पृगस्तु सुखतमः । अथ सोमं सुतं पिब ॥ (७)

विश्व॒मित्सव॑नं सु॒तमिन्द्रो॒ मदा॑य गच्छति । वृ॒त्र॒हा सोम॑पीतये ॥

[1] Read दीप्ताः

[2] Read बर्हिषि.

[3] Read तान् .

[4] Read अयम् ।

[5] Read अग्रियमग्रे.

[6] Perhaps to read भवत्यग्रम्मूलं. The expression is not clear.

विश्वमित् । विश्वमेव स्वनं[1] सुतमहिषुतमिन्द्रो[2] मदाय गच्छति । वृत्रहा सोमपीतये । सोमपानेन मदो भवतीति ॥

विश्वमित् । विश्वमेव सुतं सोममिन्द्रो मदार्थं गच्छति शत्रुहा सोमपानार्थम् । पानेन मदो भवति ॥ (८)

**सेमन्नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः ॥**

सेमम् । स त्वमिमं नः काममापृणा[3] पूरय । कामः कामेराशा[4] भवति । गोहिरश्वैश्च[5] शतक्रतो । अश्वोऽश्नुतेऽध्वानं अश्नाति वा महदन्नं इति[6] । प्रजापतेरक्ष्यश्वयत्तत्परापतत्तदश्वोऽभवद्यदश्वयत्[7]तदश्वस्याश्वत्वम्[8] (तै. ब्रा. १. १. ५. ४) इति च विज्ञायते । स्तवाम त्वा स्वाध्यः स्वाध्यो नाबुभूष[9] इति[10] ॥

[1] Read सवनं.

[2] Read सुतमभिषुतमिन्द्रो.

[3] Read काममापृण.

[4] Read कमेराशा.

[5] Read गोभिरश्वैश्च.

[6] Cf. अश्वः कस्मात् । अश्नुतेऽध्वानम् । महाशनो भवतीति वा. N. 2. 27.

[7] यदश्वयत् not seen in the printed texts.

[8] Cf. Tāṇ. B. 21. 4. 2.

[9] Not quite intelligible.

[10] Here there is the figure 16 to mark the close of the sūkta.

सेमन्त्रः । स त्वं गवादिभिरिममस्माकं काममापूरय शतकर्मन् । स्तवाम त्वा सुखकर्माणः ॥ (९)

---

इन्द्रावरुणयोरहं सम्राजोरव आ वृणे । ता नो मृळात ईदृशे ॥

इन्द्रावरुणयोरहं सम्राजोरव आवृणे[1] । यौ सर्वेषां देवानां राजानौ । तावस्मभ्यं मृळयेतामिन्द्रशे[2] स्तोत्रे सतीति ॥

इन्द्रावरुणयोः । इन्द्रावरुणयोरहं सर्वेषामीश्वरयोः पालनमावृणे । तौ मृळयेतामस्मानीदृशे स्तोत्रे । यद्वा ईदृशेनावसेति ॥ (१)

गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनाम् ॥

गन्तारा । गन्तारौ हि भवथं[3] रक्षणार्थम् । ह्वानं सिप्रस्य[4] मत्सदृशस्य । धारकौ मनुष्याणामिति । तयोर्युवयोरव[5] आवृणीमह इति ॥

गन्तारा हि । गन्तारौ हि भवथो रक्षणार्थमाह्वानं मेधाविनो मत्सदृशस्य धारकौ मनुष्याणाम् । तौ मयि चागच्छतम् ॥ (२)

[1] The pratika is not separately given.
[2] Read मीदृशे.
[3] Read भवथः
[4] Read विप्रस्य.
[5] वयो completely worm-eaten.

अनुकामं तर्पयेथामिन्द्रावरुण राय आ। ता वां नेदिष्ठमीमहे ॥

अनुकामम्। अनुकामं यथास्माकं[1] कामः पूर्येत तथेत्यर्थः।

यत्रानुकामं चरणम् (ऋ. वे. ९. ११३. ९)

इन्द्रावरुणो[2] रायो धनस्य पूरणगुणसुहितार्थयोगे तृतीयार्थे षष्ठी दृष्टा[3]। आकारः पूरणक्रियान्वितो[4] वा। तौ वां नेतिष्ठं[5] अन्तिकतमं ययाचामहे[6] ॥

अनुकामम्। कामानन्तरमस्मान् धनेन तर्पयेथामिन्द्रावरुणौ। तौ वां वयं युवयोरन्तिकतमं धनं याचामहे ॥ (२)

युवाकु हि शचीनां युवाकु सुमतीनाम्। भूयाम वाजदाव्नाम् ॥

युवाकु। युवाकु[7] युवाकवो युष्मत्कामा भि[8] शचीनां प्रज्ञानाम्[9]। भाजनं भवन्तीति शेषः। शचि[10] शक्नोतेः। कर्माणां[11] वा। युवाकवः

[1] Folio 12*b* ends here.
[2] Read इन्द्रावरुणौ.
[3] पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन P. II. ii. 11.
[4] ण in पूरण completely worm-eaten.
[5] Read नेदिष्ठं.
[6] The first य in ययाचामहे not wanted.
[7] The आ mark in वा completely and कु partly worm-eaten.
[8] Read हि.
[9] Read प्रज्ञानानाम्.
[10] Read शचिः
[11] Read कर्मणां.

सुसुमतीनां[1] भाजनं अक्कशानाम् । + + +[2] यस्तास्सुमतयः[3] । यद्वा युवायोरेव[4] शचीनां सुमतीनाञ्चञ्च[5] भाजनं भवन्ति । तथा सति वयं च युवाकवो भूतयाम[6] वाजदाप्तामन्नस्य[7] तृणाम्[8] । युवयोः कर्म भोजनमिति[9] ॥

युवाकु हि । युष्मत्कामो हि पुरुषः यज्ञानां भाजनं भवति । युवाकुः सुमतीनां च । वयं च युवयोरन्नस्य दातॄणां कर्मणां भाजनं भवाम भूयास्म वेति ॥ (४)

**इन्द्रः॑ सहस्र॒दाव्नां॒ वरु॑णः॒ शंस्या॑नाम् । क्रतु॑र्भवत्यु॒क्थ्यः॑ ॥**

इन्द्रः । इन्द्रस्सहस्रदासनां[10] ये सहस्राणि प्रयच्छन्ति । वरुणः शंस्यानां ये शंसनीया भव[11] । क्रतुं[12] प्रचेता[13] भवत्युक्थ्यः प्रशस्यः । वरुणोऽत्यर्थं प्रशंसनीय इन्द्रश्चात्यन्तदादेति[14] ॥

[1] Repetition of सु in सुसुमतीनां not wanted.
[2] Three syllables completely worm-eaten.
[3] Not quite intelligible.
[4] Read युवयोरेव.
[5] One ञ्च at the end unnecessary.
[6] Read भूयाम; perhaps भूयास्म.
[7] Read वाजदाव्नामन्नस्य.
[8] Read दातॄणाम् .
[9] Perhaps to read कर्मणां भाजनमिति.
[10] Read सहस्रदाव्नां.
[11] Read भवन्ति.
[12] Read क्रतुः
[13] ए mark in चे completely worm-eaten.
[14] Read दातेति.

इन्द्रः सहस्रदाव्नाम्। इन्द्रः सहस्रस्य दातॄणामपि कर्मणां कर्ता भवति। वरुणश्च प्रशंसनीयानां प्रशस्यः। अपिवा स्तोतॄन् सहस्रदाव्नः प्रशस्यांश्च करोति ॥ (५)

**तयोरिदवसा वयं सनेम नि च धीमहि। स्यादुत प्ररेचनम् ॥**

तयोरित्। तयोरेव अवसाने[1] वयं भजेमहि धनम्। निधीमहि चोपयुक्तादतिरिक्तात् अतिरिक्तम्[2]। अपि वास्तु[3] निहितादपि प्ररेचनमतिरिक्तमिति। महतो धनस्याशासानमिति[4] ॥

तयोरित्। इन्द्रावरुणयोरेव रक्षणेन वयं धनं भजेमहि। निधीमहि चोपयुक्तादतिरिक्तम्। निहितादतिरिक्तमप्यस्तु ॥ (६)

**इन्द्रावरुण वामहं हुवे चित्राय राधसे। अस्मान्त्सु जिग्युषस्कृतम् ॥**

इन्द्रावरुणा। इन्द्रावरुणा श्वामहं[5] ह्वयामि। चित्राय यामाय[6]। वामिति पदञ्चमर्थे[7] च प्रयुज्यते तदुत्तदात्तं[8] भवति।

एहि वां[9] विमुचो नपात् (ऋ. वे. ६. ५५. १)

[1] Read अवसा सनेम.

[2] Read निधीमहि चोपयुक्तादतिरिक्तम्.

[3] Perhaps to read चास्तु.

[4] Read धनस्याशासनमिति.

[5] Read वामहं.

[6] Read धनाय.

[7] Read पदन्त्वमर्थे.

[8] Delete त्त between दु and दा.

[9] Here वां is accented.

इति । तौ युवामस्मान् जिग्युषः सुष्ठु कुरुतं शत्रून् जितवतः कुरुतमिति ॥

इन्द्रावरुणा । इन्द्रावरुणौ वामहं हुवे चित्राय धनाय । तावस्माञ्छत्रून् जितवतः सुष्ठु कुरुतम् ॥ (७)

**इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा । अस्मभ्यं शर्म यच्छतम् ॥**

इन्द्रावरुणा । नुः क्षिप्रववचनः[1] । एको नु पूरणम्[2] । इन्द्रावरुणौ क्षिप्रं वां युवामस्माकं धीषु स्तुतिषु । सिषासन्तीषु सतीषु[3] । आकारः पूरकः । अस्मभ्यं शर्म यच्छतमिति ॥

इन्द्रावरुणा । इन्द्रावरुणौ क्षिप्रं वां संभक्तुमिच्छत्सु ध्यातृषु स्तोतृष्वस्मभ्यं सुखं प्रयच्छतम् । एको नुः पूरणः ॥ (८)

**प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे । यामृधाथे सधस्तुतिम् ॥**

प्र वाम् । प्राश्नोतु वामियं स्तुतिरिन्द्रावरुणौ यां हुवे ब्रवीत्मि[4] यां च युवा[5] ऋधाथे वर्धयथः । सयस्तुतिं[6] सहस्तुतिं अथनदानेन[7] वर्धनमिति[8] ॥

[1] Read क्षिप्रवचनः

[2] Read नुः पूरणः

[3] This word must be wrong. It may be संभक्तुं इच्छन्तीषु or it may be an unnecessary wrong repetition.

[4] Delete त् between वी and मि.

[5] Read युवां.

[6] Read सधस्तुतिं.

[7] Perhaps to read अन्नदानेन.

[8] Here there is the figure 17 to mark the end of the sūkta.

प्रवामश्नोतु । प्राप्नोतु वां सुष्टुतिरिन्द्रावरुणौ यां स्तुतिं प्रति वामहं हुवे यां च युवां वर्धयथः सहभूताम् ॥ (९)

---

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥

सोमानम् । सोमानं सोतारमध्वरे सोमस्य । सचरणं[1] स्तोतारम्[2] । स्वरति[3] शब्दकर्मा । जनैर्वा यः शब्द्यते यशस्वी सः । स्वरणं कृणुहि बृहस्पते । रेवाश्यं नाम ब्रह्मणस्पतिरिति देवतान्तरम्[4] । बार्हस्पत्यो हि चरुर्भवति । ब्राह्मण[5]स्पत्यस्तु पुरोडाश इति ब्राह्मणस्पत्यं प्रगाथं शंसति । बृहस्पतिपुरोहिता वै वै[6] देवाः (ऐ. ब्रा. ३. १८) इति ब्राह्मणादेकन्त्वमेव[7] युक्तम् । अप्रमाणं तु पुरोडाशः । यथाग्नेर्वैश्वानरस्य द्वादशकपालः । +[8] कक्षीवान् दैर्घतमस औशिजः उशिजो राजः[9] क्षेत्रजः पुत्रः । कक्षीवन्तं य

[1] Read स्वरणं. च in सच partly worm-eaten.

[2] The word स्तोतारं begins the last line on the page, which starts 2½ in. from the left margin.

[3] Read स्वरतिः

[4] Not quite intelligible.

[5] Folio 13*a* ends here.

[6] One वै not wanted.

[7] Perhaps to read देकत्वमेव.

[8] One syllable completely worm-eaten before कक्षीवान्. It may be यः

[9] Read राज्ञः

औशिजम् इति द्वितीयान्तमन्ये शाखिनोऽधीयत[1] इति । यदि वा काण्डेन मेधातिथिः कक्षीवत आर्त्विज्यं कुर्वाणस्तस्याः शिष्टमनयाशास्त इति ॥

सोमानं स्वरणम् । सोमानं प्रकाशवन्तं कुरु मां ब्रह्मणस्पते कक्षीवन्तं यस्तथा कृतवानसि । यः कक्षीवानुशिक्प्रसूतः । स्वरतिः शब्दकर्मेति ॥　(१)

**यो रे॒वान्यो अ॑मीव॒हा व॑सु॒वित्पु॑ष्टि॒वर्ध॑नः । स नः॑ सिषक्तु॒ यस्तु॒रः ॥**

यः । + [2]रेवान् यश्चामीवानां[3] हन्ता यनस्य[4] लंभकः पुटेच[5] वर्धयिता । सोऽस्मात् सिषक्तु सेवताम् । यस्तुर[6] क्षिप्रो भवति । तुरस्वरतेर्वा[7] तरतेर्वा ।

तुरं यतीषु रमाद्यन्[8] (ऋ. वे. ४. ३८. ७)

इत्याद्युदात्तं[9] तुर्वतेरिति ॥

[1] Cf. T. S. I. v. 6. 4.

[2] One syllable completely worm-eaten before रेवान् । It must be यो.

[3] य and the आ mark in वा worm-eaten.

[4] Read धनस्य.

[5] Read पुष्टेश्च.

[6] Read यस्तुरः

[7] Read तुरस्त्वरतेर्वा.

[8] Read तुरं यतीषु तुरयन्.

[9] In यस्तुरः the accent is on the second syllable रः But in R. V. IV. 38. 7. it is on तु.

यो रेवान् । यो धनवान् यश्च रक्षसां हन्ता धनं लम्भयति पुष्टेर्वर्धयिता स भजतामस्मान् यः सर्वदा त्वरते कर्मस्विति ॥ (२)

**मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥**

मानः । मा नः पृणक् मास्मान् प्राप्नेतु[1] । पृणक् पृणक्तेः पृणक्तेः[2] प्राप्त्यर्थात् । शंसः शंसेत् । आ[3] नः तुभ्यं दित्सामिति[4] वादः । धूर्तिः बाधकः । धूर्वतेः । अरुषो[5] मर्त्यस्य अप्रदातुर्मनुष्यस्य । असुसप्तार्थत्वात्[6] आख्या + मुदात्तत्वम्[7] । रक्षास्मान् धनप्रदानेन ब्रह्मणस्पते ॥

मा नः शंसः । मास्मानदातुर्मर्त्यस्य कदर्यस्य शंसो न दातुं युष्मभ्यमिच्छामीति वादो हिंसकः प्राप्नोतु धनाभावात् । तथास्मान् त्वं रक्ष ॥ (३)

**स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः । सोमो हिनोति मर्त्यम् ॥**

स व्य[8] । यममित्रयो युद्धे प्रेरयन्तीति स न रिष्यन्तीति[9] ॥

[1] Read प्राप्नोतु.

[2] Repetition of पृणक्तेः unnecessary.

[3] Read मा.

[4] Read दित्सामीति.

[5] Read अररुषो.

[6] Read असमाप्तार्थत्वात्.

[7] One syllable completely worm-eaten between ख्या and मु. It must be त. मु and दा too partly worm-eaten. Read आख्यातमुदात्तम्.

[8] Read स घा.

[9] The text of the commentary on this stanza is evidently corrupt. Perhaps it is to read:—यं इन्द्रादयो युद्धे प्रेरयन्ति स न रिष्यति इति । The word वीर is not found in the commentary here.

सखावीरः । यमेते युद्धे प्रेरयन्ति स खलु न विनश्यति वीरः ॥　　(४)

**त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ॥**

त्वन्तम् । त्वन्तमिममस्माकं याज्यं[1] ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यमंहस आहन्तुस्सपत्नात् पातु । परोक्ष उत्तमः पादः[2] । दक्षिणा च तं पात्विति । दक्षिणा दक्षतैः[3] । प्रजापतेर्दुहिता या दानदेवतेति ॥

त्वं तम् । त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यं यज्ञस्य पत्नी दक्षिणा च रक्षतु दारिद्र्यादाहन्तुर्वा रक्षसः ॥　　(५)

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥**

सदसस्पतिम् । सदसः[4]स्पतिं मद्धुतं[5] अभूत[6]पूर्वमाश्चर्यम् । महान्तमित्येके[7] । अन्तोदात्तं चेददनीभूतोरस्वान् भवति[8] ।

वषट्कृतस्याद्भुतस्य दस्रा (ऋ. वे. १. १२०. ४)

[1] It is not clear of what इममस्माकं याज्यं is the explanation.

[2] The visarga in दः partly worm-eaten.

[3] Read दक्षतेः

[4] Visarga after सदस not wanted.

[5] Read अद्भुतं.

[6] First written आभूत. Then the long mark in आ crossed.

[7] Both Skandaswami and Mādhava son of Veṅkaṭārya give the meaning महान्तम्.

[8] Unintelligible. In the instance cited (R. V. 1. 120. 4.) Mādhava gives the meaning महतः for अद्भुतस्य, when the accent is on

इति । प्रियमिन्द्रस्य काम्यं पुरोहितस्सन्निद्रं प्रीणयति इन्द्रस्य काम्यः श्रद्धेयश्च भवति । सनिं धनम् । सनिस्सनेर्भजनात् । मेधायां[1] चाया-सिषमयाचिषम्[2] । मेधस्सारम् । मिथेनिस्सरणारणार्थात्[3] । अत्र बुद्धिः । यज्ञश्च मेथः[4] । स हि द्रव्याणाभृत्[5] । सामयोर्हविषः सारभूतः[6] । स्त्रीलिङ्गोऽन्तोदात्तः[7] । यातिर्याच्ञाकर्मेति[8] ॥

सदसस्पतिम् । सदसस्पतिं महान्तं सखायमिन्द्रस्य कमनीयं धनं प्रज्ञां चायाचिषम् ॥ (६)

**यस्मा॑दृ॒ते न सि॒ध्य॑ति य॒ज्ञो वि॑प॒श्चित॑श्च॒न । स धी॒नां योग॑मिन्वति ॥**

त, while here it is on अ. Cf. Devarāja's nighaṇṭūbhāṣya. B. I. Ed. p. 305 अत्र माधवः—महन्नामाद्युदात्तः स्यात् । अत्राश्चर्यभूतोऽन्तोदात्तः . This is just the opposite of what is found in this com.

[1] Read मेधां instead of मेधायां.

[2] चिषं begins the last line on the page and starts 2½ inches from the margin.

[3] Not certain which root is meant. It must be read मिथेः The root in Dhātupāṭha is midṛ medṛ (also written with dh and th) medhāhiṃsayoḥ. Read निस्सरणार्थात् instead of निस्सरणारणार्थात्.

[4] Read मेधः

[5] Reading not certain.

[6] Sentence not clear.

[7] न्तो completely worm-eaten.

[8] ति and र्या partly worm-eaten.

यस्मात् । यस्मादृते न[1] सिध्यति यज्ञो विपश्चितश्चन प्राज्ञात् । एष भि[2] यज्ञस्य दक्षिणतो ब्रह्मा भूत्वास्ते । स मनां[3] योगं यजमानम्[4] । इन्वति अभिगच्छति । विपश्चित इति षष्ठ्यन्तं[5] वा । विपश्चित इति षष्ठ्यन्तं[6] वा[7] । विपश्चितो[8] यज्ञ इति ॥

यस्मादृते । यं विना न सिध्यति यज्ञो विदुषोऽपि स कर्मणां योगं व्याप्नोति ॥ (७)

**आदृ॑ध्नोति ह॒विष्कृ॑तिं॒ प्राञ्चं॑ कृणोत्यध्व॒रम् । होत्रा॑ दे॒वेषु॑ गच्छति ॥**

आत् । आदित्यानन्तर्यवचनः । आगमनानन्तरम्[9] । ऋध्नोति समर्थयति । हविषः कर्तारम् । अपि वा हविष्करणानन्तरमित्यर्थः[10] । होत्रां[11] देवेषु गच्छति । सैष होत्रा सदसस्पत्याख्या हविर्वहन्ती देवेषु गच्छति ।

[1] Folio 13*b* ends here.

[2] Read हि.

[3] Read धीनां.

[4] Perhaps to read योजनम्.

[5] न्तं mostly worm-eaten.

[6] The initial ष completely worm-eaten.

[7] The repetition of the sentence is unnecessary.

[8] वि partly and प completely worm-eaten.

[9] Between म and ना a syllable is mostly worm-eaten; looks like न.

[10] Commentary on the 2nd Pāda missing.

[11] Read होत्रा.

वि षा हेत्रा[1] विश्वमश्नोति वार्यम् (ऋ. वे. १०. ६४. १५)

इत्युक्तमिति ॥

आश्नोति । गमनानन्तरमेव समर्थयति हविष्करणम् । प्राञ्चं कृणोति यज्ञम् । वाचा च देवेषु गच्छति ॥ (८)

**नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् । दिवो न सद्ममखसम् ॥**

नराशंसम् । सैषा सादसस्पत्यव[2] । अपि वा नराशंसी[3] । नरैः शंसनीयं सदसस्पतिम् । सुधृष्टं[4] सत्यं[5] धर्षितारं सपत्नानाम् । अपश्यं सप्रथस्तमं महान्तम् । सप्रथस्तमः सर्वतः पृथुतमः इति यास्कः[6] । दिवो न सद्ममखसम् । अपि वा वायुम् । सन्नो मखो यस्मिन् यज्ञो[7] भवतीति सद्ममख + र्येभिर्यज्ञः[8] प्रतिष्ठेति[9] । वतायज्ञं प्रयुज्यते । वाते चाकुतः स्थाप्यते[10] ॥

[1] Read होत्रा.

[2] Read सादसस्पत्या.

[3] Read नाराशंसी.

[4] Read सुधृष्टमं.

[5] Read अत्यन्तं.

[6] Cf. सप्रथाः सर्वतः पृथुः N. 6. 7.

[7] Read यज्ञे.

[8] Space for a syllable left blank after मख.

[9] Perhaps to read प्रतिष्ठितेति.

[10] These few passages not quite clear. There is the figure 18 here to mark the end of the sūkta.

नराशंसम् । नरैः शंसनीयमतिशयेन घृष्टं पश्यामि सर्वतः पृथुतमं द्युलोकस्य सम्बन्धिनमिव सूर्यं महनीयसदनमिति ॥ (९)

---

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि ॥

ग्नेर्मरुद्भिः[1] साभागच्छेति[2] । कमन्यं मध्य[3]मादेवदिति[4] ॥

प्रतित्यम् । प्रति चारुमध्वरं सोमपानायाहूयसे । सोऽग्ने मरुद्भिः सहागच्छ ॥ (१)

नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि ॥

न हि[5] देवो न मर्त्यो महस्तव क्रतुं कर्म पारो[6] भवति । न त्वामतिशेतेऽन्यः कर्मणा प्रज्ञया वेति ॥

[1] Read अग्नेर्मरुद्भिः

[2] Read सहागच्छेति.

[3] Between म and ध्य there is another ध्य written and scored off.

[4] Not clear. In this verse, the commentary on the first two Pādas is missing. The first letter अ in the commentary on the 3rd Pāda is also missing. The scribe may have missed a line.

[5] Pratīka not given separately.

[6] Read परो.

नहि देवः । नहि देवो मर्त्यो वा महतस्तव कर्म तरति ॥ (२)

**ये म॒हो रज॑सो वि॒दुर्विश्वे॑ दे॒वासो॑ अ॒द्रुहः॑ । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥**

ये । ये महदन्तरिक्षं विदुः व्याप्ताः देवा मरु + +[1] हरति का इति[2] ॥

ये महः । ये मरुतो महान्तं लोकमन्तरिक्षं च जानन्ति व्याप्ता देवा द्रोहरहिताः ॥ (३)

**य उ॒ग्रा अ॒र्कमा॑नृ॒चुरना॑धृष्टास॒ ओज॑सा । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥**

ये[3] उद्‌गूर्णा अर्कमर्चनीयमिन्द्रं पर्यचरन् । अनाधृष्टा बलीनां[4] बलेन ॥

य उग्राः । य उद्‌गूर्णा अर्चनीयमिन्द्रमस्तुवन् बलेनान्यैरनभिभूताः ॥ (४)

**ये शु॒भ्रा घो॒रव॑र्पसः सु॒क्षत्रा॑सो रि॒शाद॑सः । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥**

ये शुशुभ्राः[5] । येऽलंकरणेः[6] शोभमाना घोररूपाः । घोरो जिघर्तेः ।

[1] Space for 2 syllables left blank. There is an ए mark after रु. But no consonant.

[2] A good portion of the commentary on this verse is missing.

[3] Pratika not separately given.

[4] Word perhaps not wanted.

[5] One शु not wanted.

[6] Read येऽलंकरणैः

घो वृणाते[1] । सुक्षत्रा बलिनः । रिशादसः । क्षत्रं क्षदेः शकलीकरणास्थात्[2] । अपिवा क्षत्रौणादिति[3] ॥

ये शुभ्राः । येऽलंकरणैः शोभमाना घोररूपाः सुबला रिशतामशितारः ॥ (५)

ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ॥

ये[4] । नाकः सूर्यः । नास्मिन्नकं सुखं भवतीति[5] । तस्य रोचने दिवि । ये देवा आसते ॥

ये नाकस्य । ये आदित्यस्य रोचने दिवि देवा वसन्ति ॥ (६)

य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम् । मरुद्भिरग्न आ गहि ॥

ये । ये चलयन्ति पर्वतान् । पर्वतश्शिलोच्चयान्[6] । मेघान्वा । तिरस्कुर्वन्ति च समुद्रं पार्थिवम् । अर्णवं उदकवन्तम् । अवर्णोक्तिः[7] । तिरः तरोराच्छादनार्थात्[8] । अव्ययमिति ॥

[1] Not intelligible. Perhaps वर्पो वृणातेः ।

[2] Read शकलीकरणार्थात्.

[3] Perhaps to read क्षत्र औणादिक इति or क्षरणादिति.

[4] Pratika is not separately given.

[5] Cf. कमिति सुखनाम । तत्प्रतिषिद्धं प्रतिषिध्यते । N. 2. 16.

[6] Read only शिलोच्चयान् for पर्वतश्शिलोच्चयान् or read पर्वतश्शिलोच्चयः । तान्.

[7] Perhaps to read अर्णः अर्तेः

[8] Perhaps to read तिरतेराच्छादनार्थात्.

य ईङ्खयन्ति । ये चलयन्ति पर्वतान् तिरस्कुर्वन्ति चोदकवन्तं समुद्रम् ॥ (७)

**आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न आ गहि ॥**

आ ये । य आतन्वन्ति रश्मिभिः प्राणिनो लोकां +[1] । तिरस्कुर्वन्ति[2] च समुद्रमोजसा ॥

आ ये । ये रश्मिसदृशैः प्रत्यक्षमारुतैरुदकं बलेन समुद्रं तिर आतन्वन्ति ॥ (८)

**अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ॥**

अभित्वा । निरुक्तम्[3] । अभिसृजामि त्वा पूर्वपानाय सोम्यं मधु सोममयम् । सोऽग्ने मरुद्भिस्सह गच्छेति[4] ॥

निपुणमतिषु धर्मस्ते युगेऽस्मिन्तन्नलभ्या
यदी . . . . विदथस्युर्हैत्व . स्ते भवन्ति ।
कृतथ च निरुक्तं जानते . . . न चैतत्
कृतमतिरपि कश्चिद्वैदिको वाक्यवित्स्यात् ॥[5]

[1] After लोकां one syllable mostly worm-eaten; may be identified with श्च.

[2] Folio 14*a* ends with ति.

[3] Cf. N. 10. 37. The words in the Nirukta are only very slightly different from what they are here.

[4] Read आगच्छेति. Here there is the figure 19 to mark the end of the sūkta.

[5] This stanza is very corrupt and it is not possible to reconstruct it correctly. In the first line न्त after युगेऽस्मि is not wanted.

अभि त्वा । अभिसृजामि त्वा पूर्वपानाय सोममयं मधु । सोऽग्ने मरुद्भिः सहागच्छेति ॥ (९)

ऋक्संहितायाः प्रथममध्यायं व्याकरोदिति ।
कुशिकानां कुले जातो माधवः सुन्दरीसुतः ॥

---

## प्रथमोऽध्यायः

---

In the second line for यदी read यदि. Then there must be two short syllables; in the Ms. they are mostly worm-eaten and are difficult to decipher. The व् mark in the second is visible; the first may be क or त. The lower half of वि and द worm-eaten. After हैं it is not certain if the following syllable is त्व or तु; the end is broken. This is the end of the first line on the page and the corner of the leaf is broken. One short syllable is thus missing. In the third line read कृतमथ for कृतथ. For जानते perhaps to read जानते ते.

# द्वितीयोऽध्यायः[1]

अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नधातमः ॥

अयं देवाय जन्मने । ऋभवः । उरुभान्तीति[2] आदित्यस्य रश्मयः । ते सुधन[3] आङ्गिरसस्य पुत्रा बभूवुः[4] । तेषां च नामानि ऋभुर्विभ्वा वाज इति । यदि वा त इमे मनुष्या एव सन्तस्तपसा शिल्पैश्च देवा + स्तेषयित्वा[5] मर्ताः सन्तो अभृतत्वं[6] आनशुः । तत्र ये गणा गा[7] देवाः तेषामेकवत् बहुवच्च निगमा भवन्ति[8] । जन्मशब्दो[9] मनुष्यवचनः । जायते भि[10] सः । अयं देवाय जन्मने स्तोमो विप्रेभिरासया आस्येन ।

[1] This is not in the Ms.

[2] Cf. N. 11. 15.

[3] Read सुधन्वन.

[4] बभूवुः slightly worm-eaten.

[5] Read देवांस्तोषयित्वा. A small space left blank between वा and स्ते, which must be filled by the anusvāra.

[6] Read अमृतत्वं.

[7] Not clear. Perhaps to read गणगताः or गणभूताः

[8] Cf. N. 11. 16.

[9] शब्दो mostly worm-eaten.

[10] Read हि.

अकारीति हृदये निर्मितत्वात् कृतवदपदिशति[1] । रत्नाधातमः[2] । स्तुता ह्यभवः[3] प्रयच्छन्ति रत्नानीति ॥

अयं देवाय । मेधातिथिः । अयं स्तोमो मनुष्यत्वमपहाय देवभूताय ऋभूणां गणाय मेधाविभिरस्माभिरास्येन अतिशयेन रत्नदाता क्रियते । (१)

**य इन्द्रा॑य वचो॒युजा॑ तत॒क्षुर्मन॑सा॒ हरी॑ । शमी॑भिर्य॒ज्ञमा॑शत ॥**

य इन्द्राय[4] वचोयुजौ शीघ्रौ । ततक्षुः अकुर्वन्[5] । मनसा संकल्पमात्रेण भवति[6] । हरी ते शमीभिर्महिः[7] शिल्पैर्यज्ञमाशत यज्ञभागं लेहिरे[8] ।

किमु श्रेष्ठः किं यविष्ठो न आजकन्[9] (ऋ. वे. १. १६१. १)

इति ॥

य इन्द्राय । ये इन्द्रार्थं वचनमात्रेण रथे युज्यमानौ कृतवन्तो बुद्धिमहत्तया अश्वौ ते शिल्पकर्मभिर्देवप्रीणनैर्यज्ञियं भागं प्राप्तवन्तः । (२)

**तक्ष॒न्नास॑त्याभ्यां॒ परि॑ज्मानं सु॒खं रथ॑म् । तक्ष॑न्धे॒नुं स॑ब॒र्दुघा॑म् ॥**

[1] त in कृत mostly worm-eaten.
[2] Read रत्नधातमः
[3] Read ह्यभवः
[4] The pratika is not given separately.
[5] अ mostly and कु partly worm-eaten.
[6] भवति does not seem necessary here.
[7] Read शमीभिः कर्मभिः
[8] Read लेभिरे.
[9] Read आजगन्.

तक्षन्[1] अकुर्वन्नश्विभ्यां परितो गन्तारं सुचारं रथम् । तक्षतैर्योगे[2] चतुर्थी । तक्षन् धेनुं सबर्बसां[3] ब्रह्मणस्पतये । सबः बुसेः सन्तत्यर्थात् । सन्तत्या संयुतं सबो वक्षः । उस्रे बर्जहमिति[4] ॥

तक्षन्नासत्याभ्याम् । अकुर्वन्नश्विभ्यां परितो गन्तारं शोभनाक्षद्वारं रथम् । अतक्षन् धेनुं च बृहस्पतये अमृतस्य दोग्ध्रीम् । (३)

**युवा॑ना पि॒तरा॒ पुन॑ः स॒त्यम॑न्त्रा ऋजू॒यव॑ः । ऋ॒भवो॑ वि॒ष्ट्य॑क्रत ॥**

युवाना । जीर्णावात्मीयौ पितरौ पुनर्युवानावकुर्वन् । सत्यमन्त्राः सत्या एवेषा[5] मन्त्राः नामत्रयविभक्ताः । कृतैः शिल्पैर्ह्येते स्तूयन्ते यमाश्विनो[6] । ऋजूयव ऋजुकामा अमायिनः । ऋभवो पिष्टी[7] विष्टयः । विषेस्तक्षणार्थात् । व्याप्ता इत्यपरमिति[8] ॥

युवाना पितरा । वृद्धावात्मीयौ पितरौ पुनस्तरुणावकुर्वन् । मन्त्रैरुच्यमानं सर्वं सत्यं येषां न भाक्तम् । ऋभव ऋजुकामा विष्टयः । तक्षणकर्मा विष्टिः । (४)

[1] The pratīka is not given separately.

[2] Read तक्षतेर्योगे.

[3] Read सबर्दुघां. The syllables र्बसां as written is very indistinct. This is the nearest approximation I could read the letters. What is written is clearly not र्दुघां.

[4] The text is corrupt. Perhaps to read सबः बुसेः सन्तत्यर्थात । सन्तत्या संयुतं सबो वक्षः । उस्रा सबर्दुघा इति । There are the roots बस् and बुस् in the Dhātupāṭha; but not in this meaning.

[5] Read एवैषां.

[6] The need for this word here is not clear.

[7] Read विष्टी.

[8] Perhaps to read इत्यपरे इति. Not so either in Skandasvāmin or Mādhava son of Veṅkaṭārya.

**सं वो मदासो अग्मतेन्द्रेण च मरुत्वता । आदित्येभिश्च राजभिः ॥**

सम्ग्मत[1] युष्माकं सोमाः स्तूयन्ते सवने इन्द्रेण च मरु+ना[2] आदित्यैश्च राभिः[3] । आर्भवं शंसति इत्युक्तमिति[4] ॥

सं वो मदासः । संगता युष्माकं सोमास्तृतीये सवने मरुत्वतेन्द्रेणान्यैश्चादित्यैः राजभिः । (५)

**उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ॥**

उत त्यम् । त्वष्टुरन्तेवासा ऋभवः । स त्वष्टा एकं चमसं स्वयं कृत्वा चतुरः कुरुतेत्येनान्[5] अन्वशासत् । तम+वतुरश्च[6] आशपितम्[7] । नवं[8] त्वष्टुर्देवस्य निष्कृतं त्वष्ट्रा देवेन निष्टस्तष्टम्[9] । अकुर्वंश्चतुरः पुनः ॥

उत त्यम् । अपि च तं नवं चमसं त्वष्ट्रा देवेन संस्कृतमेकं सन्तं पुनश्चतुरश्चमसान् कृतवन्तः स्थ । (६)

**ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते । एकमेकं सुशस्तिभिः ॥**

[1] The pratīka is not given separately.

[2] Space for a syllable left blank between रु and ना. Read मरुत्वता.

[3] Read राजभिः

[4] Quotation not traced. Cf. A. B. 4. 30.

[5] ते and त्ये partly worm-eaten.

[6] Space for one syllable left blank between म and व.

[7] Folio 14*b* ends with आश. The passage from तम corrupt. Perhaps to read तमृभवः चतुरश्चकार. Still some bit is evidently missing.

[8] व partly worm-eaten.

[9] Read निस्तष्टम् ।

ते नः । ते मह्यं रत्नानि यत्तन[1] सुन्वते त्रिरावृ . . . . सप्ततानि[2] । एकविंशतिमित्यर्थः ।

त्रिस्सप्त + + लिं + +[3] (ऋ. वे. १. १९१. १२)

त्रि सप्त[4] नामाघ्न्या बिभर्ति (ऋ. वे. ७. ८७. ४)

सप्त ग्राम्याः पशवश्चतुर्दश[5] चौषधयो ग्राम्या आरण्या इत्येकविंशतिर्भ- + + रत्नानि[6] । यदिवान्यान्या सप्तेभ्योऽवगन्तव्यानि[7] । श्रद्धापनार्थमुक्त- मेकमेकमिति । सुशस्तिभिः प्रशस्तैः[8] कर्मभिर्युक्तास्तुतिभिः प्रीता वा । अग्ने याहि सु + + भिरिति[9] ॥

ते नो रत्नानि । तेऽस्माकं रत्नान्याधत्तन त्रिरावृत्तानि सप्तसंख्यान्येक- विंशतिं सुन्वते यजमानायैकमेकं स्तुतिभिः । चतुर्दशौषधयः सप्त ग्राम्याः पशवः तान्येकविंशतिः इत्याहुः । (७)

[1] Read धत्तन.

[2] Space for two syllables left blank between वृ and सप्त. Read त्रिरावृत्तानि सप्तकानि.

[3] In प्त only प remains; त completely worm-eaten. Then two syllables are completely worm-eaten. They must be विष्पु. Then after लि two more syllables are completely worm-eaten; they must be ङ्गकाः । Read त्रिस्सप्त विष्पुलिङ्गकाः

[4] Read त्रिः सप्त.

[5] तु completely worm-eaten.

[6] Space for two syllables left blank between र्भ and रत्नानि. They must be वन्ति.

[7] Passage not quite clear.

[8] श partly worm-eaten.

[9] Space for two syllables left blank between सु and भि. They must be शस्ति.

अधारयन्त वह्नयोऽभजन्त सुकृत्यया । भागं देवेषु यज्ञियम् ॥

अधारयन्त[1] मर्त्या एव सन्तोऽधारयन्त प्राणानामृतत्वं[2] प्रापुः । वह्नयः कामानां प्रापकाः । अभजन्त च सुकृत्यया शोभनेन शिल्पेन । भागं देवेषु यज्ञियमिति[3] ॥

अधारयन्त । मनुष्यत्वे ऽपि नमता* (?) वोढारः । तथा एकचमस-चतुष्टयकरणादिकया शोभनया क्रियया देवेषु यज्ञियं भागं अभजन्त । (८)

---

इहेन्द्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि । ता सोमं सोमपातमा ॥

इह । इहेन्द्राग्नीश्चह्वे[4] । तयोरेतस्तोमं[5] कामरयामहे[6] । तौ सोमं भृशं पिबतं इति ॥

इहेन्द्राग्नी । इहेन्द्राग्नी उपह्वये । तयोरेव स्तोमं च कामयामहे । तौ हि सोमं अतिशयेन पातारौ । विरम्याभिधानादेकवचनबहुवचनयोः संगतिः । (९)

* The text of this portion is corrupt in all the MSS. नमता must be the corruption of अमृता. Perhaps to read मनुष्यत्वेऽपि अमृता अभूवन् or मनुष्यत्वेऽपि प्राणानाममृतत्वं प्रापुः ।

[1] The pratīka is not separately given.

[2] Read प्राणानाममृतत्वं.

[3] There is the figure 1 to mark the end of the Sūkta.

[4] Read इहेन्द्राग्नीरुपह्वये.

[5] Read तयोरेतत्स्तोमं.

[6] Read कामयामहे.

**ता य॒ज्ञेषु॒ प्र शं॑सतेन्द्रा॒ग्नी शु॑म्भता नरः । ता गा॑य॒त्रेषु॑ गायत ॥**

ता यज्ञेषु । तौ यज्ञेषु प्रशंसत स्तुतिभिः । तावेवेन्द्राग्नी शुंभत अलंकुरुत स्तोत्रैः । तावेव गायत्रेषु छन्दसु[1] गायत ॥

ता यज्ञेषु । तौ यज्ञेषु प्रशंसत इन्द्राग्नी । अलंकुरुत च स्तोत्रैः । तावेव गायत्रसामसु च गायत नरः । (२)

**ता मि॒त्रस्य॒ प्रश॑स्तय इन्द्रा॒ग्नी ता ह॑वामहे । सो॒म॒पा सोम॑पीतये ॥**

ता मित्रस्य । तौ मित्रस्य सख्युर्मम प्रशस्तये । प्रशंसितुमित्यर्थः । स्तोतुं[2] सोमं च पातुं हवामहे ।

या पृतनासु दुष्टरा । (ऋ. वे. ५. ८६. २)

इत्यत्र इन्द्राग्नी ता हयामहे[3] इति अ[4] विसृजति । तत्र हि तच्छब्दः प्रकृत + + रामशीनश्च[5] पूरक इति ॥

ता मित्रस्य । तौ मित्रस्य प्रशस्तये तयोरितरेतरविषयां मैत्रीं स्तोतुम् । इन्द्राग्नी तौ हवामहे सोमपानशीलौ सोमपानाय च । (३)

[1] Read छन्दस्सु.

[2] There is the word सोमपा in the original, for which there is no explanation in the commentary and the word स्तोतुं is unnecessary here. Perhaps the word is to be replaced by सोमस्य पातारौ or some such expression.

[3] Read हवामहे.

[4] Read न.

[5] Space for two syllables left blank between प्रकृत and राम. The passage is not clear.

**उग्रा सन्ता हवामह उपेदं सवनं सुतम् । इन्द्राग्नी एह गच्छताम् ॥**

उग्रा । उग्रौ भवन्तौ हवामहे प्रातस्सवने सुतं पातुम् । ताविभागच्छतामिति[1] ॥

उग्रा सन्ता । उग्रौ भवन्तौ हवामहे इमं सुतं सोममुप समीपे । ताविन्द्राग्नी इहागच्छताम् । (४)

**ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम् । अप्रजाः सन्त्वत्रिणः ॥**

तं[2] युवां महान्तौ सदसस्पती[3] च भवथः । सदो यज्ञः आस्तावो वा । तथा सति इन्द्राग्नी रकषतु उब्जतम्[4] । उ + तिर्वधकर्मा[5] । अप्रजा अप्रजातास्वन्त्वत्रिणो[6] राक्षसाः । अतिणोऽक्ति[7] दुर्बलानिति ॥

ता महान्ता । तौ महान्तौ इत्येतावान् परोक्षः । सदस्पती इन्द्राग्नी रक्षो हतम् । अप्रादुर्भूता भवन्तु अदनशीला राक्षसा अप्रजाताः वा । (५)

**तेन सत्येन जागृतमधि प्रचेतुने पदे । इन्द्राग्नी शर्म यच्छतम् ॥**

[1] Read ताविहागच्छतामिति.

[2] Read ता. The pratika is not separately given.

[3] स between द and स्प mostly worm-eaten.

[4] Read रक्ष उब्जतम् । म् in तम् mostly worm-eaten.

[5] One syllable after उ completely worm-eaten. It must be ब्ज.

[6] Read अप्रजातास्सन्त्वत्रिणो.

[7] Read अत्रिणोऽत्ति.

तेन । तेन प्रसिद्धेना[1] सत्येनाव्याजेन[2] जगत्पालनकर्मणा सहैव जागृतम् । सर्वेषां तेजसां प्रज्ञापके[3] अन्तरिक्षे[4] । अपि चेन्द्राग्नी शर्म शीर्येते:[5] गृहं वा सुखं वेति[6] ॥

तेन सत्येन । यत पदं ज्योतिषा मानुषान् प्रज्ञापयति तस्मिन् त्वदीये आधिपत्ये यथापूर्वं तेन सत्येन जागरणं कुरुतं इन्द्राग्नी । सुखं च यच्छतम् । (६)

---

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ॥

प्रातर्युजा । निरुक्तम्[7] । प्रातर्योजिना[8] विबोधयाश्विनाविभागच्छताम्[9] । अस्य सोमस्य पानाय ॥

प्रातर्युजा । प्रातर्गमनायोद्युक्तावश्विनौ स्तोतर्विबोधय । ताविहागच्छताममुं सोमं पातुम् । (१)

[1] Read प्रसिद्धेन.
[2] ए mark in जे partly worm-eaten.
[3] के looks like कें.
[4] रि and क्षे mostly worm-eaten.
[5] Read शीर्यतेः. The words शर्म यच्छतम् must have been left out.
[6] Here there is the figure 2 to mark the end of the Sūkta.
[7] See N. 12. 4.
[8] Printed editions of Nirukta read प्रातर्योगिना.
[9] Read विहागच्छताम् । The letter ग is partly worm-eaten.

या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ॥

या । यौ सुरथौ रथीरथमौ[1] + + भौ[2] देवौ दिविस्पृशौ[3] । स्व+त्र[4] भवत्युत्तरस्मिन्[5] सूत्रेन्तरिक्षे । अत[6]सूत्रनिसर्गम्[7] । अश्विनौ ता हवामहे ॥

या सुरथा । यौ सुरथावतिशयेन रथस्य नेतारौ भवतः उभौ द्युस्थानावश्विनौ तौ हवामहे । (२)

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥

या वाम् । या वं[8] कशा अश्वाजनिः[9] । कशिरायेष्टनार्थः[10] ।

[1] Read रथीतमौ.

[2] Two syllables worm-eaten; the first mostly and the second completely. The first must have the consonant त, a small part of which is retained. Read तौ उभौ.

[3] Folio 15*a* ends with दि । The letter शौ is mostly worm-eaten.

[4] Between स्व and त्र one syllable is mostly worm-eaten. It may be र्गो.

[5] The first syllable looks more like भु than like भ.

[6] Read अतः

[7] The passage after दिविस्पृशौ not intelligible.

[8] Read वां.

[9] Read अश्वाजनी. It may be noted that all the manuscripts of Ṛgarthadīpikā of Mādhava son of Veṅkaṭārya have also the reading अश्वाजनिः

[10] Perhaps to read कशिरावेष्टनार्थः. But no such meaning is given for the root in the Dhātupāṭha. Cf. N. 9. 19 for the etymology of कशा.

मधुमत्युदकवती[1] । तथा यज्ञं मिमिक्षतं[2] सिञ्चतम् । कमक्तं[3] सारक-मेव या मध्विति[4] ॥

या वां कशा । या युवयोरश्वाजनी मधु क्षरन्ती शब्दवती तयास्माकं यज्ञं सिञ्चतम् । (३)

नहि वामस्ति दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहम् ॥

नहि[5] । नहि वामस्ति दूरके । दूरेगन्तर्यमदूरभूपतेः[6] । यत्र रथेन गच्छतौ श्विनो[7] सोमिनो गृहम् । शीघ्राश्वयोर्न गन्तव्यं[8] दूरमिव भवतीति । गृहं गृह्णातीति ॥

न हि वामस्ति । न हि युवयोरस्ति दूरे किंचित् गृहं यत्र युवां रथेन गच्छथः अश्विनौ । यजमानस्य गृहं रथेन शीघ्रं गच्छतोर्न दूरे भवतीति । (४)

हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥

[1] अश्विना सूनृतावती not taken up in the commentary. This may be an omission in transcribing.

[2] The initial मि completely worm-eaten.

[3] The writing is not legible and the leaf is slightly worm-eaten here. It can also be read as कमुतं.

[4] From कमक्तं not intelligible.

[5] न completely worm-eaten.

[6] From दूरे not intelligible.

[7] Read गच्छथोऽश्विनौ.

[8] व्य mostly worm-eaten.

हिरण्यपाणिम् । हिरण्यपाणिं सुवर्णपाणिम् । हिरण्यं हरतेः । हितरमणीयं इति यास्कः[1] । पाणि[2] पिबतेः । पाणयतेर्वा[3] । कौषीतकम्—वत्सवित्रे[4] प्रज +[5] । तत्तत्य पाणी प्रविच्छेद[6] । तस्मै हिरण्मयौ प्रतिदधुः । तस्माद्धिरण्यपाणिः इति स्तुतः[7] इति । तत्र तदिति पाश्रत्रं[8] अपदिष्टमेव शाखायनब्राह्मणं[9] च भवति[10] । ऊतये रक्षणाय । सवितारः मुपह्वये[11] । स चेत्ता प्रज्ञापयिता । देवः[12] पदं स्थानं यत्र पादो निधीयते ॥

स देवता वसुवतिन्दधाति[13] (ऋ. वे. ७. १. २३)

युवा[14] श्रियमश्विना देवता ताम् (ऋ. वे. ४. ४४. २)

इति ॥

[1] Cf. N. 2. 10.

[2] Read पाणिः There is some space left blank between णि and पि.

[3] Read पणायतेर्वा. The second is what Yāska accepts. Cf. N. 2. 26.

[4] Evidently the beginning of the quotation is omitted in transcription.

[5] The syllable after प्रज not decipherable. It looks like भ्रुः

[6] Read प्रचिच्छेद.

[7] K. S. 6. 13. S'. B. 5. 4. 5. 22 ; 10. 4. 1. 6.

[8] Read प्राशित्रं.

[9] Read शाङ्खायनब्राह्मणं.

[10] Cf. अथ यत्र ह तद्देवा यज्ञमतन्वन्त तत्सवित्रे प्राशित्रं परिजह्रुः । तस्य पाणी प्रचिच्छेद । तस्मै हिरण्मयौ प्रतिदधुः । तस्माद्धिरण्यपाणिरिति स्तुतः । शा. ब्रा. ६. १३. Does the commentator take K. S. as distinct from S'āṅ. B. ?

[11] Read सवितारमुपह्वये.

[12] Perhaps to read देवता.

[13] Read वसुवनिं दधाति.

[14] Read युवं.

हिरण्यपाणिम्। "प्राशित्रं सवितुः पाणी प्रचिच्छेद। तस्मै तु देवा हिरण्मयौ पाणी प्रत्यदधुः" इति शाङ्ख्यायनब्राह्मणम *। सवितारमूतये उपह्वये। स देवता प्रकाशं कुर्वन् पदं प्रातरेव चेतयति पदनिधानयोग्यदेशं प्रकाशयति। (५)

**अपां नपा॑तमव॑से सवि॒तार॒मुप॑ स्तुहि। तस्य॑ व्र॒तान्यु॑श्मसि ॥**

अपां नपात्[1] पुत्रः। नानेन पततीति। ये मद्भ्यः[2] प्रातरुदेति तमपां नपातं अवसे स्सवितारं[3] उपस्तुहि। तस्य व्रतानि कर्माणि श्रोतुं कामवामहे[4]। व्रतं वरणीयमिति ॥

अपां नपातम्। योऽद्भ्यः प्रातरुदेति तं सवितारमुपस्तुहि। तस्य कर्माणि श्रोतुं कामयामहे। (६)

**वि॒भ॒क्तारं॑ हवामहे॒ वसो॑श्चि॒त्रस्य॒ राध॑सः। स॒वि॒तारं॑ नृ॒चक्ष॑सम् ॥**

विभक्तारम्। कौषीतकम्[5]। तस्यैतस्य पुरस्तात्[6] कामप्रो लोकोऽमृतं वै कामप्रममृतमेवास्य[7] तत्परस्तात्तद्यत् तदभृतं[8] एतत्तर्दर्चिः[9]

* Cf. Foot-note 10 previous page.

[1] The pratika is not separately given.

[2] Read ये अद्भ्यः

[3] Read अवसे सवितारं.

[4] Read कामयामहे.

[5] This passage is found only in S'. B. 10. 2. 6. 4—6.

[6] Read परस्तात्.

[7] मृ looks more like भृ. Yet it can also be read as मृ.

[8] Read तदमृतं.

[9] Read एतत्तदर्चिः

दीप्यते तदेतद्वसु चित्रा[1] राधस्ते तेष[2] सविता विहाभ्यः[3] प्रजाभ्यो विभजति ओषधीभ्यः[4] वनस्पतिभ्यो[5] भूय इव ह त्वेकाभ्यः प्रयच्छति कमनीय[6] इवैकाभ्यः तद्यदाभ्यो[7] भूयः प्रयच्छति का[8] ज्योक्तमा[9] जीवन्ति याभ्यः कमनीयस्तः[10] कमनीयः[11] । तदेतद्दचाभ्युक्तं विभक्तारं हवामहे[12] इति । तदेतत् सर्वा[13] दीर्घमन्न[14] तद्यदिदमाहुः दीर्घन्त आयुरस्तु सर्वमायुरेभीत्येष[15] ते लोक एतत्तेऽस्त्विति भैवैनं[16] तदाहुः[17] इति ॥

विभक्तारम् । वासयितुः पूज्यस्य धनस्य दातारं हवामहे सवितारं मनुष्याणां द्रष्टारम् । (७)

**सवाय आ नि षीदत सविता स्तोम्यो नु नः । दाता राधांसि शुम्भति ॥**

[1] Read चित्रं.

[2] Read राधस्तदेष.

[3] Read विभक्ताभ्यः

[4] Add अपि before ओषधिभ्यो.

[5] Add अपि before वनस्पतिभ्यो.

[6] Read कनीय.

[7] Read तयाभ्यो.

[8] Read ता.

[9] Read ज्योक्तमां.

[10] Read कनीयस्ताः

[11] Delete कमनीयः

[12] S'. B. quotes the entire stanza here.

[13] Read सर्वमायुः for सर्वा.

[14] Read दीर्घमनन्तं हि for दीर्घमन्न.

[15] Read सर्वमायुरिहीत्येष.

[16] Read हैवैतत्.

[17] तदाहुः to be deleted. The stanza is not separately commented upon. Thus far is the quotation from S'. B.

सखायः । सखाय उद्गातारः । आनिषीदत सविता अस्माभिः स्तोम्यः स्तोमेन योज्यः । क्षिप्रदाता[1] चांसारथांसि हवींक्ष्यलःकरोति[2] । सवित्रे होतुमिति ॥

सखायः । प्रस्तोतृप्रभृतय आगत्योपविशत सवितास्माकं स्तोतव्यः क्षिप्रमन्नानां दाता यजमान एनं स्तुतिभिरलंकरोति हविर्भिर्वा इति । (८)

**अग्ने पत्नीरिहा वह देवानामुशतीरुप । त्वष्टारं सोमपीतये ॥**

अग्ने[3] ॥

अग्ने पत्नीः । अग्ने देवपत्नीः इहोपावह कामयमानाः । त्वष्टारं च सोमपानार्थम् । (९)

**आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम् । वरूत्रीं धिषणां वह ॥**

आवाहाग्ने[4] ग्ना देवानां पत्नीः इहाभवसे[5] । होत्राग्नायीत्याहुः । युवतमाम्[6] । हारातीमादित्यस्य[7] पत्नीं वरूत्रं[8] धिषणाम् । छाया[9] ह वाजसनेयकं वा वै धिषिणा वाहीदं सर्वमिथमिति[10] ॥

[1] Fol. 15*b* ends with क्षिप्र.

[2] Read च राधांसि हवींष्यलंकरोति.

[3] The commentary is missing in the MS. for this stanza.

[4] The pratīka of the stanza is missing. Read आवहाग्ने.

[5] Read इहावसे.

[6] Read युवतम.

[7] The आ mark in मा and दि completely missing, as the leaf is broken. Read भारतीमादित्यस्य.

[8] Read वरूत्रीं.

[9] Here the first line ends and space for 4 syllables left blank at the end.

[10] The passage is corrupt from छाया. Reference to Vājasaneyaka is वाग्वै धिषणा वाचाहीदं सर्वमिद्धम् . श. ब्रा. ६. ५. ४. ५.

आ ग्ना अग्ने । आवहेहाग्ने देवपत्नीः रक्षणाय होत्रां युवतम आदित्यस्य पत्नीं वरणीयां सरस्वतीं च । (१०)

**अभि नो देवीरवसा महः शर्मणा नृपत्नीः । अच्छिन्नपत्राः सचन्ताम् ॥**

अहि नः[1] । अहि सवनामिस्याद्देव्यो[2] रक्षणेन महता च सुखेन नृपत्नीर्देवानां पत्नयोऽच्छिन्नपात्राः[3] अच्छिन्नपक्षाः । छन्दांसि हि देवपत्नयः । ताश्च पक्षिरूपाः इत्युक्तम् ॥

अभि नः । अभिसचन्तामस्मान् देव्यो रक्षणेन महता च सुखेन देवानां पत्न्यः अच्छिन्नपत्राः । (११)

**इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये ॥**

इह । स्पष्टार्थेति ॥

[4]उत्तरा दिगदसिद्धा । (१२)

**मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥**

मही द्यौः । मही महतीर्यौः[5] पृथिवी च अस्माकम् । पृथिवी प्रथिता । यदप्रथयत् तत्पृथिव्यै पृथिवित्वम्[6] । इमं यज्ञ

[1] Read अभिनः

[2] सवनमिस्यात् not intelligible. सचन्तामस्मान् must be the correct reading.

[3] Read पत्राः

[4] उत्तरा "इहेन्द्राणीम्" इति द्वादशी ऋक्.

[5] Read महती द्यौः

[6] Cf. T. B. 1. 1. 3. 6-7.

गच्छतीति[1] मिमिक्षतां स्वसारेण[2]। अपि वा मिमिक्षतामिति क्षतैः[3] प्रातिकर्मणः। पिपृतां चास्मान् पारयेतां हरीमहिः[4] भरणैः[5] ॥

महीं द्यौः। महत्यौ द्यावापृथिव्यौ अस्माकमिमं यज्ञं आगच्छतां पारयेतां चास्मान् भरणैः। (१३)

[1] After यज्ञ there are two syllables which can be made out as गच्छ. First something else was written; it was scord off and गच्छ written over it. Read यज्ञमागच्छतामिति. The last pāda is not explained. Here there is a long repetition from the commentary on R. V. I. 1. 8 up to R. V. 1. 2. 3. The entire matter I quote exactly as it is in the MS. The continuation begins on the first line of fol. 16*b*. The repeated matter is as follows:

दिविज्वलन्तं भृशं वर्धमानं स्वे दमे स्वे स्थाने सनमपितेव सूनवे पितावातिसूनुः स्थूयते यर्था पिता पुत्राय सूपचर एवं नस्सूपचर एधीति भ्रजसन्नेयकम्। सचस्वसेवस्वास्मान् स्वस्तये स्वस्वस्तीति भद्रनामा अविनाशिनामेति निरुक्तमिति सूक्तम्।

वायो। वायुर्वातिः वातिभ्य यमद्भिः संगतो निरुक्तं वायवाया हि दर्शनीये मे सोमा अरंकृता अलंकृताः तेषापिब शृणुनोह्वानमिति वायो वाय उक्थेभिराज्य प्रउगादिभिः शस्त्रैः यद्वा बहिष्पवमानादिभिः स्तोत्रैः जनन्ते स्तुवन्ति। त्वामच्छ त्वामाप्तुम एष हि सर्वेषु देवे वर्तते प्राणभूतः यद्वा त्वामच्छ त्वामहि प्राणो हि भौता प्राणएवोद्गाता जरितारः स्तोता नः जरति स्तुतिकर्मा क्रियतेरिति शाकपूणिः सुतसोमा अभिषुतसोम अहर्विदोऽक्षांस्तुतशास्त्राणि जानतो यजमाना इति वायो वायो तव प्रवृञ्चतीप्रञ्चतिर्दानकर्मा इष्टं प्रञ्चन्ता सुकृते सुदानव इति येनाजिह्वा धिनोतेः प्रीणनात् दधातेरिति यास्कः। जिगादिर्निर्गच्छति। दाशुषे उरूची महती उर्वञ्चती सोमपीतये सोमं पातुं। इन्द्रवायू। इन्द्रवायू इमे सुताः सोमाः उपागच्छतम् प्रयोभिरन्नैः उपाग। प्रयः प्रीणन.

Folio 16*a* ends with उपाग in the last line but one. There is a closing bracket after प्रीणन to show that the matter is to be deleted. But there is no opening bracket when the repetition begins.

[2] Read स्वसरेण.

[3] Read क्षेतेः

[4] Read भरीमभिः

[5] There is no इति here to mark the close of stanza.

**तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे ॥**

तयोरित्[1] । तयोरेव घृतवत् सारवत् पयो विप्राः द्विपादश्च-तुष्पादश्च[2] लिहन्ति[3] धीदिभिः[4] कर्मभिः । गन्धर्वस्य ध्रुवे पदे नभस्य पण्डितयोर्मासे[5] । गन्धर्व आदित्यो भवति । गौश्शब्दः । तां धारयतीति । वायुर्वा गन्धर्व इति ॥

तयोरित् । तयोरेव क्षरणवत् पयः सारं मेधाविनो वहन्ति कर्मभिरादित्यस्य ध्रुवे स्थाने अवस्थितम् । (१४)

**स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥**

स्योना । स्योना सिवेस्सन्तत्यर्थात् । इन्द्रस्योरुमाविश । स्योनः स्योनमिति विस्तीर्णो विस्तीर्णमित्येव तदानेति[6] वाजसनेयकम्[7] । निरुक्तं[8] तु—सुखा नः पृथिवी[9] भवानृक्षरा निवेशनी । ऋक्षरः कटकः ऋच्छतेः[10] । यच्छ[11] शर्म शरणं सर्वतः पृथिवीति[12] ॥

[1] त partly worm-eaten.
[2] The letters द, श्च and ष्पा mostly worm-eaten.
[3] ह mostly worm-eaten.
[4] Read धीतिभिः
[5] Not clear.
[6] Read तदाहेति.
[7] Cf. S'. B. 3. 3. 3. 10.
[8] See N. 9. 32.
[9] Read पृथिवि.
[10] A small portion not seen after ऋच्छतेः
[11] नः not seen after यच्छ.
[12] Read पृथु इति.

स्योना पृथिवि। सुखा पृथिवि भव कण्टकवर्जिता निवेशनी। ऋक्षरः कण्टकः ऋच्छतेः। यच्छ चास्मभ्यं सर्वतः पृथु गृहम्। (१५)

**अतो॑ दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्विचक्र॒मे। पृ॒थि॒व्याः स॒प्त धाम॑भिः॥**

अतः। अतः पृथिव्यादौ[1]। अवन्त्वस्मान्। यतो विष्णुर्विचक्रमे। विक्रमणस्यापादानं च पृथिवी। ततः पादस्योत्क्रमणात्। सप्तयामहित[2] सप्तभिश्छन्दोभिः। विष्णुमुखा वै देवाश्छन्दोभिरिमान् लोकाननपजय्यमभ्यजयन् (तै. आ. १०. १. १०) इति[3] ब्राह्मणम्[4]। विष्णुर्विषेर्व्याप्तिकर्मण[5] इति॥

अतो देवाः। अस्मात् स्थानादस्मान् देवा रक्षन्तु। ततो योऽनर्थ उत्पद्यते तस्मादवनम्। यतो विष्णुर्विचक्रमे यत्र विक्रमः कृतः। पृथिव्याः सप्तभिश्छन्दोभिः। पृथिवीमुपक्रम्य त्रीन् लोकान् विचक्रमे। त्रिभ्योऽपि लोकेभ्यो नास्मान् भयमुपगच्छतु इति। (१६)

**इ॒दं विष्णु॒र्वि च॑क्रमे त्रे॒धा नि द॑धे प॒दम्। समू॑ळ्हमस्य पांसु॒रे॥**

इदं विष्णुः। विष्णुर्वामनो भूत्वेमान् लोकांस्त्रिभिः क्रमैरभ्य जयदिति ब्राह्मणेषूक्तम्। तस्य विक्रममाणस्य पांसुरेव देवलोकत्रयमिदं[6]

[1] The word देवाः in the text is not taken here. Perhaps the reading should be अतः पृथिव्या देवाः

[2] Read सप्तधामभिः

[3] Space for a syllable left blank between जयन्नि and ति in जयन्निति as the leaf is bad.

[4] र् and आ marks in ब्रा and the syllable ण partly worm-eaten.

[5] Read विषेर्व्याप्तिकर्मण.

[6] देव seems unnecessary.

समूढं समाकृष्टमभवत्[1] । निरुक्तं तु विष्णुर्विशतेर्वा व्याश्नौतेर्वा[2] (नि. १२. १८) यदिदं किञ्च तद्विचक्रमे[3] विष्णुस्त्रेधा निदधे पदम् । पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहण[4] विष्णुपदे गयशिर-सीत्यौर्णवाहः[5] । समूढमस्य पांसुरे प्यायनेऽन्तरिक्षे । पदं न दृश्यते । अपि चोपमार्थे स्यात् । पांसुरूपवदत्र दृश्यत[6] इति ॥

इदं विष्णुः । त्रैलोक्यं विष्णुर्विचक्रमे । विक्रममाणश्च त्रेधा निहितवान् पदम् । तत्र यास्कः—पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णु-पदे गयशिरसि इत्यौर्णवाभः । संगतमस्य पांसुले पदे त्रैलोक्यम् ॥ (१७)

**त्रीणि पुदा वि चंक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥**

त्रीणि । त्रीणि पदा विक्रमे[7] विष्णुर्गोपा अदाभ्यः । ततः[8] पृथिव्या आरभ्य । धर्माणि अग्निहोत्रादीनि धारयन् । अपि वा रजांसि धर्माणि भूतानि[9] धारयन्निति ॥

[1] In समा, the letter स partly and म् of मा mostly worm-eaten.

[2] Read व्यश्नोतेर्वा.

[3] इदं विचक्रमे seems enough instead of यदिदं किञ्च तद्विचक्रमे.

[4] Read समारोहणे.

[5] Read वाभः । Cf. N. 12-19.

[6] After समूढमस्य पांसुरे, the passage is not clear. Perhaps something is left out.

[7] Read विचक्रमे.

[8] Read अतः

[9] भूतानि begins the last line, about 2 in. from the margin, as the leaf is narrow at the end.

त्रीणि पदा। त्रीणि पदानि विचक्रमे विष्णुर्गोपायिता अहिंस्यः पृथिवी-मारभ्य मनुष्याणां कर्माणि धारयन्। (१८)

**विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा॥**

विष्णोः। विष्णोः कर्माणि श्यत[1] यको[2] यैः। कर्माणि नाना-विधानि व्रतानि कर्माणि[3]। पस्पशे। परिबन्धनार्थाः[4]। इन्द्रस्य युज्यो योग्योऽनुगुणः[5]। सखेति॥

विष्णोः कर्माणि। विष्णोः कर्माणि पश्यत यैर्मनुष्याणां कर्माणि बध्नाति इन्द्रस्य नियोज्यः सखा। (१९)

**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्॥**

तद्विष्णोः। तद्विष्णोः[6] परमं पदं उत्तमं स्थानन्तृतीयम्[7]। सदा पश्यन्ति सूरयः स्तोतारः। यथा दिव्याततमभ्रादिकं[8] मनुष्याणां चक्षुः पश्यति[9] निरोधाभावाद्विशतदतमेवमिति[10]॥

[1] Read पश्यत.

[2] Read यतो.

[3] Perhaps to read यतो यैः व्रतानि नानाविधानि कर्माणि.

[4] Read परिबन्धनार्थः।

[5] नु partly worm-eaten.

[6] Folio 16*b* ends with तद्वि. The letter ष्णोः which begins the next leaf is mostly worm-eaten.

[7] न्तृ mostly worm-eaten.

[8] भ्रा mostly worm-eaten.

[9] प mostly worm-eaten.

[10] Perhaps to read निरोधाभावाद्विशददतरमेवमिति.

तद्विष्णोः। तद्विष्णोरुत्तमं स्थानं सदा पश्यन्ति प्राज्ञा अन्तरिक्षे विततमिव तेजः। यद्वा अन्तरिक्षे विततं यथा चक्षुः पश्यति। (२०)

**तद्विप्रा॑सो विप॒न्यवो॑ जागृ॒वांस॒: समि॑न्धते। विष्णो॒र्यत्प॑र॒मं प॒दम् ॥**

तत्। त + + + + + स्तोतारो[1] जागृवांसो[2] वह्निस्समिन्धते[3] तपोभिः कर्मभिश्च स्साधवन्ति[4]। विष्णोर्यत्परमं पदम्। तद्विप्रासो विपन्यव इत्यत्र समिन्धनं काष्ठैः प्रज्वलनमित्यतो न सृज्यत इति[5] ॥

तद्विप्रासः। तदुत्तमं पदं मेधाविनो विविधं स्तुवन्तः स्वप्नवर्जिताः कर्मभिः संदीपयन्ति यज्ञाख्यम्। (२१)

---

**ती॒व्राः सोमा॑स॒ आ ग॑ह्याशीर्व॑न्तः सु॒ता इ॒मे। वायो॒ तान्प्रस्थि॑तान्पिब ॥**

[1] From the beginning of the commentary on this stanza, which is towards the end of the line, the leaf is extremely damaged being worm-eaten. तत्। त—So much is decipherable. The next letters that are decipherable are स्तोतारो. Only small bits of two or three syllables are seen. It is not तद्विप्रास. It is perhaps तन्मेधाविन.

[2] वां mostly worm-eaten.

[3] वह्नि only a conjecture from what remains; the letters mostly worm-eaten. Perhaps to read वह्निं समिन्धते.

[4] Read कर्मभिश्च साधयन्ति.

[5] Here there is the figure 3 to mark the end of the Sūkta.

तीप्ताः[1] । तीप्रः[2] स्त्वरते समर्थस्स कार्योऽत्र च[3] ।

तीव्राः सोमासः । मदोत्पादनसमर्थाः सोमा आगच्छत आशिरेण युक्ताः । इमे सुताः सोमाः । वायो तान् प्रस्थितान् पिब । (१)

उभा देवा दिविस्पृशेन्द्रवायू हवामहे । अस्य सोमस्य पीतये ॥

स्पष्टार्थः ॥

उभा देवा । उभौ देवौ द्युस्थानौ इमौ हवामहे सोमपानाय इति । (२)

इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये । सहस्राक्षा धियस्पती ॥

नवोजमवा[4] मनो +[5] जूर्जवतेः । सहस्राक्षा[6] तेजस्विनौ । अपि वा बहुचक्षुषाविति[7] ॥

इन्द्रवायू । मनोवेगौ मेधाविनो हवन्ते रक्षणाय अनेकदर्शनौ कर्मपती । (३)

[1] Read तीव्राः

[2] Read तीव्रः

[3] Evidently a good portion of the commentary is missing. What remains is not clear. In र्यो, the आ mark in the end is mostly worm-eaten, also त्र. The letter त्र is only a conjecture.

[4] The beginning of the commentary on this stanza is missing. This is how it begins after स्पष्टार्थः ।

[5] The letter at the end of the line after मनो has a hole in the centre and cannot be deciphered. Perhaps मनोज is what was meant to be written.

[6] Commentary on विप्रा हवन्त ऊतये missing.

[7] Commentary on धियः पती missing.

मित्रं वयं हवामहे वरुणं सोमपीतये । जज्ञाना पूतदक्षसा ॥

मित्रम् । जज्ञानो[1] जननैः प्रादुर्भवन्तौ भूयोभूयः ।

ब्रह्म जज्ञानं प्रथमं पुरस्तात् (सा. वे. १. ३२१) इति[2] ।

मित्रं वयम् । मित्रावरुणौ प्राज्ञौ शुद्धबलौ सोमपानाय हवामहे इति । (४)

ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥

ऋतेन । ऋतेन सत्येन अमाययैव । ऋतस्य महतः[3] ।

ऋतेन । सत्येन यौ सत्यस्य वर्धयितारौ सत्यस्य ज्योतिषः पती तौ मित्रावरुणौ हुवे । (५)

वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नः सुराधसः ॥

मरुत्वन्तं हवामह इन्द्रमा सोमपीतये । सजूर्गणेन तृम्पतु ॥

उत्तरो द्वृचः[4] स्पष्टः[5] । सजूः संहतः[6] । सह जुषत इति । जुषिः सेवाकर्मेति ॥

[1] Read जज्ञाना.

[2] The remainder of the commentary on this stanza missing.

[3] There is a portion missing in the commentary on this stanza.

[4] द्वृचः very indistinct and चः partly worm-eaten. These two syllables are given here only as a conjecture.

[5] But he is commenting on the second half of the second stanza.

[6] Writing not distinct. संहतः only a conjecture. सहितः may be a better reading; but that is not what is written.

वरुणः प्राविता । वरुणः प्रकर्षेण रक्षको भवतु । मित्रश्च विश्वैः पालनैः । तावस्मान् कुरुतां च स्वन्नान् ॥ (६)

मरुत्वन्तम् । मरुद्भिः सहितमिन्द्रमाहवामहे सोमपानाय । मरुद्गणेन सहितः सोमेन तृप्यतु ॥ (७)

इन्द्र॑ज्येष्ठा॒ मरु॑द्गणा॒ देवा॑सः॒ पूष॑रातयः । विश्वे॒ मम॑ श्रुता॒ हव॑म् ॥

इन्द्रज्येष्ठाः । तामामन्त्रणानि[1] पञ्च[2] । इन्द्रो येषां श्रेष्ठः । पूषा तेषां[3] रातिः ज्ञातिः । मरुत्वन्तमिति त्रिबस्य[4] मरुत्वानिन्द्रो[5] दैवतम् । श न शब्दस्तु[6] पञ्चस्पृक्षु[7] मरुत्सु पर्यवस्यति[8] विश्वान् हवामह इति[9] ॥

इन्द्रज्येष्ठाः । इन्द्रनेतृकाः पूषज्ञातिका मरुतो देवास्ते सर्वे मम श्रृणुताह्वानम् ॥ (८)

[1] Perhaps to read एतान्यामन्त्रणानि.

[2] The five words are इन्द्रज्येष्ठाः, मरुद्गणाः, देवासः, पूषरातयः and विश्वे.

[3] Read येषां.

[4] The middle letter worm-eaten. ब is the nearest approximation. Read त्रिकस्य.

[5] नि worm-eaten.

[6] After श there is another letter in the line and it is mostly worm-eaten. It looks like the औ mark. न is what begins the next line. The reading must be विश्वशब्दस्तु.

[7] Read पञ्चस्वृक्षु or better पञ्चस्वप्यृक्षु.

[8] The passage is corrupt. It is not clear what word the commentato speaks as finally meaning Maruts in the five verses. The Devatā for verses 7-9 is Indra accompanied by Maruts and for verses 10-12, it is Vis′ve devas. Perhaps the commentator is speaking of the word विश्व. Cf. B. D. 4. 8.

[9] This is in verse 10 below.

हत वृत्रं सुदानव इन्द्रेण सहसा युजा । मा नो दुःशंस ईशत ॥

हत वृत्रम् । वृत्रवधे उद्युक्तान् मरुतो ब्रूते । हत वृत्रं सुदानव उदाराः । दानुर्दानम् । अपि वा बलिनः । दानुः खण्डनम् । इन्द्रेण युजा सहसा[1] चात्मीयेन बलेन । मा नो दुरशंसो वृत्र ईष्टे । दुर्बुद्धिदुरशंस[2] इति ॥

हत वृत्रम् । हत वृत्रासुरं सुदानाः इन्द्रेण सहायेन बलवता सह । मास्माकं दुर्वचनो वृत्र ईशिष्ट ॥ (९)

विश्वान्देवान्हवामहे मरुतः सोमपीतये । उग्रा हि पृश्निमातरः ॥

विश्वान् । विश्वान् देवान् हवामहे मरुतः सोमपानार्थय[3] । उग्रा हि पृश्निमातरः । पृश्निर्माध्यमिका वाक् । पृश्निवर्णाः[4] । पृश्निः पृश्नातीति यास्क[5] इति ॥

विश्वान् देवान् । वैश्वदेवस्तृच उक्तः । मरुत्सु च विश्वशब्दो दृश्यते । विश्वान् देवान् सोमपानाय हवामहे । उद्गूर्णा हि पृश्निमातरः । पृश्निर्वै पयः पयसो मरुतो जातः—इति ब्राह्मणम् ॥ (१०)

[1] इन्द्रेण युजा सहसा mostly worm-eaten ; can just be deciphered.

[2] Read दुर्बुद्धिर्दुरशंस.

[3] Read सोमपानाय or सोमपानार्थम्.

[4] Evidently something is missing.

[5] Cf. पृश्निरादित्यो भवति । प्राश्नुत एनं वर्ण इति नैरुक्ताः । संस्प्रष्टा रसान् । संस्प्रष्टा भासं ज्योतिषाम् । संस्पृष्टो भासेति वा (नि. २. १४). Perhaps to read प्राश्नोतीति यास्कः ।

**जयंतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ॥**

जयतामिव[1] । जयतामिव घोषो मरुताम् । तन्यतुश्शब्दः । एवेति[2] धर्षः । तन्यतुः तनत्यतेः[3] शब्दकर्मणः । यं न्दा[4] । शुभं याथाना[5] नरः । शुभं[6] यन्ति मरुतोऽलंकृता इति ॥

जयतामिव । सैनिकानामिव शब्दो मरुतां गच्छति धृष्णुः यदा यूयं कल्याणं गच्छत नेतारः ॥ (११)

**हस्काराद्विद्युतस्पर्यतो जाता अवन्तु नः । मरुतो मृळयन्तु नः ॥**

हस्कारात् । हस्काराजभास्करात्[7] । हसिर्दीप्तिकर्मा । वि + तोसि द्योतमानात्[8] । अतोऽन्तरिक्षात् परि जाता अस्मानवन्तु । मरुतोऽस्मभ्य[9] मृळयन्तु ॥

हस्कारात् । अस्मादन्तरिक्षाज्जाता मरुतो विद्योतनानन्तरं वृष्ट्यभावजनितात् हस्कारादस्मान् रक्षन्तु । मरुतः सुखयन्तु अस्मानिति ॥ (१२)

[1] ज mostly worm-eaten.

[2] Read एति.

[3] Read तनयतेः

[4] Read यत् यदा.

[5] Read याथना.

[6] In नरश्शुभं, the letter श्शु mostly worm-eaten.

[7] Perhaps to read हस्कारात् instead of हस्काराजभास्करात्.

[8] After कर्मा, the letter वि is clear. Then there is one letter more in the line which is completely gone, as the end of the leaf is broken. तोसि is what begins the next line. Before तो there is space for a letter, but no letter seems to have been written there. Perhaps to read विद्युतः विद्योतमानात् ।

[9] Read मरुतोऽस्मभ्यं.

**आ पूषन् चित्रबर्हिषमाघृणे धरुणं दिवः । आजा नष्टं यथा पशुम् ॥**

भूपूषान्[1] । पूषा पोषयतीति । तस्य प्रत्यक्षरूपं पृथिवीव सोममहरदजपूषन्[2] । चित्रबर्हिषम् । से + बर्हिः[3] पर्व । अपि वा पत्रम् । आघृणीरुदारः[4] दयापरः । आहतघृणिः[5] (नि. ५. ९) इति यास्कः । घृणिर्जिघर्तेः क्षरणार्थात् । धारकं दिवः । यथा नष्टं पशुमाहरति कश्चिदिति । सोमाहरण[6] इत्युक्तं ब्रूतेः उत्तर +[7] । अभृतसे + न्तुष्टाव[8] ॥

आ पूषन् । आनय पूषन् पणिभिरपहृतं सोमं आगतदीप्ते धारकं द्युलोकस्य । यथा नष्टं पशुं त्वमानयसि ॥ (१३)

**पूषा राजानमाघृणिरपगूळ्हं गुहा हितम् । अविन्दच्चित्रबर्हिषम् ॥**

पूषा राजानमिति स्पष्टार्थेति ॥

पूषा राजानम् । पूषा सोममाघृणिः असुरैरपगूढं गुहायां निहितं अविन्दत यस्मै चित्रबर्हिः स्तीर्यते ॥ (१४)

[1] Read आ पूषन् ।

[2] Passage not clear.

[3] After से a letter is completely worm-eaten. Page 17*a* ends with this. बर्हिः is what begins the next page.

[4] Perhaps to read आघृणे । आघृणिरुदारः ।

[5] Read आगतघृणिः ।

[6] ह mostly worm-eaten.

[7] Perhaps to read इत्युक्तं ब्रूते उत्तरया. After र one letter is completely worm-eaten.

[8] Here अ is clear ; the botton of भृत is retained ; the ए mark in से can scarcely be deciphered ; स part in it is clearer. Then one letter is completely worm-eaten and the line ends. न्तुष्टाव is the beginning of the next line. The passage is not clear.

उतो स मह्यमिन्दुभिः षड्युक्ताँ अनुसेषिधत्। गोभिर्यवं न चर्कृषत् ॥

उतो अपि च[1] । स पूषा । मह्यमिन्दुभिः दीप्तैः स्वरश्मिहः[2] । अपिवा हृतैः सोमैः । पड्तृन्यूक्ताननसेषिधत्[3] अनुक्रमेण पुनः पुनः + +[4] काल[5] कृषति । यथा[6] भूम्यां उप्तं यवं[7] गोभिः कृषति[8] । यवं कृष्टे उप्यवश्चादविकृषन्ति । तदुक्तमृषिणैतरन्यं मधुनास्तय संसारस्या अधिमाना-स्वचकृषुरिति[9] ॥

उतो स मह्यम् । अपि च स पूषा मह्यं पणिभ्य आहृतैरिन्दुभिः षड्तून् यथापूर्वं युक्ताननुक्रमेण रुन्धन् यथा यवान् भूम्यामुप्तान् प्ररोहार्थं षड्गवादिना हलेन कृषन्ति तद्वदनुक्रमेण पुनः पुनः ऋतून् प्रवर्तयतु अमरणाय इति ॥ (१९)

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः ॥

अम्बयः अम्बयो मातरः । इह त्वप[10] पर्यवस्यति । कौषीतकम्—अम्बयो यन्त्यध्वभिरिति । आपो वा अम्बयः[11]— इति । कथं[12] यन्ति ।

[1] The pratīka is not separately given.
[2] Read स्वरश्मिभिः
[3] Read षड्तून् युक्ताननुसेषिधत् ।
[4] After पुनः पुनः space for two or three syllables left blank.
[5] After काल there is a hole in the leaf. Perhaps to read हलेन.
[6] यथा partly worm-eaten.
[7] वं mostly worm-eaten; the letter has to be conjectured from the context.
[8] कृ partly worm-eaten.
[9] The passage after पुनः पुनः very corrupt and mostly unintelligible.
[10] The letter after इहत्व not distinct. The top is प; there is something below. Read इह त्वप्सु.
[11] K. B. 12. 2.
[12] The anusvāra in थं worm-eaten.

अध्वरिर्मार्गैः[1] । अध्वा महन्तेः[2] । जामयो बन्धवोऽध्वरमिच्छताम् । जमतिर्गत्यर्थः । पृञ्चतीर्मधुना पयः संपृञ्चन्त्यो मधुना रसेन गवामोषधीनां च । पयस्सारम् । पयः पिबतेः[3] । इन्द्राय षट्सहस्राण्यवोञ्वं[4] प्रजापतिः प्रायच्छत् । ता मम्बयः[5]—इति शाख्यायनकम्[6] । स वा अन्नं मे प्रयच्छेमा नु म आपः प्रयच्छाथ[7] न जिजनिष्य[8] इति । तस्मै च षट्सु सहस्राण्यपि तं प्राच्छत्तस्यै[9] षट् श्लो +[10]

न ता अन्यः प्रातरति[11] नैता विष्णातुमर्हति ।
वह[12] वहन्त्यस्मै सर्वतस्ता मधु क्षीरं घृतंन्दधि[13] ।

षषट्सहस्राण्यम्बयस्ताः[14]—इति[15] ॥

[1] Read अध्वभिर्मार्गैः

[2] Perhaps to read अध्वा हन्तेः

[3] पिब mostly worm-eaten.

[4] In षट्सहस्र, the letters ट् and स hardly decipherable; it is only a conjecture. The word after षट्सहस्राणि not intelligible.

[5] Read ता अम्बयः

[6] The passage is a bit corrupt. S'āṭyāyana Brāhmaṇa not yet available except by citiation.

[7] Not clear if the letter is थ or ध.

[8] Perhaps to read only जनिष्य.

[9] After सहस्राण्य, the letters are mostly worm-eaten till स्यै; but can be made out with difficulty.

[10] After श्लो a letter completely worm-eaten. Read श्लोकः

[11] Read प्रतरति.

[12] Not wanted.

[13] Read घृतं दधि.

[14] Omit one of the two ष syllables in the beginning.

[15] Source not given. Passage very corrupt. Mādhava son of Veṅkaṭārya also quotes it.

अम्बयो यन्ति । अत्र शाट्यायनकम् । तस्यैष श्लोकः—

न ता अन्यः प्रतरति नैता विष्णातुमर्हति ।
वहन्त्यस्मै सर्वतस्ता मधु क्षीरं घृतं दधि ॥

षट्सहस्राण्यम्बयः—इति । इमाह वै ता अम्बयो नाम—इत्यादिना । अम्बयो मार्गे गच्छन्ति यज्ञमिच्छतां जामिस्थानीया मधुरेण रसेन प्रत्यक्षमुदकं संपृञ्चन्त्यः ॥ (१६)

अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥

अमूः । अमूर्या उपवर्तन्ते सूर्ये । वाभिर्वा[1] सह[2] सूर्यो वर्तते[3] । ता तः[4] + + + +[5] यज्ञमिति ॥

अमूर्याः । अमूर्या उपभवन्ति सूर्ये याभिर्वा सूर्यः सह भवति ता अस्माकं यज्ञं गच्छन्तु ॥ (१७)

अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं हविः ॥

अपः । अपो देवीरुपह्वये । यत्रास्माकं पिबन्ति गावस्तृषिताः । ताभ्यः सिन्धुभ्य[6] कर्तव्यं हीवः । सिन्धवः स्यन्दनात्[7] इति ॥

[1] Read याभिर्वा.

[2] स completely worm-eaten.

[3] ते mostly worm-eaten.

[4] Read ता नः

[5] After नः, the ए mark of the next syllable is seen. Then about four or five syllables are completely worm-eaten. In the first syllable there appears to be a र्; perhaps to read प्रेरयन्तु.

[6] Read सिन्धुभ्यः

[7] See N. 9. 26.

अपो देवीः । अपो देवीरुपह्वये यासु गावः पिबन्त्यस्माकं ताभ्यो हि कर्तव्यमस्माभिर्हविः ॥ (१८)

**अप्स्व१न्तरमृतमप्सु भेषजमपामुत प्रशस्तये । देवा भवत वाजिनः ॥**

अप्सु अमृतमन्नमयेन न क्रियते[1] । अपि वा रसोऽमृतम् । अमृतं वा आपः । तस्मात्[2] अद्भिरवतान्तमभिषिञ्चति[3] — इति ब्राह्मणम्[4] । दप्स्वेव[5] भेषजं भवति । यत् भेषजं मे माषधीषु[6] परिणतं भवति तासामपामुत प्रशस्तये देवा भवत वेगयुक्ताः । देवाः स्तोतारः । दिविः स्तुत्यर्थः । वाजी वेजनवानिति[7] यास्कः[8] । वागादयो वात्मीया देवा इति ॥

अप्स्वन्तः । अपामन्तरमृतम् । अमृतं वा आपः । तस्मादद्भिरवतान्तमभिषिञ्चन्ति — इति ब्राह्मणम् । अप्स्वेव भेषजं विविधौषधीषु प्रादुर्भूतम् । अपां स्तोत्राय इन्द्रियाणि बलयुक्तानि भवत ॥ (१९)

**अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।**
**अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥**

[1] Not clear.

[2] स्मा mostly worm-eaten.

[3] After तस्मादत् the three syllables till तान्त completely worm-eaten. Perhaps to read षिञ्चन्ति.

[4] Not traced.

[5] Read अप्स्वेव.

[6] Read भेषजं ओषधीषु.

[7] Page 17*b* ends with वाजी वे.

[8] N. 2-28; 3-3; 10-31.

अप्सु । सोमेनायमर्थ उपादिष्ट इति स्वयमृषिरुपदिशति । अप्सु मे सोमोऽब्रवीत् दन्तः[1] । सन्ति विश्वानि भेषजानीति । तथाग्निं[2] चिद्विश्वेशंभुवं[3] विश्वेषां सुखस्य भावयितारमनुष्णत्वात् । अपि च स्वरूपेनैवापि[4] । आपो विश्वभेषजीः अब्रवीत् । आप इति द्वितीयान्तमप्यस्ति ॥

अप्सु मे । ओषधीशः सोमः अपामन्तः विश्वानि भेषजानि सन्तीति मामब्रवीत् । अग्निं च सर्वस्य सुखस्य भावयितारं अप्सु स्थितम् । स्वरूपेण च उदकानि विश्वभेषजानि उवाच ॥ (२०)

आपः॑ पृणी॒त भे॑ष॒जं वरू॑थं त॒न्वे॒३॑ मम॑ । ज्योक् च॒ सूर्यं॑ दृ॒शे ॥

आपः । आपः । प्रयच्छत भेषजम् । वरूथं वारकमुपद्रवाणाम् । मम तन्वे शरीराय । ज्योक् चिरं च । मम सूर्यं दृष्टम्[5] । अरोगो जीवन् शक्नोति[6] सूर्यं दृष्टम्[7] । तनुस्तनेः[8] चलनार्थादिति[9] ॥

आपः पृणीत । आपः प्रयच्छत भेषजमुपद्रवाणां शरीरस्य च रक्षाभूतम् । चिरं च सूर्यं मां द्रष्टुं कुरुत ॥ (२१)

[1] Read अन्तः

[2] था mostly worm-eaten.

[3] Read तथाग्निं च विश्वशंभुवं.

[4] स्व mostly worm-eaten. Read स्वरूपेणैवापि.

[5] Read द्रष्टुम् .

[6] The leaf above the letters वन् शक्नोति worm-eaten. The letters slightly injured.

[7] Read द्रष्टुम्.

[8] Read तनूस्तनेः

[9] The derivation in Nirukta is गौरत्र तनूरुच्यते । तता अस्यां भोगाः । There is no such root in the Dhātupāṭha, which has only तनु विस्तारे (8. 1) and तनु श्रद्धोपकरणयोः (10. 296.)

इ॒दमा॑पः॒ प्र व॑हत॒ यत्किं च॑ दुरि॒तं मयि॑ ।
यद्वा॒हम॑भिदु॒द्रोह॒ यद्वा॑ शे॒प उ॒तानृ॑तम् ॥

इदम् । इदमापः प्रवहतापनयत । प्रभवन्त्यः । यत्किञ्चिदुरितं[1] मयि । दुरितं दुरागतं पापम् । यद्वाहमभिदुद्रोह अद्रोग्यव्येभ्यः[2] पित्रादिभ्यः । यद्वा शप्तवानस्मि । अनृतमसत्ये[3] + + तवानस्मि शपथमित्यर्थः । तदप्यपनयत इति ॥

इदमापः । इदं दुरितमापः अपनयत यत्किंच मय्यस्ति । यद्वा अहमद्रोग्धव्येभ्यः पित्रादिभ्यः अभिदुद्रोह । यद्वा शप्तवानस्म्यनृतम् । अनृते अर्थे शपथं कृतवानित्यर्थः ॥ (२२)

आपो॑ अ॒द्यान्व॑चारिषं॒ रसे॑न॒ सम॑गस्महि ।
पय॑स्वानग्न॒ आ ग॑हि॒ तं मा॒ सं सृ॑ज॒ वर्च॑सा ॥

आपः । आपोऽहमद्यान्वचारिषं स्नातुमनुप्रविष्टोऽस्मि । तासां रसेन च संगतास्मि[4] । अपा[5] रसेन सिक्ता इत्यर्थः । पयस्वानप्सु वर्तमानस्त्वमग्न

[1] Read यत्किञ्चिद्दुरितं.

[2] Read अद्रोग्धव्येभ्यः

[3] After त्ये two syllables are completely gone, the leaf being worm-eaten. The ए mark preceding the consonant for the first syllable is in tact. The second must be उ, the end of the tail being seen. Probably what was written was अनृतमसत्येर्थे उतवानस्मि and to be read अनृतमसत्येर्थे उक्तवानस्मि.

[4] Read संगता स्मः or संगतोऽस्मि.

[5] Read अपां.

आगच्छ । तेन रसेन युक्तं तं मा संसृज स्नातं वर्चसा । वर्चो वृणक्तेस्तेजो-विशेषः ॥

अग्ने धत्ते तिवि[1] वर्चः पृथिव्याम् (ऋ. वे. ३. २२. २)

इति ।

आपो अद्य । उदकान्यद्यान्वचारिषं अपां रसेन च संगताः । उक्ता एक-वचनबहुवचनयोः संगतिः । रसवानग्ने मत्समीपमागच्छ । तं मां त्वं वर्चसा संसृज अप्सु स्थित्वा इति ॥ (२३)

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥

सं मा । सं सृज मामग्ने स्नातं वर्चसा । सं प्रजया । समायुषा तं मा जानीयुर्देवा[2] इन्द्रश्च सह[3] ऋषिभिरिति[4] ॥

सं माग्ने । संसृज मामग्ने वर्चःप्रभृतिभिः । तं मां देवादयश्च जानीयुः ॥ (२४)

---

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।
को नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥

[1] Read यत्ते दिवि.

[2] जा mostly worm-eaten.

[3] स mostly worm-eaten.

[4] Here there is the figure 4 to mark end of the Sūkta.

हरिश्चन्द्रो ह वैधसः (ऐ. ब्रा. ७. १३) इति ब्राह्मणमनुसन्धेयम् । तत्र शुनश्शेपो यूपे बद्धः कादिशीकः[1] कं देवमुपयावानिति[2] निचिकित्सति[3] कस्य नूनमिति । तस्या[4] प्राजापत्यत्वं निरुक्तत्वात् । तत्र कः कतम इति द्वाभ्यां पदाभ्यां[5] प्रश्ने कश्चन विशेषो भवति ।

को मृळाति कतम आगष्ठ[6] (ऋ. वे. ४. ४३. २)

को मा ददर्श कतमः स देवः (ऋ. वे. १०. ५१. २)

इति । तस्य[7] नूनं इदानीम् । कतमस्य अमृतानां मध्ये न[8] मनामहे उच्चारयाम[9] । चारु देवस्य नाम्य[10] । को मां मुमूर्षुम् । पुरपि[11] महत्या अस्यै[12] पृथिव्यै । दात् दद्यात् । अहममृतस्सन् पितरं च पश्येयं मातरं च । अपर्यवसितार्थत्वात् आख्यातमुदात्तम् । दृशेयमिति चवायोगे प्रथमा[13] इति चाधीमहे । यत्राख्यातयोरितरेतरापेक्षा नास्ति[14]

[1] Read कान्दिशीकः

[2] Read देवमुपधावानीति.

[3] Read विचिकित्सति.

[4] Read तस्याः

[5] ति द्वाभ्यां पद ; here there is a long hole in the leaf above the letters, the leaf being worm-eaten. But the letters are only very slightly affected.

[6] Read आगमिष्ठः

[7] Read कस्य.

[8] न not wanted.

[9] Written first उच्चारयामा; then the आ mark in मा scored off.

[10] Read नाम.

[11] Read पुनरपि.

[12] स portion in स्यै worm-eaten.

[13] P. 8. 1. 59.

[14] Page 18. a ends here.

तत्र[1] द्वेदप्युदात्ते भवतम:[2] । यत्र[3] त्वपेक्षा तत्र विवक्षायां पूर्वमुदाकम्[4] । अविवक्षितश्चेत् सोऽर्थोऽनुदात्तमेवेति वैय्याकरणा इति ॥

कस्य नूनं शौनःशेपम् । कः कतम इति प्रजापतिं पृच्छति । इदानीं देवानां मध्ये कस्य शोभनं नाम वयमुच्चारयामः । स प्रजापतिः मुमूर्षूनस्मान् पुनरपि महत्यै पृथिव्यै ददातु । ततोऽहं मातापितरौ पश्येयम् ॥　　　(१)

**अ॒ग्नेर्व॒यं प्र॑थ॒मस्या॒मृता॑ना॒ं मना॑महे॒ चारु॑ दे॒वस्य॒ नाम॑ ।**
**स नो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात्पि॒तरं॑ च दृ॒शेयं॑ मा॒तरं॑ च ॥**

अग्नेः । तं देवमग्निं निश्चित्य तमेतया तुष्टाव[5] । तत्र तच्छब्देन संसृष्टत्वात् दादित्याख्यातं[6] ददात्वित्यर्थे । दृशेयमित्याख्यातमपि वाक्य-संयोगात् भिन्नार्थम् । अतो न सृजति शाकल्यः[7] । प्रथमः प्रथते[8] । निरुक्तं तु प्रथमं प्रथत[9] इति ॥

[1] तत्र mostly worm-eaten.

[2] Read द्वे अप्युदात्ते भवतः

[3] य mostly worm-eaten.

[4] Read पूर्वमुदात्तम्.

[5] It is not certain if it is तुष्टाव or नुष्टाव. Only the bottom half of the first letter is clear. The top portion is worm-eaten and there is a long break in the leaf above the line ; no other letter is affected by this break.

[6] After संसृष्ट till दादि the leaf is completely broken. त्वा is completely gone. There is only a point in the first द् of द्दा in त्वाद्दादि visible. The text can be re-constructed from this.

[7] It looks more like शाकल्यं. There is only one small circle after ल्य but there is a dot below it.

[8] Read प्रथतेः

[9] What is found in Yāska's Nirukta is प्रथम इति मुख्यनाम । प्रतमो भवति. (२. २२.)

अनया[1] गता उत्तरा[2] इति ॥ (२)

अभि त्वां देव सवितरीशांनं वार्याणाम् । सदावन्भागमीमहे ॥

अभि । अभीमहे याचामहे । त्वा देव सवितरीशार्धेनानजम्[3] । सदा सर्वदा । अवनी[4] रक्षितः भागं भजनीयं धनम् । यदद्य भाग[5] विभजासिद्य[6] इति ॥

तमग्निरुवाच सविता वै प्रसवानामीशे । तमेवोपधाव इति । स सवितारमुपससार अभित्वा देव सवितः इति तृचेन । अभि त्वा देव । अभियाचामहे देव सवितः त्वां धनानामीश्वरं नरपशोरात्मीयं भागं सदा रक्षितः ॥ (३)

यश्चिद्धि त इत्था भगः शशमानः पुरा निदः । अद्वेषो हस्तयोर्दधे ॥

यश्चित् । यश्चिद्धि ते इत्थं भगो धनं शशमानः स्तूयमानः । पुरा निदं[7] पुरा निन्दितुर्मर्त्यात् । अद्वेषोऽसपत्नः । स्तोतुर्हस्तयोर्दधे दीयते । तं भागमिमहे[8] ॥

[1] अनया प्रथमया ऋचा.

[2] द्वितीया ऋक्.

[3] The reading should be सवितरीशानं वार्याणाम् । Perhaps the scribe wrote only सवितरीशानम् (र्धेना being extra) and left out वार्याणाम्. The last letter is not at all clear, being worm-eaten. ज is only a conjecture.

[4] Read अवन्. The letter नी is worm-eaten. There appears to have been a ई mark above न्.

[5] Read भागं.

[6] Not quite clear.

[7] Read निदः

[8] Read भागमीमहे.

यः कतमो भाग उच्यते । यश्चिद्धि । य एवंविधो भागः सर्वैरेव स्तूयमानो द्वेष्टृवर्जितो निन्दितुर्मनुष्यात् पूर्वमेव स्तोतुर्हस्तयोः इत्थं निदधे । उत्तरत्र संबन्धः ॥ (४)

**भगभक्तस्य ते वयमुदशेम तवावसा । मूर्धानं राय आरभे ॥**

भगभक्तस्य[1] धनेन संयुक्तस्य ते । अवसा रक्षणेन । उदशेम उद्व्याप्नुमः । धनस्य मूर्धनमारब्धुः[2] । मूर्धा शिरो मूर्तमस्मिन् धीयत इति । ह[3] त्वौपमिकम् । परमां मात्रां आरब्धुमिति । पुनस्तवेति पू + + मिति[4] ॥

भगभक्तस्य । तेन भाग्येन संभक्तस्य तव वयं रक्षणेन उद्व्याप्नुमो धनस्य परमं पदमारब्धुम् ॥ (५)

**नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः ।**
**नेमा आपो अनिमिषं चरन्ती र्न ये वातस्य प्र मिनन्त्यभ्वम् ॥**

नहि । नहि ते क्षेत्रं[5] बलम् । न सहः । सहोऽभिभवसामर्थ्यम् । न मन्युं परेषामभिमननसामर्थ्यम् । वयो वेतेः पक्षिणः श्येनादयोऽपि । तापुः[6] । नवेमा आपो अनिमिषं चरन्त्यः । अनिमिषः कालः अहोरात्रात्मकः । न हि तस्य निमिषोऽस्ति[7] सदा सञ्चरतः ॥

[1] भ following भग completely worm-eaten.

[2] Read मूर्धानमारब्धुः

[3] Read इतीह (= इति । इह).

[4] After पू, there are two syllables worm-eaten. They are completely gone. The second looks like क. Perhaps to read पूरकमिति.

[5] Read क्षत्रं.

[6] Read नापुः

[7] Read निमेषोऽस्ति.

न नि मिषत्र्य[1] सुरणो दिवेदिवे (ऋ. वे. ३. २९. १४)

क्रियाविशेषणं चेदाद्युदात्तम्[2] ।

अनिमिषं नृष्णं[3] पान्ति (ऋ. वे. ५. १९. २)

न च ये वातस्य प्रमिनन्ति हिंसन्ति । बहुमाहाद्दतं वेगम्[4] । रश्मयः[5] । आपूः[6] इत्याख्यातमस्य[7] समाप्तार्थं अहेरर्थो[8] पर्यवसानं वाक्यस्येति[9] ॥

तं सविता उवाच । वरुणाय वै राज्ञे नियुक्तोऽसि । तमेव उपधाव इति । स वरुणं राजानं उपससार अत उत्तराभिरेकत्रिंशता । नहि ते । नहि तव वरुण बलमभिभवसामर्थ्यं शत्रूणां अभिमननं च महता वेगेन पतयन्तः श्येनादयोऽप्यापुः । न च इमा आपः सततं चरन्त्यः । न च ये पर्वतादयो वातस्यापि महत्तां प्रहिंसन्ति । (६)

अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥

[1] Read मिषति.

[2] द्यु mostly worm-eaten.

[3] Read नृम्णं.

[4] This must be the explanation of अम्वम्. Perhaps to read अम्वं महान्तं वेगम्.

[5] The connection of this word is not clear.

[6] Read आपुः

[7] स्य mostly worm-eaten. It is only a conjecture.

[8] Read अभेरर्थे.

[9] From आपुः the sentence is not quite intelligible.

अबुद्ध्ने । बुध्नो मूलं बध्नातीति । अमूले नभसि तिष्ठन् । राजा वरुणो वनस्य वननीयस्य तेजसः । ऊर्ध्वं स्तूपं संघम् । स्तूपस्यायतेः[1] । ददते धारयति । ददतिः धारणार्था[2] ॥

चतुरश्चिद्ददमानात् (ऋ. वे. १. ४१. ९) ।

इति । पूतदक्षं[3] शुद्धबलः । नीचिना[4] अधोमुखाः । तिष्ठन्ति । उपरि बुध्न एषां रश्मीनाम् । तथा सति अस्मास्वन्तर्निहिताः[5] केतवः प्रज्ञापकाः प्राणाः । स्युरिति मुमूर्षुराशास्ते ॥

अबुध्ने राजा । अमूले अनालम्बने अन्तरिक्षे वरुणो राजा तेजस उदकस्य वा संघातमूर्ध्वं धारयति शुद्धबलः । ते च रश्मयो नीचीनाग्राः तिष्ठन्ति । तेषामेषां मूलं उपरि भवति । अस्माकमन्तरमृतानां निहितानि भवन्तु प्रज्ञानानि ॥ (७)

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥

उरुं[6] विस्तीर्णम् । हि राजा वरुणश्चकारः[7] । उरुरर्तो[8] । सूर्याय

[1] Read स्तूपः स्त्यायतेः cf. N. 10. 33.

[2] Read धारणार्थः

[3] Read पूतदक्षः

[4] Read नीचीना.

[5] Page 18*b* ends here.

[6] The pratika is not separately given.

[7] Omit the visarga.

[8] Read उरुरर्तेः

पन्थामन्वेतुम्[1] । पन्था: पतते:[2] । अपदे[3] अनन्दलं बलेन[4] ह स + +[5] प्रति + +[6] । कृतवान् । सूर्यपथ: कारणा[7] । सोऽयमपवक्तास्तु हृदयाविधः । शत्रोर्यो हृदयं विध्यति स पलराभवत्विति[8] वदतु ॥

उरुं हि । विस्तीर्णं हि राजा वरुणश्चकार सूर्यस्य गमनार्थं पन्थानम् । ततोऽयमनालम्बने अन्तरिक्षे कृतवान् सूर्यस्य पदानि प्रतिधातुं पन्थानम् । सोऽयं हृदयाविधः शत्रोरपवक्ता अस्तु पराभवत्वयमिति वदतु ॥ (८)

**शतं ते राजन्भिषजः सहस्रमुर्वी गंभीरा सुमतिष्टे अस्तु ।**
**बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥**

शतं ते । शतम् । शातयतीति[9] शतम् । ते राजन् भिषजो भेषजानि । सहस्रं चोर्वी गभीरा विस्तीर्णा गंभीरा सीश्च[10] वितता ।

[1] न्व in न्वे worm-eaten.

[2] पततेः worm-eaten. Only a conjecture. The middle letter is completely gone. The other two are partly retained and can be made out.

[3] अ completely and ए mark in दे partly worm-eaten.

[4] Not intelligible. Perhaps अनालम्बने.

[5] After ह the leaf is broken. स partly retained; then about two syllables completely gone. Perhaps to read अन्तरिक्षे instead of ह स + +

[6] Two syllables after प्रति mostly worm-eaten. Perhaps प्रतिधातुम्.

[7] Not intelligible.

[8] Read पराभवत्विति.

[9] First written शता. Then आ mark inserted between श and त below the line and the आ mark after त deleted by a dot above.

[10] Perhaps to read धीश्च. Not clear.

सुमतिस्तेऽस्मास्वस्तु । बाधस्व दूरे नृतिं आर्तिम्[1] । पराचैः पराचीन[2] । मृति हिंसाकर्मा । नृतिनियाधनान्निरमणानिति यास्कः[3] । कृतं चिदेनः प्रमुमुग्ध्यस्मत्तः । एनः पापमेतेरिति[4] ॥

शतं ते । शतं ते राजन् भैषज्यानि सहस्रं च । विस्तीर्णा गम्भीरा मद्विषया सुमतिस्तवास्तु । स त्वमस्मत्तः कृच्छ्रं दूरे पराङ्मुखं बाधस्व । कृतं च पापं प्रमोचय इति ॥ (९)

**अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।**
**अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥**

अमी ऋक्षाः सप्त ऋषयः । ऋक्षा इति भ[5] स्म वै पुरा सप्त ऋषीनाचक्षते[6]—इति वाजसनेयकम् । ऋचिः पृथक् भावार्थः । पत्नी-रहितत्वाद्रक्षत्वमिति[7] वाजसनेय एवोक्तम्[8] । सर्वाण्येव नक्षत्राणि ऋक्षाः । निहिता उच्चैर्दिवि । नक्तं दृश्यते[9] । कुहचित्ते कस्वित्ते । दिवान्वियुः[10] ।

[1] The letters are not quite clear. This is only a conjecture. The last letter but one is partly worm-eaten also. Perhaps to read निर्ऋतिं आर्तिम्.

[2] Perhaps to read पराचीनम्.

[3] The Ms. is very corrupt; writing not clear. This must be the interpretation of निर्ऋति. Cf. N. 2. 7.

[4] Cf. N. 11. 24.

[5] Read ह.

[6] Cf. सप्तर्षीनु ह स्म वै पुरर्क्षा इत्याचक्षते. S'. B. 2. 1, 2. 4.

[7] It is not clear what root is meant. Read ऋक्षत्वम् instead of ह्रक्षत्वम्. Cf. ऋक्षा उदीर्णानीव ख्यायन्ते. N. 3. 20.

[8] Cf. the S'. B. section referred to in note 6 above.

[9] Perhaps to read दृश्यन्ते.

[10] There is no अनु in the text.

तदेतदेकं वरुणस्य कर्म। अन्यानि चादब्धानि वरुणस्य कर्माणि। विचाकशद्दीप्यमानाः। चन्द्रमाः नक्तमेति। न च दिवा दृश्यते। तच्च वरुणस्य व्रतम्। चन्द्रमाश्चन्द्रप्रभवश्चमते[1] ह्लादनार्थात्। चन्द्रस्य वा तेजसो निर्मातरः[2] चन्द्रमानस्येति यास्कः[3]। स चन्द्रं म आहरेति प्रालपत्तच्चन्द्रमसश्चन्द्रमस्त्वम् (तै. ब्रा. २. २. १०. ३) इति च ब्राह्मणमिति ॥

अमी य ऋक्षाः नक्षत्राणि रात्रौ दृश्यन्ते क्व तानि दिवा गच्छन्ति। तथा दीप्यमानश्चन्द्रो रात्रौ गच्छति। भवति च दिवा तिरोहितः। तानि इमानि शत्रुभिरहिंसितानि वरुणस्य व्रतानि ॥ (१०)

**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः।**
**अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥**

तत्त्वा। तत्त्वा याचे ब्रह्मणा वन्दमानः। तदेवाशास्ते यजमानो हविर्भिरिश्चन्द्रः[4]। अमृध्यन्वरुणेह तत् बुद्धयस्व। बृहत्स्तोमो स्माकमायुः[5] प्रमोषीरिति ॥

तत् त्वा यामि। तत् त्वामहं याचामि स्तोत्रेण वन्दमानः। तदेवाशास्ते अयं च हरिश्चन्द्रो यजमानो हविर्भिः। स त्वमक्रुध्यन् वरुण इह बुध्यस्व। तदाह बहुस्तोत्र मा अस्माकमायुः प्रमोषीः इति ॥ (११)

[1] Read श्चमतेः The word चन्द्रप्रभवः after चन्द्रमाः seems unnecessary.
[2] Read निर्मातारः
[3] cf. चन्द्रो माता। चान्द्रं मानमस्येति वा. (नि. ११. ५)
[4] Read हविर्भिर्हरिश्चन्द्रः
[5] Read बृहत्स्तोमो मास्माकमायुः

तदिन्नक्तं तद्दिवा मह्यमाहुस्तद॒यं केतो॑ हृ॒द आ वि च॑ष्टे ।
शुनः॒शेपो॒ यमह्व॑द्गृभी॒तः सो अ॒स्मान्राजा॒ वरु॑णो मुमोक्तु ॥

तदित् । तदेव नक्तं दिवा मह्यमाहुः सर्वे । कदेवायं[1] हृदयाज्जायमानो मम केतश्च विब्रवीति । ममापि तथा प्रज्ञानमित्यर्थः । तच्च दर्शयति । शुनश्शेपो यं देवमाभूतवान्[2] यूपे[3] गृहीतः सोऽस्मान् राजा वरुणो मुमोक्तु ॥

तदिन्नक्तम् । तदेव नक्तं तद्दिवा मह्यं सर्वे कथयन्ति वरुणः त्वां मोक्तुमीष्टे इति । तदेव हृदयस्य च प्रज्ञा मह्यं विचष्टे ममापि तथा बुद्धिर्भवति । यूपे बद्धः शुनःशेपो यं देवं आहूतवान् स राजा वरुणः अस्मान् मुमोक्तु ॥ (१२)

शुनः॒शेपो॒ ह्यह्व॑द्गृभी॒तस्त्रि॒ष्वा॑दि॒त्यं द्रु॑प॒देषु॑ ब॒द्धः ।
अवै॑नं॒ राजा॒ वरु॑णः ससृज्याद्वि॒द्वाँ अद॑ब्धो॒ वि मु॑मोक्तु॒ पाशा॑न् ॥

शुनश्शेप इति[4] ऋषेर्निन्दिता संज्ञा । कुर्वन्ति ऋषयो निन्दितमपि नाम । अयं वर्षशतं जीवेदिति । यथामुं मित्रो विश्वामित्र इति[5] । + + तेर्गत्यर्थात्[6] । श्वसितेर्वा । शुवाति वा[7] । शेपसः पतेस्पर्शनाच्छुन[8] इति

[1] Read तदेवायं.

[2] Read देवमाहूतवान्.

[3] The न् in वान् and यू worm-eaten. It is only a conjecture.

[4] There is no pratika separately given.

[5] Page 19*a* ends with इ. The first letter in the next page is completely worm-eaten; ति is only a conjecture. Sentence not clear.

[6] After इति, part of a letter is seen; not decipherable; then two letters are gone; part of the 2nd is seen; it may be व. Perhaps to read इतिवत् । शवतेर्गत्यर्थात् or इति । शेपः शवतेर्गत्यर्थात्.

[7] Reading uncertain; not intelligible.

[8] Not intelligible. Perhaps to read श्वसतेः स्पर्शनार्थाच्छुन.

शुनश्शेपः[1] । शुनश्शेपो ह्यह्वत् गृहीतस्त्रिषु द्रुपदेषु द्रोर्यूपस्य स्थानेषु । द्रुंद्रुमः[2] स्वयं द्रवतीति । अदितेः पुत्र आदित्यः[3] । सूर्यश्चेदादत्ते रसानिति । तमेनं अवस्रघात्[4] वरुणो राजा राजतेः स्वामी । द्विद्वान्[5] प्रचेता अहिहिमो[6] विमुमोक्तु पाशात्[7] । पाशयतिर्बन्धनार्थ इति ॥

शुनःशेपः । शुनःशेपोऽयमाहूतवान् गृहीतः त्रिषु यूपस्य स्थानेषु बद्धः अदितेः पुत्रम् । तं वरुणोऽवसृजतु । विद्वानहिंसितः पाशान् विमुमोक्तु । पाशविमोचनं फलं अवसर्गस्य ॥ (१३)

**अव॑ ते॒ हेळो॑ वरु॒ण नमो॑भि॒रव॑ य॒ज्ञेभि॑रीमहे ह॒विर्भिः॑ ।**
**क्षय॑न्न॒स्मभ्य॑मसुर प्रचे॒ता राज॒न्नेनां॑सि शिश्रथः कृ॒तानि॑ ॥**

अव । अमेवहे[8] अवनवामः[9] । वरुण कव[10] क्रोधं नमस्कारैः[11] । अव + व[12] यज्ञैः प्रीणानैः[13] । हविर्भिः । क्षयातस्मभ्यं[14] असुर प्रचेतः ।

[1] The explanation of the word शुनःशेप is not clear.
[2] म in द्रुमः worm-eaten. Read द्रुर्द्रुमः
[3] दि worm-eaten.
[4] Read अवसृज्यात्.
[5] Read विद्वान्.
[6] Perhaps to read अहिंसितो.
[7] Read पाशान्.
[8] Read अवेमहे.
[9] Perhaps to read अवनमामः
[10] Read तव.
[11] स portion in स्का worm-eaten.
[12] Between the two व syllables a letter is worm-eaten and not decipherable. It looks like ह preceded by two ए marks (to form the ऐ mark). Or it may be महे. Perhaps to read अवेमहे । अव.
[13] Read प्रीणनैः
[14] Read क्षयन्नस्मभ्यं.

क्षयतिरत्र दानार्थाश्चतुर्थीदर्शनात्[1]। अपि वा अस्मादर्थे[2] एव निवसन् परमे स्थाने। असुरो बलवान्। असेः क्षेपतिणार्थात्[3]। असु माहे मत्वर्थीमयः[4]। असुरो सुर इति यास्कः[5]। राजन्नेनांसि शिश्रथः पापानीति॥

अव ते हेळः। अवगच्छत्विति याचामहे। विनाशयामस्तव नमस्कारैः क्रोधं अव यज्ञैः हविर्भिश्च। निवसन् अस्मदर्थे बलवन् प्राज्ञ राजन कृतानि पापानि विनाशय॥ (१४)

**उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय।**
**अथा॑ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम॥**

उदुक्तम्[6]। उदुक्तं[7] वरुण पाशं उच्छूधिय[8]। श्रधिर्विमोचनार्थम्[9]। अधमर्पाशम्मवश्रथय[10]। मघ्युमघ्युमन्त्राभिदेशस्थितं[11] विश्रतय[12]।

[1] Read दानार्थश्चतुर्थीदर्शनात्.

[2] Read अस्मदर्थे.

[3] Read क्षेपणार्थात्.

[4] The passage is not intelligible.

[5] What Yāska says is: असुरा असुरताः। स्थानेष्वस्ताः स्थानेभ्य इति वा। अथवा असुरिति प्राणनाम। अस्तः शरीरे भवति। तेन तद्वन्तः (नि. ३. ८)

[6] Read उदुत्तमम्.

[7] Read उदुत्तमं.

[8] Read उच्छ्रथय.

[9] Read श्रथिर्विमोचनार्थः

[10] Read अधमं पाशमवश्रथय.

[11] May be मध्यमन्त्राभिदेशस्थितं.

[12] Read विश्रथय. It looks as if there is some bit worm-eaten after श्र, and it may be a उ mark following.

अथ ऊर्वमादित्य तव व्रते त्वमध्यक्षो यस्य तस्मिन्। अनागसः आगोऽपराधमकुर्वन्तः। अदितयेऽस्यै पृथिव्यै स्यामामृता इति[1] ॥

उदुत्तमम्। उत्तमं वरुण पाशं उच्छ्रथय अस्मत्तः मध्यमं विश्रथय अवश्रथय अवमम्। अत ऊर्ध्वं अदितेः पुत्र त्वत्स्वामिके सन्ध्यावन्दनादिके व्रते प्रमादरहिता अस्यै पृथिव्यै स्याम अमृताः सन्तः ॥ (१९)

---

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यविद्यवि ॥

यच्चित्। इह वाक्यात्मकेषु येषु पदवेलायां हानोपादानं शाकल्य[2] करोति तत्कारणं समयानुक्रमण्यां[3] उक्तम्। द्व्यृच एकार्थो विद्यते। प्रतत्म[4] विशो यथा। विशो लौकिका अज्ञा नुप्यो[5]। यथा प्रमिनन्ति हिंसन्ति। तद्वद्वयमपि प्रमादात् प्रमिनीम[6]। तत्र यथेत्यस्यानुदात्तत्वं

[1] Here there is the figure 5 (which looks more like नि) to mark the end of the sūkta.

[2] Read शाकल्यः

[3] Samayānukramaṇī is the seventh of the twelve anukramaṇīs written by the author. The twelfth is this commentary itself. Cf. the introductory portion in App. IV. of The Madras University Sanskrit series No. 2 pt. 1.

[4] Perhaps to read व्रतम्. It looks as though something is missing.

[5] Read मनुष्याः

[6] Read प्रमिनीमः

उपार्थस्य[1] भवति । प्रकारवचनस्योदात्त वक्तव्यत्वा[2] स्वरानुक्रमण्यामुक्तम्[3] । न्यविद्यवि[4] दिवे दिवसे ॥

यच्चिद्धि । यद्वयं तवान्यमनुष्यवदसत्यस्तेयादिकरणात् व्रतमन्वहं हिंसामः ततस्त्वां स्तुम इति । सूक्तोपक्रमेषु क्रियापदमनेकत्र न दृष्टं इति ॥ (१)

**मा नो॑ व॒धाय॑ ह॒त्नवे॑ जिहीळा॒नस्य॑ रीरधः । मा हृ॑णा॒नस्य॑ म॒न्यवे॑ ॥**

मा नः । मास्मानायुधाय पापकृता[6] हन्त्वे । जिहीळनस्य[7] क्रुद्धस्य तव । रीरधः वशन्नेषीः[8] । मा च हृणानस्य मन्यवे । दोषं दृष्ट्वा परित्यजन् शृणानः[9] हृणीयमानो अपहिमदय्ये[10] । मन्यू क्रोधोहिमन्यत इति[11] ॥

मा नो वधाय । मास्मानायुधाय हन्त्रे क्रुद्धस्य स्वभूताय वशं नय । मा च हृणानस्य मन्यवे । हिंसापरो हृणानः ॥ (२)

[1] Read उपमार्थस्य.

[2] The sentence is not quite correct. Perhaps to read प्रकारवचनस्य उदात्तत्वं वक्तव्यं इति.

[3] This is the sixth anukramaṇī. Cf. reference given in note 3 on p. 168.

[4] Read द्यविद्यवि.

[5] Read दिवसे दिवसे.

[6] Read पापकृतां.

[7] Read जिहीळानस्य.

[8] Read वशं नैषीः

[9] Read हृणानः

[10] Not intelligible.

[11] Perhaps to read मन्युः क्रोधः अभिमन्यते इति.

वि मृ॒ळी॒काय॑ ते॒ मनो॑ र॒थीरश्वं॒ न संदि॑तम् । गी॒र्भिर्व॑रुण सीमहि ॥

वि । मृळीकं सुखं मृळयते[1] । विषीमहि सुखार्थम् । सारथिर्बद्धमिवाश्वम् । तव क्रुद्धजन[2] स्तुतिभिः वरुण । विषीमहीत्युपमान एव सुसंगतं उपमेये[3] तूपशान्तं कुर्म इति[4] छन्दोऽनुक्रमण्यां[5] अस्माभिः प्रतिपादितम् ॥

वि मृळीकाय । सुखार्थं सारथिर्बद्धमिवाश्वं तव क्रुद्धं मनः स्तुतिभिर्विमोचयामः ॥ (३)

परा॒ हि मे॒ विम॑न्यवः॒ पत॑न्ति॒ वस्य॑इष्टये । वयो॒ न व॑स॒तीरुप॑ ॥

परा हि । परापतन्ति मे विमन्यवो बुद्धयः श्रेयस्कामाः स्तुतयो वा । वस्यः श्रेयस इष्टये[6] प्राप्त्यर्थम् । पयः[7] पक्षिणो वसन्तीरुप[8] पत . . . स्मयार्थो हिरिति[9] ॥

[1] Read मृळयते: or it may be मृळीकाय ते. After ते the letter न is written and deleted with a dot above.

[2] The purpose of this word is not clear.

[3] Page 19 *b* ends with उपमे.

[4] इति mostly worm-eaten. The following two letters are scarcely decipherable. छन्दो is only a conjecture.

[5] This is the ninth anukramaṇī. cf. the reference given in n. 3 on p. 168.

[6] स and ष्टये mostly worm-eaten.

[7] Read वय:

[8] Read वसतीरुप.

[9] After रुप, the letter प is half seen. The corner of the leaf is broken and two or three letters are mising. स्मयार्थो is what begins the next line. The letter after र्थो is worm-eaten and cannot be deciphered. हि is only a conjecture. Read वसतीरुपपतन्ति । विस्मयार्थो- हिरिति The word यथा should be added before वय.

पराहि । पराहि मे मम विविधा इच्छा बुद्धयः श्रेयस इच्छार्थं वरुणं राजानं प्रति परापतन्ति यथा पक्षिण आवासस्थानानि उपगच्छन्ति ॥ (४)

**कदा क्षत्रश्रियं नरमा वरुणं करामहे । मृळीकायोरुचक्षसम् ॥**

कदा । बलं यः श्रयति । कदा । तं नेतारं वरुणमभिमुखं कुर्मः सुखार्थं बहूनां द्रष्टारं बहुतेजसा[1] वा । इत्यामो परिवेदवनेति[2] ॥

कदा क्षत्रश्रियम् । बलं यः श्रयति । कदा तं नेतारं वरुणमभिमुखं कुर्मः सुखार्थं बहूनां द्रष्टारम् ॥ (५)

**तदित्समानमाशाते वेनन्ता न प्र युच्छतः । धृतव्रताय दाशुषे ॥**

तदित् । तदेव समानमश्नुवाते[3] कामयमानौ न प्रमाद्य + + तकर्मणे[4] दाशुषे । मित्रावरुणाविति साहचर्यात् प्रतिभ इति[5] ॥

तदित्समानम् । तदानीमेव सहागच्छतो मित्रावरुणौ कामयमानौ । न च प्रमाद्यतो धृतकर्मणे यजमानाय कर्मपौष्कलार्थमिति ॥ (६)

**वेदा यो वीनां पदमन्तरिक्षेण पतताम् । वेद नावः समुद्रियः ॥**

[1] Read बहुतेजसं.

[2] Read इत्यात्मनः परिदेवना इति.

[3] न after समा mostly worm-eaten.

[4] After प्रमा the corner of the leaf is broken and a letter or two missing. त is what begins the next line. द्य is only a conjecture. Read प्रमाद्यतः धृतकर्मणे.

[5] Not intelligible.

वेद । विर्वृत्वा क्ष्मान्तिष्ठतीति निरुक्तम्[1] । अन्तरिक्षम् । अन्तरिक्षमन्तरा रोदस्योः क्षेतीति । क्षान्तमन्तरेति यास्कः[2] । अक्षीणमिव वा वेदयेत् । वीनां पदमावासस्थानमन्तरिक्षेण गच्छताम् । मनुष्या हि पश्यन्ति पततः पक्षिणः न वासस्थानम् । तथा वयश्च[3] नावः समुद्र्यः[4] । समुत्रद्रेधि सृष्टादेव दयत्र वसन्तीति समुद्र्यो वरुण इत्येते तत्र कुशलमिवेति[5] ॥

नि षसाद धृतव्रतः (ऋ. वे. १. २५. १०)

इत्यत्र वाक्यपर्यवसानमिति ॥

वेदा यः । यः प्रजानाति अन्तरिक्षेण गच्छतां पक्षिणां आवासस्थानं यत्र सायं वसन्ति वेद च नावः समुद्रेण गच्छन्तीः । मनुष्यास्तु पततः पक्षिणः पश्यन्ति विसृज्यमानाश्च नावः न तु तेषामावासं विसर्गस्थानमिति ॥ (७)

**वेद॑ मा॒सो धृ॒तव्र॑तो॒ द्वाद॑श प्र॒जाव॑तः । वेदा॒ य उ॑प॒जाय॑ते ॥**

वेद । वेद यो मासः मास्मान्[6] ऋतुलिङ्गैः सूक्ष्मैः । मासो मानाः[8] । द्वादश प्रजावतः पुष्पफलैर्युक्तान् । वेद च उपजायते[7] त्रयोदशोऽधिको मासः तमपीति[9] ॥

[1] What is found in the Nirukta is विरिति शकुनिनाम वेतेर्गतिकर्मणः (२.६).

[2] Cf. अन्तरिक्षं कस्मात् । अन्तरा क्षान्तं भवति । अन्तरेमे इति वा । शरीरेष्वन्तरक्षयमिति वा (नि. २. १०).

[3] This must be वेद or वेद च.

[4] Read समुद्रियः

[5] The passage is unintelligible and very corrupt.

[6] The letter preceding स्मान् is not at all legible. मा is the nearest approximation. Read मासान्.

[7] Not clear. Perhaps मासो मानात्.

[8] Read वेद च य उपजायते.

[9] The word धृतव्रतः not taken up in the commentary.

वेद मासः । वेद द्वादश मासान् धृतसन्ध्यावन्दनादिकर्मा स्वे स्वे काले प्रजायमानान् ऋतुलिङ्गैस्त्रयोदशमुपजायमानं अधिमासं च वेत्ति ॥ (८)

**वेद् वार्तस्य वर्तनिमुरोर्ऋष्वस्य बृहतः । वेदा ये अध्यासते ॥**

वेद । यश्च देव[1] तस्य वर्तनिं गृहम् । विस्तीर्णस्य दर्शनीयस्य । देवद[2] च येऽध्यासते ऋक्षा दिवीति ॥

वेद वातस्य । वेद वायोरावासस्थानं विस्तीर्णस्य दर्शनीयस्य महतः । वेद च नक्षत्राणि यानि दिवि अध्यासते ॥ (९)

**नि षसाद धृतव्रतो वरुणः पस्त्या३ स्वा । साम्राज्याय सुक्रतुः ॥**

निषसाद[3] वरुणः साम्राज्यमिच्छन्[4] । प्रजापतौ शतं[5] वर्षाणि ब्रह्म वयं वसन्तं स[6] एव देवाः साम्राज्यायाभ्यषिञ्चन्वरुणश्चाभिषेकाय तेषां मध्य आसन्द्यां निषसाद इति शाट्यायनोक्त इतिहासः[7] ॥

पस्त्यासु चक्रे रुणः[8] सधस्थम् (वा. सं. १०. ७)

इत्यस्मिन् यजुषि वाजसनेयकम् । पिशः पस्त्याः इति श[9] ॥

[1] Read वेद.

[2] Read वेद.

[3] Pratika not separately given.

[4] It appears that a portion is missing.

[5] After शत there is a small dot. It does not look quite like an anusvāra.

[6] स is worm-eaten and not quite decipherable. It is only a conjecture from the bits left.

[7] The passage is corrupt and not not quite clear.

[8] Read वरुणः

[9] Not clear.

निषसाद। स निषीदति धृतकर्मा वरुणो गृहभूतासु नदीषु साम्राज्यं कुर्वन् सुप्रज्ञः ॥ (१०)

**अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति। कृतानि या च कर्त्वा॥**

अतः। अस्माद्वरुणात् विश्वायानि[1] आश्चर्याणि। प्राज्ञो हि पश्यति यान्यन्येन कृतानि यानि चानुसूतं[2] कर्तव्यानि ॥

अतो विश्वानि। अस्माद्वरुणादेवंजातीयकानि विश्वान्याश्चर्याणि प्राज्ञोऽभिपश्यति यान्यनेन कृतानि यानि च कर्तव्यानि ॥ (११)

**स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत्। प्र ण आयूंषि तारिषत्॥**

स नः। विश्वाहेति निपातः सदापर्यायम्[4]। अपि वा द्वयोः पदयोः समाहारः। तत्रैकार्थ्यागमात्[5] विश्वशब्दस्यान्तोदात्तत्वम्। यथा विमना दिश्वकर्मा[6] इति ॥

विश्वेदहानि तविषीव उग्र[7] (ऋ. वे. ७. २५. ४)

इति। सोऽस्मान् सर्वदा सुक्रतुरादित्यः शोभनेन पथा करोतु। प्रकारयतु[8] चास्मानायूंषि पुनर्मृत्योः परिपातु ॥

[1] Read विश्वानि.

[2] The word is not clear.

[3] Pratika not separately given.

[4] Read सदापर्याय:

[5] Perhaps to read तत्रैकार्थ्यावगमात्.

[6] R. V. 10. 82. 2. The passage is विश्वकर्मा विमनाः. Page 20 *a* ends with विश्व.

[7] The Ms. read उग्रेति. Read उग्रम्.

[8] Read प्रतारयतु.

दधिक्राव्णो अकारिषम् (ऋ. वे. ४. ३९. ६)

इत्यत्र

प्र ण आयूंषि[1] तारिषत्[2] ॥

इति न विसृजति । प्रवर्धयत्वस्माकं अन्नान्नीति[3] तत्र प्राकरणिकोऽर्थः । वातु भेषजं[4] इत्यत्र न सृज्यते । तत्रास्माकमायूंषि वर्धयन्तु भेषजादानेनेति[5] ॥

स नो विश्वाहा । सोऽस्मान् सर्वदा सुक्रतुरादित्यः शोभनेन पथा कृणोतु । अस्माकमायूंषि च प्रतारयतु ॥ (१२)

**बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् । परि स्पशो नि षेदिरे ॥**

बिभ्रत् । बिभ्रद्द्रापिं गवचनम्[6] । हिरण्मयम् । द्रापि[7] द्रापयतीषूनिति । तेजश्चेत् द्रापयति चक्षूंषि ॥

द्रावि[8] वसानो यजतो दिस्पृशम्[9] (ऋ. वे. ८. ८६. १४)

वरुणो वस्त आच्छादितवान् । निर्णिजं निक्तं[10] रूपम् । निर्णिगिति रूपनाम । परि स्पशो निषेदिरे । स्पशि[11] ज्ञानार्थः । यद्यनुपमन्युस्ते स्वाशयेयुः

[1] षि completely worm-eaten.
[2] Last pāda of the stanza quoted just above.
[3] Read अन्नानीति.
[4] R. V. 10. 186. I. Usually the commentator quotes from the beginning of the pāda. The pāda is वात आ वातु भेषजम्. Perhaps a bit is omitted by the scribe.
[5] Read वर्धयतु भेषजदानेनेति.
[6] Read बिभ्रद्द्रापिं कवचम्.
[7] Read द्रापिः
[8] Read द्रापिं. The letter वि is worm-eaten; yet it can be seen that what was written is only वि and not पिं.
[9] Read दिविस्पृशम्.
[10] Read निर्णिजं निर्निक्तं.
[11] Read स्पशिः

इत्यापस्तम्बः[1] । रश्मयो वा स्पर्शः[2] ज्ञापयन्तीति । अत्र अवस्त इत्यकारप्रश्लेषो न कृतः शाकल्येन[3] । अस्ति हि चेदकारः प्रकृतिभावेन भवितव्यम् । अयं च न्यायोऽन्तःपदलङ्ल्ङोरकारप्रश्लेषे सर्वत्रानुसन्धातव्यः । तत्र वक्तव्य[4] प्रपञ्चेन समयानुक्रमण्यामस्माभिरुक्तमिति[5] ॥

बिभ्रद्द्रापिम । बिभ्रत कवचं हिरणमयं वरुण आच्छादयति रूपं दीप्तम् । परितश्चैनं निषीदन्ति ज्ञापका रश्मयः । (१३)

**न यं दिप्संन्ति द्रिप्सवो न द्रुह्वाणो जनानाम् । न देवमभिमातयः ॥**

न यम् । द्रुच एकार्थः । न यं वरुणं द्रिप्सन्ति दुर्बलान् अहिभवितुं[6] इच्छन्तः असुराः । यसै च न्दनानां[7] द्रोग्धारो दुह्यन्ति । यं च देवं अहिमन्तारो[8] नाभिमन्यन्ते ॥

न यं दिप्सन्ति । यं वरुणं हिंसार्थिनो न हिंसितुमिच्छन्ति । जनानामन्येषां च द्रोग्धारश्च यस्मै न द्रुह्यन्ति । न यं चाभिमन्यन्ते अभिमातयश्च । उत्तरत्र संबन्धः ॥ (१४)

[1] म्बः mostly worm-eaten.

[2] Read स्पशः

[3] The pada of वरुणोवस्त can be both वरुणः अवस्त and वरुणः वस्त. In the former case, the Saṃhitā is to be wtitten with an avagraha after णो.

[4] Read वक्तव्यं.

[5] See note 3 on p. 168.

[6] Read अभिभवितुं.

[7] Not intelligible. The latter part must be जनानां. Perhaps यस्मै च जनानां.

[8] Read अभिमन्तारो.

उत यो मानु॑षे॒ष्वा यश॑श्च॒क्रे अ॒साम्या । अ॒स्माक॑मु॒दरे॒ष्वा ॥

उत यः । अपि च यो मानुषेषु । यशोऽन्नम् । असामि विषमम् । चक्रे भूयः । केषुचिदल्पीयः केषुचित्[1] । असामीति निपातोऽप्यस्ति असाधारणवचनः ॥

असामि[2] प्रयज्यवः (ऋ. वे. १. ३९. ९)
असाम्योजो बिभृथ (ऋ. वे. १. ३९. १०)

कृत्स्नवचन इत्यपरम् । सामि स्यतेरस्या + वर्धमिति[3] यास्क[4] । यसो[5] यसेस्सञ्चरणार्थात्[6] । सोऽस्माकमपि उदरेष्वाकरो[7] यशः। उदर[8] ऊर्ध्वं दीर्णमिति ॥

उत यः । अपि च यो मनुष्येष्वन्नमसाधारणं चक्रे सोऽस्माकमुदरेषु आकरोतु । प्रथम आकारः सप्तम्यर्थं स्फुटीकरोति ॥ (१९)

परा॑ मे यन्ति धी॒तयो॒ गावो॒ न गव्यू॑ती॒रनु॑ । इ॒च्छन्ती॑रुरु॒चक्ष॑सम् ॥

वरा[9] । परायन्ति मे बुद्धयो गावो न गव्यूति[10] । सर्वसतीर्गोष्ठ्यान्यनु गवामूति + + + [11]इच्छन्त्यो बहुतेजसं वरुणम् ॥

[1] अधिकतरं or some such word to be inserted here.
[2] Read असामि हि.
[3] A letter completely gone before व. The explanation not clear.
[4] Read यास्कः । cf. असामि सामि प्रतिषिद्धम् । सामि स्यतेः (नि. ६. २३)
[5] Read यशो.
[6] Not clear. The explanation is not in Nirukta.
[7] Read उदरेष्वाकरोत्.
[8] Read उदरं.
[9] Read परा.
[10] Read गव्यूतीः
[11] The passage not clear. After गवामूति the corner broken and two letters gone. The first letter in the next line too worm-eaten and gone.

परा मे । परागच्छन्ति मे बुद्धयो वरुणं राजानं प्रति यथा गावो गोमार्गान् प्रति गच्छन्ति । इच्छन्त्यो बहूनां द्रष्टारं द्रष्टुम् ॥ (१६)

**सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् । होतेव क्षदसे प्रियम् ॥**

सन्नु त्वं चाहं च वरुण पुनः सं नु वोचारहै[1] हविर्दानानन्तरं वचासि मिश्राकणवावहै[2] पुनः । यनो[3] मे मध्वा व्रतमाहृतम्[4] । मधु शुक्रम् । त्वं होतेव क्षदसे[5] प्रियम् । + + + + + + + + ॥

दुक्षद्मा[6] यो वसतौ स्योनकृत् (ऋ. वे. १. ३१. १५)

इति ह्यन्ननाम भवति । हिंसार्थश्च भवति ॥

क्षद्मेव तिग्ममसनाय सं श्यत् (ऋ. वे. १. १३१. ४)

इति । सोऽहमभृतस्सन्[7] पुनरपि यज्ञे तव सोमपानानन्तरा[8] त्वया संवादं कुर्यामिति ॥

[1] Read वोचावहै.

[2] Read वचांसि मिश्रीकृणवावहै. What is written may also be read as कृ instead of as क.

[3] Read यतो.

[4] It ought to be मे मध्वाहृतम्.

[5] After होतेव the corner is broken and about three letters completely gone. They must be क्ष द से. Page 20*b* ends here.

[6] After प्रियम् the leaf is worm-eaten and about eight syllables cannot be deciphered. What follows is दुक्षद्मा. The letter before this must be स्वा. The first two letters appear to be क्षदि. The two letters before स्वादु look like सोत्र or थोत्र. The letter in between cannot be made out.

[7] Perhaps to read सोऽहमाहृतस्सन्.

[8] Read सोमपानानन्तरं.

सं नु वोचावहै । त्वं च अहं च वरुण अधुना संवादं पुनः पुनः कुर्वो यतो मे मधुसदृशं स्तोत्रं संभृतम् । त्वं च होता इव प्रियं क्षदसे । क्षदिः शकलीभावकर्मा । यथा होता अध्रिगुं वदन् वाचा पशुं शकलीकरोति एवमिदं तुभ्यं दत्तमिति तुभ्यं दत्तमिति वदसि ॥ (१७)

**दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः ॥**

दर्शं नु । तथोक्ते वरुणं[1] प्रादुरभूत् । तमेतया तुष्टाव । दृष्टास्म्यहं[2] क्षिप्रं विश्वस्य दर्शनीयं वरुणम् । दर्शं च तद्रथमधिक्षमि भूम्याम् । क्षमते भूतानिति । एता जुत[3] श्रुतवान् वरुणो मे गिरः ॥

दर्शं नु । दृष्टवानस्म्यहमिदानीं सर्वस्य दर्शनीयं वरुणम् । दर्शं चास्य रथं भूमेरुपरि । स मे स्तुतीरेताः सेवताम् ॥ (१८)

**इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥**

इद्धम्म[4] । श्रुधीति पादान्तः । भवं[5] इत्येकमप + मन्वितम्[6] । तेनार्थवशात् पादव्यवस्था भूयसीत्येतावत्[7] । तत्रार्धर्चमध्ये सन्देहे सति

[1] It can also be वरुणः After ण there is a hole and only a part of the visarga or anusvāra remains. It looks more like a part of anusvāra.

[2] Read दृष्टवानस्म्यहं.

[3] Read जुषत.

[4] Read इमं मे. The pratika is not separately given.

[5] Read हवं.

[6] Not clear. After प, leaf worm-eaten. One letter gone. Perhaps the letter is the य् mark to form प्य with the preceding प. Or, perhaps to read इत्येतत् पदमन्वितम् or इत्येतदप्यन्वितम्.

[7] Something wanting to make the sentence complete.

पदान्तनिर्णयहेतवः सर्व एव छन्दोऽनुक्रमण्यां[1] अस्माभिरुक्ताः । आद्या[2] च मृळयासुभ्यम्[3] । त्वामहं रक्षणेछः कामये इति ॥

इमं मे । इमं मे वरुण शृणु हवम् । श्रुत्वा चाद्य मां सुखय । त्वां रक्षणेच्छुरहं कामये यद्वा अभिगच्छामि ॥ (१९)

**त्वं विश्वस्य मेधिर दि॒वश्च॒ ग्मश्च॑ राजसि । स यामनि॒ प्रति॑ श्रुधि ॥**

त्वं विश्वस्य । त्वं विश्वस्य प्रज्ञ ईशिषे[4] । विश्वस्येत्यस्य प्रपञ्चः दिवश्च ग्मश्च । द्यौः द्योततेः । ग्मा गच्छतेः । गच्छतीव हीयम् । स धमनि[5] प्रति श्रुधि । धातेर्याम गनम्[6] ॥

पूषा यामतिधामनि[7] (ऋ. वे. ९. ६७. १०)

प्रतिश्रवणमरक्षिष्ठामीति[8] ॥

त्वं विश्वस्य । त्वं विश्वस्य जीवनम् । दिवश्च पृथिव्याश्च राजसि । प्राज्ञ स गमने अभिलषितमस्माकं प्रतिश्रुधि ॥ (२०)

[1] Cf. Note 5 on p. 170.

[2] Read अद्या.

[3] Perhaps to read मृळयास्मभ्यम्.

[4] ष in षे worm-eaten. It is only a conjecture.

[5] Read यामनि.

[6] Read यातेर्याम गमनम्.

[7] Read यामनियामनि.

[8] Not clear.

उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत । अवाधमानि जीवसे ॥

स्पष्टोत्तरा[1] ॥

उदुत्तमम् । उत्तमस्य पाशस्य उन्मोचनं मध्यमस्य विचर्तनं अपमोचनं अधमानां बन्धनानां जीवनाय इति ॥ (२१)

---

वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते । सेमं नो अध्वरं यज ॥

वसिष्व । आच्छादयति[2] याज्ञिय[3] वस्त्राणि तेजोमयानि अन्नानां पातेः[4] । सगत्यपादाः[5] ॥

वसिष्वा । आच्छादय यज्ञिय ज्वाला अन्नानां पते । अथ अस्माकं यज्ञमिमं यज ॥ (१)

नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः । अग्ने दिवित्मता वचः ॥

[1] उदुत्तमं इति ऋक्. Here there is the figure 6 to mark the end of the Sūkta.

[2] Read आच्छादय.

[3] Read यज्ञिय.

[4] Read पते.

[5] Not clear.

निनः। निषीदास्माकं होता सन् वरणीयः। सर्वदा युवतमम[1] मन्मभिः प्रज्ञापकैस्तेजोभिर्युक्तः। अने[2] दिविमता[3] वचः दीप्तिमता वचसा स्तूयमानः।

उतो विद्युत्मतीनाम् (ऋ. वे. १. १३४. ६)

इति ॥

नि नो होता। निकामय अस्मान् होता वरणीयः सदा युवतम पूजनीयैः स्तुतिभिरग्ने दीप्तिमता स्तोत्रेण ॥ (२)

**आ हि ष्मा सूनवे पितापिर्यजत्यापये। सखा सख्ये वरेण्यः ॥**

त्वन्धुरापिः[4]। सखा सन् सख्ये। भावप्रधानं चेदन्तोदात्तः[5]।

सख्ये त इन्द्र (ऋ. वे. १. ११. २)

इति ॥

आ हि ष्मा। कश्चिदग्नेः स्तोता पुत्रस्थाने भवति। तस्मै अयं पिता भूत्वा यजति। ज्ञातिर्ज्ञातये मित्राय वरणीयः। हिशब्दो विस्मये ॥ (३)

**आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा। सीदन्तु मनुषो यथा ॥**

[1] Read युवतम.

[2] Read अग्ने.

[3] Read दिवित्मता.

[4] The beginning of the commentary is missing.

[5] In this stanza, the accent is in स. But in the stanza quoted just below it is in ख्ये.

आनः । आसीदन्त्वस्माकं यज्ञं च या आत[1] रिसादसो[2] वरुणादयो मनोदिव[3] प्रजापतेः । वरुणो मित्रो[4] अर्यमेति बह्वशो[5] भविष्यते[6] । अत्र पादात्मगता[7] वाक्यत्वात् समयथं भजन्ते । पादमध्यगतानधीमहे[8] ।

येन चष्टे वरुणो मित्रो अर्यमा (ऋ. वे. ८. २५. १६)

इति[9] ॥

आ नो बर्हिः । आसीदन्तु बर्हिरस्माकं इमे देवाः मनोरिव प्रजापतेः रिशतां असितारः ॥ (४)

**पूर्व्यं होतरस्य नो मन्दस्व सख्यस्य च । इमा उ षु श्रुधी गिरः ॥**

**यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हविः ॥**

एकं वर्जयमानेन हविष्मान् मन्यन्देवयजन हे[10] त्वयैव तेषामपि[11] हविभूतय इति[12] ॥

[1] च या आत not intelligible.

[2] Read रिशादसो.

[3] दि partly worm-eaten. But it is दि and not रि. Read मनोरिव.

[4] मि worm-eaten.

[5] Read बहुशो.

[6] Not quite clear. What is written is भविष्यतेत्र. Perhaps to read भविष्यति । अत्र.

[7] Perhaps to read पदान्तगता.

[8] Passage not intelligible.

[9] After अर्यमेति, a letter just begun and crossed.

[10] न in यजन completely worm-eaten.

[11] पि worm-eaten.

[12] Passage not intelligible. It is the commentary on the latter part of the 6th verse. The latter part of the passage must be देवान् यजामहे । त्वयैव तेषामपि हविर्हूयत इति.

पूर्व्ये होतः । पूर्वेषु भव होतरस्माकं इदं सख्यमनुपालय । स्तुतीश्च इमाः सुष्ठु शृणु ॥ (५)

यच्चिद्धि । यदि हि वयं बहुना धनेन सर्वान् देवान् यजामहे त्वय्येव तेभ्योऽपि हूयते हविः ॥ (६)

प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयम् ॥

प्रियः । अस्त्वस्माकमग्निः प्रियम्[1] । वसञ्चाग्नेः[2] प्रियाम स्वग्नयः[3] सुसमिध्यानस्य[4] इति[5] ॥

प्रियो नः । प्रियो नो अस्तु विश्पतिर्होता मादयिता वरणीयः । वयं च अस्मै स्वग्नयः प्रियाः स्याम ॥ (७)

स्वग्नयो हि वार्यं देवासो दधिरे च नः । स्वग्नयो मनामहे ॥

स्वग्नयः । सुसमिद्धाग्नयो देवास ऋत्विजो वरणीयं हविरग्नये धायन्ति[6] चास्माकम्[7] । वयं च स्वनयः[8] स्तुमोऽग्निमिति ॥

स्वग्नयो हि । स्वग्नयो हि वरणीयं धनमस्मभ्यं देवा धारयन्ति । ततो वयं स्वग्नयो हविर्वहनाय अग्निं स्तुमः ॥ (८)

[1] Read प्रियः.

[2] Read वयञ्चाग्ने.

[3] Read प्रियाः स्वग्नयः.

[4] Read सुसमिद्धाग्नय.

[5] The words from विश्पतिः to वरेण्यः not commented.

[6] Read धारयन्ति.

[7] म् in कम् worm-eaten.

[8] Folio 20*a* ends with स्वन. Read स्वग्नयः

**अथा न उभयेषाममृत मर्त्यानाम् । मिथः सन्तु प्रशस्तयः ॥**

अथ । अमृताग्ने[1] यं प्रति[2] मर्तानामस्माक[3] देवानां चेत्यु-भयेषां परस्परं सन्तु प्रशस्ता भद्रा गिर इति ॥

अथा नः । अमृत अग्ने तव च अस्माकं च मर्त्यानामुभयेषां परस्परं प्रशस्तयः सन्तु । सुष्टुतमिति त्वं ब्रूहि । सुदत्तमिति वयं इति ॥ (९)

**विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो ॥**

विश्वेभिः । सर्वैरग्ने अग्निभि[4] + + यज्ञमिदं वचः । चनोऽन्नं धेहि । सभसो[5] यहो सहसस्पुत्र । बलवत्तथा + सहसस्पुत्र[6] उक्तः । मथ्य-मानो बलाज्जायत इति सहस्सूत्वं[7] ब्राह्मण उक्तम् । बहुपुत्रः याम्याहुत इति[8] ॥

[1] Read अमृताग्ने.

[2] The purpose of यं प्रति not clear.

[3] मर्तानामस्माकं.

[4] Read अग्निभिः After this one inch left blank; the word इमं is left out.

[5] Read सहसो.

[6] बलव. A few syllables are mostly worm-eaten. त्त can be made out. The next syllable may be या or था. Then one syllable is completely gone. Perhaps it is च or हि. Then सह can just be made out. सस्पु is clearer. Then the letters are in tact. Not quite intelligible.

[7] Read सहसस्पुत्रत्वं.

[8] Not quite clear.

इमं यज्ञमिदं वचो जुषाण[1] उपागहि (ऋ. वे. १. ९१. १०)

इति । निरपेक्षत्वान्नानेन समः । तेन विसृष्ट इति[2] ॥

विश्वेभिरग्ने । सर्वैः सहायभूतैरग्निभिः अग्ने अस्माकं यज्ञमिमं इदं च स्तात्रं अन्नं च आत्मस्थं कुरु बलस्य पुत्र ॥ (१०)

---

**अश्वं न त्वा वारवन्तं वन्दध्यां अग्निं नमोभिः । सम्राजन्तमध्वराणाम् ॥**

अश्वम् । अश्वमिव त्वा वारवन्तं रक्षोहणम् । वालो दंशवारणा[3] । वन्दस्यै[4] वन्दे । वन्दितुः[5] प्रवृत्तोऽस्तीति[6] वा । अग्निं स्तुभिः[7] । सर्वेषां यज्ञानां स्वामिनमिति ॥

अश्वं न त्वा । अश्वमिव त्वा बालवन्तं नमस्कारैर्वन्दितुं ईशानं यज्ञानां उपक्रमे इति ॥ (१)

[1] Read जुजुषाण.

[2] Here there is the figure 7 to mark the end of the sūkta. The figure is worm-eaten.

[3] Read दंशवारणः.

[4] Read वन्दध्यै.

[5] Read वन्दितुं.

[6] Perhaps to read प्रवृत्तोऽस्मीति.

[7] Read स्तुतिभिः

स घा नः सूनुः शर्वसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं बभूयात् ॥

सघ । स खल्वस्माकं शवसा सूनुः स्थूयमान[1] । शवसस्पुत्रः[2] । पृथुगमनः सुसुखो भवतु । मीढ्वान् सेक्ता युवा वर्षिता वेति । पुनरस्माक-मिति पूरणम् ॥

स वा नः । स खल्वस्माकं बलेन स्तूयमानः विस्तीर्णगमनः सुसुखः कामानां सेक्ता अत्यन्तं भवतु ॥ (२)

स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद्विश्वायुः ॥

स नः । सोऽस्माकं दूरादन्तिकाच्च । यो वः काम्योर्त्य[3] आगच्छति तस्मान्निपाहि । सदैव व्याप्तगमन इति ॥

स नो दूरात् । सोऽस्मान् दूरादन्तिकाच्च पापमिच्छतो मर्त्यात् सदैव निपाहि सर्वेषामभिगन्ता ॥ (३)

इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् । अग्ने देवेषु प्र वोचः ॥

इमम् । अस्माकमिमं हविषः सनिं प्रदानम् । गायत्रं च नवतन्तरं[4] छन्दः अग्ने देवेषु प्रब्रूहीति ॥

[1] Read स्तूयमानः

[2] Perhaps to read शवसस्पुत्रो वा.

[3] The passage is very corrupt. Perhaps to be reconstructed यो वधकामो मर्त्य.

[4] Read नवतरं.

इममू षु। अस्माकमिदं हविषो दानं गायत्रं च साम नवतरं अग्ने देवेषु ब्रूहि ॥ (४)

**आ नों भज पर॒मेष्वा वाजेॆषु मध्य॒मेषुं। शिक्षा॒ वस्वो॒ अन्तंमस्य ॥**

आ नः। छजिः प्रापणार्थाः[1]। प्रापयास्मान् परमेषु दिव्येषु वाजेषु अन्नेषु वसुषु। भज च मध्येमेष्वन्तरिक्षेषु[2]। देही[3] वस्वः वसु पतिकतमं पौकिवमिति[4] ॥

आ नो भज। प्रापयास्मान् दूरस्थेषु अन्नेषु आभज च मध्यमेषु। तथा प्रयच्छ अन्तिकतमं धनमिति ॥ (५)

**वि॒भ॒क्तासिं चित्रभानो॒ सिन्धो॑रू॒र्मा उ॑पा॒क आ। स॒द्यो दा॒शुषें क्षरसि ॥**

विभक्ता। विभक्ता वहसि[5] वसोः स्तोत्रे। विभावसो[6]। यथा सिन्धोरूर्मौ विभजन्त्युपाके समीपे। आकार उपमार्थीयः। प्रवृद्धोदकाया[7] नद्या विभजत्युदक्षर्कं[8] पार्श्वे तथा। एतदेवोक्तं सद्यो दाशुषे क्षरसि ॥

[1] Read भजिः प्रापणार्थः.

[2] Read मध्यमेष्वन्तरिक्षेषु.

[3] Read देहि.

[4] Read अन्तिकतमं भौमिकमिति. The letter कि is worm-eaten; yet it is decipherable.

[5] Read असि.

[6] Is विभावसो the interpretation of चित्रभानो or did Mādhava read विभावसो instead of चित्रभानो?

[7] Read प्रवृद्धोदकाया.

[8] Read विभजन्त्युदकं.

विभक्तासि। दाता भवसि चित्रदीप्ते स्यन्दमानस्य गोधनस्य संघे अन्तिकस्थे सति। सद्य एव त्वं यजमानाय क्षरसि॥ (६)

**यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः। स यन्ता शश्वतीरिषः॥**

यमग्ने। यं त्वमग्ने संग्रामेष्ववसी[1]। यं च संग्रामे प्रेरयसि स संगच्छति बहून्यन्नानि॥

यमग्ने। यं त्वमग्ने संग्रामेषु मर्त्यं रक्षसि यं वा तत्र प्रहिणोषि स हि यच्छति बहून्यन्नानि॥ (७)

**नकिरस्य सहन्त्य पर्येता कयस्य चित्। वाजो अस्ति श्रवाय्यः॥**

न किम्[2]। यं चा[3] संग्रामेष्ववसि नकिरस्य सहन्त्य अहिभवतः[4] पर्येता अतिक्रौमिता[5]। कयस्य[6] चित् कस्यापि तस्यापि। वाजश्च भवन्ति[7] श्रवणीय इति॥

नकिरस्य। यं त्वं संग्रामेषु सहनशील रक्षसि अहिंसार्थं अस्य परितो गन्ता न कश्चिदस्ति। यकार उपजनः। कस्यचिदपि। ससेनं असेनं वा न तं कश्चिदभिभवति। श्रवणीयमन्नं च तस्यास्ति शत्रुभ्यो जितम्॥ (८)

[1] Read संग्रामेष्ववसि.

[2] Read नकिः

[3] Read यं च.

[4] Read अभिभवितः.

[5] Read अतिक्रमिता.

[6] क completely worm-eaten.

[7] Read भवति.

स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥

स वाजम् । सोऽग्निः संग्रामं विश्वस्य द्रष्टा । अर्वद्भिरस्तु तरुता । अर्वन्तोऽश्वाः । तैर्विर्मेधाविहिरश्वैरेवास्तु[1] संभक्ता संभक्ता[2] संग्राममिति[3] ॥

स वाजम् । स संग्रामं विश्वस्य द्रष्टा अश्वैरस्तु । तरुता तारको मेधाविभिरश्वैरस्तु संग्रामं संभक्ता ॥ (९)

जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥

जराबोध । स्तुत्या देवानां बोधयितः । अत्र निरुक्तम्[4]—जरा स्तुतिर्जरतेः स्तुतिकर्मणः । तत्[5] बोध । तय्यतः[6]—-इति । तद्विविड्ढ तत कुरु मनुष्यस्य यज्ञियाय । स्तोमं रुद्राय[7] दर्शनीयमिति ॥

जराबोध । स्तुत्या देवानां बोधयितः स्तोतः तज्जानीहि मनुष्यस्य यज्ञियाय स्तोमं रुद्राय दर्शनीयम् । अत्र यास्कः—अग्निरपि रुद्र उच्यते । जरा स्तुतिः । जरतेः स्तुतिकर्मणः । तां बोधयितरिति वा । तत् विविड्ढि तत् कुरु मनुष्यस्य मनुष्यस्य यजमानाय स्तोमं रुद्राय दर्शनीयमिति ॥ (१०)

स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः । धिये वाजाय हिन्वतु ॥

[1] Read तैर्विप्रैर्मेधाविभिरश्वैरेवास्तु.

[2] Repetition of संभक्ता not wanted.

[3] Folio 21*b* ends with संग्राम.

[4] N. 10. 8.

[5] Read तां.

[6] Read तया बोधयितः.

[7] मं रुद्रा mostly worm-eaten.

सनः । सोऽस्मान् महानिमानवर्जितोऽपरिच्छिन्नः[1] । धूमकेतुर्बहु-रश्मिः[2] । धिये वाजाय धारकाय संग्रामाय । प्रेरयतु ॥

स नो महान् । सोऽस्मानग्निः मानवर्जितो धूमकेतुः बहूनां कमनीयः कर्मणे अन्नाय च प्रहिणोतु ॥ (११)

**स रे॒वाँ इ॑व वि॒श्पति॒र्दैव्यः॑ के॒तुः शृ॒णोतु नः । उ॒क्थैर॒ग्निर्बृ॒हद्भा॑नुः ॥**

स रेपान्[3] । धनवानिव मनुष्यरजो[4] देवतानां प्रज्ञापकः शृणोत्व-स्मानुक्थैर्युक्तान् । अपि वा उक्थैः स्तुत्यैर्देवैस्सह[5] । महाप्रभः ॥

स रेवान् । स धनवानिव मनुष्यराजो देवानां प्रज्ञानभूतः शृणोत्वस्मान् क्रियमाणैः स्तोत्रैः अग्निर्महातेजाः ॥ (१२)

**नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ ।**

**यजा॑म दे॒वान् यदि॑ श॒क्नवा॑म॒ मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥**

नमः । नमो महाशरीरेभ्यो[6] नमोऽल्पशरीरेभ्यः । अर्भकोपहततर इति यास्कः[7] । नमो युवभ्यो नमो वृद्धेभ्यश्च । आशिनोऽश्नोतेः । शक्ताश्चे-

[1] Read महानग्निर्मानवर्जितो.

[2] हु completely worm-eaten.

[3] Read रेवान्.

[4] Read मनुष्यराजो.

[5] Read स्तुत्यैर्देवैस्सह. This was what was first written. Then another ए mark was written before दें.

[6] हा completely worm-eaten.

[7] What Yāska says is अर्भकमवहृतं भवति (नि. ३. २०).

द्यजाम वयं देवान् । मा न्यायसः[1] प्रशस्तस्य । शयनं आवृत्ति[2] । ज्यायो भद्रजाहं निराशोऽभूवमिति[3] ॥

नमो महद्भ्यः । नमो महाशरीरेभ्यः । नमोऽल्पशरीरेभ्यः । नमो युवद्भ्यो वृद्धेभ्यश्च । शक्ताश्चेद्वयं देवानेव यजामोऽभ्युदयस्य लाभाय । हे देवाः माहं वृक्षि । वृश्चतिः छेदनकर्मा । अहं निराशो मा भूवमिति ॥ (१३)

---

यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥

यत्र । चतस्र ऐन्द्र[4] । औलूखल्यौ[5] परेद्वे । मुसलोलूखलस्य द्वे । न व म्यैक्ष्वाकमनुशास्ति । यस्मिन्नहिषवार्थे[6] ग्रावा पृथुमूल ऊर्ध्वे[7] भवति । ग्रावा गृणाते[8] । तत्रोलूखलसुतान् सोमान् ह्वाव[9] जलूगुलः पानार्थ[10] इति ॥

[1] Read मा ज्यायसः.

[2] Read आवृक्षि.

[3] The passage is corrupt. There is the figure 8 here to mark the end of the Sūkta.

[4] Read ऐन्द्र्यः some space left blank after न्द्र.

[5] Read औलूखल्ये.

[6] Read यस्मिन्नभिषवार्थे.

[7] ल and ऊ worm-eaten. Read ऊर्ध्वो.

[8] Read गृणातेः

[9] Read अव.

[10] Read पानार्थं.

यत्र ग्रावा । यस्मिन् यज्ञे अभिषवग्रावा पृथुमूल आहननप्रकार ऊर्ध्वमुखो भवति सोमाभिषवाय तत्रोलूखलसुतान् सोमान् इन्द्र त्वमवजल्गुलः अवागिरः पिब इति ॥ (१)

**यत्र द्वाविव जघनाधिषवण्या कृता । उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥**

यत्र[1] । जघनो हन्तेः । यत्र द्वाविव जघनावधिषवणार्थे फलके कृते भवतः ॥

यत्र द्वाविव । यत्र द्वौ इव जघनावधिषवणफलके विस्तीर्णे अध्वर्युभिः कृते । प्रतिमुखे पुरस्तात् समाकर्ते पश्चादिवाधिषवणफलकयोः सूत्रमिति ॥ (२)

**यत्र नार्यपच्यवमुपच्यवं च शिक्षते । उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥**

यत्र[2] च नारी पत्नी शालाया अपच्यवं निर्गमनमुपच्यवञ्च शिक्षते करोति ॥

यत्र नारी । यत्र अभिषवप्रवृत्तं ग्रावाणं दृष्ट्वा स्त्री भर्तरि प्रवेशकौशलं निर्गमनकौशलं च शिक्षते ॥ (३)

**यत्र मन्थां विबध्नते रश्मीन्यमितवा इव । उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥**

यत्र चाम्निरकरणार्थं[3] मन्थां विबध्नते । मन्था मतेथर्विक्षोपणार्थात्[4] । यथा रश्मी[5] निबध्नतेऽश्वानां यमनार्थम् । कशा बन्धनाः क्रियत[6] इति ॥

[1] The Pratīka is not separately given.
[2] The Pratīka is not separately given.
[3] Read चाग्निकरणार्थम्.
[4] Read मथतेर्विक्षेपणार्थात्. This interpretation is not in the Nirukta.
[5] Read रश्मीन्.
[6] क्रियत is not at all legible. It is only a conjecture. The purpose of this explanation is not clear. For an explanation of Kas'ā see N. 9. 19.

यत्र मन्थाम्। यस्मिन् यज्ञे अभिषवाय ग्रावाणं धारयन्ति रश्मीनिवाश्वानां यमनाय तत्र उलूखलसुतानामिति ॥ (४)

**यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे।**
**इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥**

यच्चिछद्धि त्वम्। उलूखलमुरुखं वोर्ध्वकं[1] वोर्करं वा[2]। उरुं[3] कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं[4] वै तत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणम्[5]। यद्यपि[6] हि त्वं गृहे गृहे उलूखलक युज्यसे युक्तो भवसि। हापि[7] यज्ञे दीप्ततमं वद। जयतामिव दुन्दुभिः। दुम्रतेर्वधकर्मणो दुन्दुभिरिति यास्कः[8] इति ॥

यच्चिद्धि त्वम्। यद्यपि हि त्वमुलूखल सर्वेषु गृहेषु युज्यसे स इहापि दीप्ततमं वद मुसलेनाभिहतो यथा जयतां दुन्दुभिः ॥ (५)

**उत स्म ते वनस्पते वातो वि वात्यग्रमित्।**
**अथो इन्द्राय पातवे सुनु सोममुलूखल ॥**

[1] Read उलूखलमुरुकरं वोर्ध्वखं.

[2] N. 9. 20.

[3] रु mostly worm-eaten ; scarcely decipherable.

[4] त्तदुलूख mostly worm-eaten.

[5] cf. उरु मे करदिति तस्मादुरुकरमुरुकरँ ह वै तदुलूखलमित्याचक्षते परोक्षम्। (श. ब्रा. ७. ५. १. २२). There seem to be two Brāhmaṇa quotations here (1) उरं कुर्वित्यब्रवीत्तदुलूखलमभवत (2) उरुकरं ह वै तदुलूखलमित्याचक्षते परोक्षम्. There are scribal errors and variation of readings in the quotation.

[6] It looks more like वि than like पि.

[7] Read इहापि.

[8] What Yāska says is: दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणः (नि. ९. १२).

उत स्म । वानस्पत्यमुलूखलमिति वनस्पतेराशीः । तवाग्रमेव वातो विवाति तलयत्विति[1] ॥

उत स्म ते । वृक्षविकारस्य वृक्षवत् स्तुतिः । अपि च ते वनस्पते वातः अग्रमेव चलयति इन्द्रप्रसादात् । तथा सति इन्द्रस्य पानार्थं सुनु सोमं उलूखल ॥ (६)

**आयजी वाजसातमा ता ह्युऽच्चा विजर्भृतः । हरी इवान्धांसि बप्सता ॥**

आयजि[2] । आयष्टव्ये अन्नानां समाभर्तृतमे[3] । ते ह्युच्चैर्विज-भ्रियेते[4] । हरी इवान्तानि[5] भक्षयन्ताविति[6] ॥

आयजी । उलूखलमुसलयोर्द्वे । आयष्टव्ये अन्नानां संभक्तृतमे ते हि उच्चैर्विह्रियेते अश्वाविव धान्यानामावहनकाले अन्नानि भक्षयन्तौ ॥ (७)

**ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः । इन्द्राय मधुमत्सुतम् ॥**

ता नः । तौ नो अद्य वनस्पती दर्शनीयौ इन्द्राय मधुमदन्धः सुदं[7] सोमं सुनुतमिति[8] ॥

[1] Read चलयतीति. The beginning and end of the commentary on this stanza missing.

[2] Read आयजी.

[3] Read संभक्तृतमे.

[4] Read ह्युच्चैर्विह्रियेते.

[5] Read इवान्नानि.

[6] Folio *22a* ends here.

[7] Read सुतं.

[8] ऋष्वेभिः सोतृभिः not commented.

ता नो अद्य। ता नो अद्य वनस्पती महान्तौ महद्भिः सोतृभिर्ग्राविभिः सह इन्द्रार्थं मधुमदन्धः सुतम्। परोक्षोपक्रमाः प्रत्यक्षापवर्गाश्च मन्त्रा भवन्ति विपरीताश्च ॥ (८)

**उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज। नि धेहि गोरधि त्वचि ॥**

उच्छिष्टम्। शिष्टं सोमं चम्वोरधिषवणफलकयोरुपरि भर। अथाभिषुतं सोमं पवित्रे आसृज। नियेभि[1] गोरयी[2] त्वच्यानन्सुमे[3] चर्मणीति[4] ॥

उच्छिष्टम। चर्माधिषवणीयं वा सोमं वान्त्या प्रशंसति इत्युक्तम्। प्रजापतेर्हरिश्चन्द्रस्य अन्त्या चर्मप्रशंसा वा इति कात्यायनः। हरिश्चन्द्र अधिषवणफलकयोरुपरि अवशिष्टं सोमं भर। सुतं च सोमं दशापवित्रे आसृज। तदर्थं निधेहि अधिषवणफलकयोरुपरि गोस्त्वचि इति ॥ (९)

---

**यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥**

यच्छिद्धि। यस्माद्धि। सत्य सोमस्य पातरनाधृष्टा इव स्मोऽप्रशस्ता इव स्मसीति[5]। तानस्मानाशंसय क्षिप्रमपरैर्गवादिनिमित्तं बह्वन[6] शुभ्रिणः शोभना इति ॥

[1] Read निधेहि.
[2] Read गोरधि.
[3] Not clear.
[4] Here there is the figure 9 to mark the end of the Sūkta.
[5] There seems to be some confusion here.
[6] Read बह्वन्.

यच्चिद्धि । यत् सत्य सोमस्य पातः वयमाशंसारहिता दरिद्रैरपि प्रार्थिता इव भवामः । ततोऽस्मान् बहुधन दरिद्रैः क्षिप्रमाशंसय गवादिषु त्वया दत्तेषु शुभ्रिणः शोभायुक्ता इति । यद्वा स्तुतिरहितानाशंसय गवादिप्रदानेन इति ॥ (१)

**शिप्रिन्वाजानां पते शचीवस्तव दंसना ।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥**

शिप्रिन् । शिप्रिन् अन्नानां प्रते[1] प्रज्ञावान्[2] तव दंसनार्थो नृणां[3] बन्धनमस्ति ॥

शिप्रिन् वाजानाम् । हनूमन् अन्नपते प्रज्ञावन् तव विद्यते कल्याणं कर्म इति ॥ (२)

**नि ष्वापया मिथूदृशा सस्तामबुध्यमाने ।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥**

निष्वापय । निष्पपय[4] मिथुनभूते दृश्यमाने द्वे स्त्रियौ यमस्य दूत्यौ । ते सस्तामस्मानबुध्यमाने । ससिः स्वप्नार्थ इति ॥

विष्वापय । मुमूर्षुः प्राणहरणार्थं यमादागते मिथुनीभूते दृश्यमाने द्वे स्त्रियौ पश्यति । ते त्वमिन्द्र निष्वापय । त्वया निष्वापिते मया अबुध्यमाने सस्तां स्वपताम् ॥ (३)

[1] Read पते.

[2] Read प्रज्ञावन् . The letter ज्ञ slightly worm-eaten.

[3] नृ completely worm-eaten. A bit of the ऋ mark visible. Only a conjecture.

[4] Read निष्वापय.

**ससन्तु त्या अरातयो बोधन्तु शूर रातयः ।**

**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥**

ससन्तु । ससन्तु त्य[1] अरातयो बुध्यन्तां चास्माकं शूर रातयो दातार इति ॥

ससन्तु त्याः । स्वपन्तु त्या अज्ञातयो बुध्यन्तु च शूर ज्ञातयः ॥ (४)

**समिन्द्र गर्दभं मृण नुवन्तं पापयामुया ।**

**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥**

समिन्द्र । गर्दभो रासभः । गर्दहश्शब्देन[2] भीषयतीति वा भासत इति वा । संमृण गर्दभमिन्द्र शब्दायमानं पापया अनया वाचा ॥

समिन्द्र गर्दभम् । सं मृणेन्द्रं शब्दायमानं पापया अनया वाचा ॥ (५)

**पताति कुण्डृणाच्या दूरं वातो वनादधि ।**

**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥**

पताति । पतति[3] । कुण्डृणाची काचिन्मृगी । कुण्डृणाची काचिन्मृगी[4] । कुण्डृणं ककौटिल्यमञ्चतीति[5] । यद्वा[6] कुटिलमनुष्ठीयमाना गतिः कुण्डृणाची । दूरं हतो[7] वनादरण्यादधीति ॥

[1] Read त्या.
[2] Read गर्दभः शब्देन.
[3] First written पताति. Then आ mark in ता deleted by a dot above.
[4] Repetition not wanted.
[5] Initial क not wanted. Read कौटिल्यमञ्चतीति.
[6] य mostly worm-eaten.
[7] Read वातो.

पतति। कुण्डृणाची नाम पक्षी। तेन सह अरण्याद्दूरं मत्समीपमापतति वायुः ॥ (६)

**सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम्।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥**

सर्वम्। सर्वं परिक्रोशं परितो क्रोशती तं[1] जहि। जम्भयच्छन्ति[2]। कृकदाश्वं काकं कृकम्[3]। कृकलासं दशतीति। कृतः[4] कृन्तदे[5] विकृत्तदेहोऽन्यो वा कृकदाश्व इति[6] ॥

सर्वं परिक्रोशम्। अन्यमपि सर्वं परिक्रोष्टारं वृकादिकं नाशय। जम्भयाशु कुरु कृकलासम्। आ तू न इन्द्र इति ॥ (७)

---

**आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम्। मंहिष्ठं सिञ्च इन्दुभिः ॥**

आश्वः[7]। आसिञ्चे आपूरयामि वः[8] ॥

[1] Perhaps to read परितो क्रोशतीति। तं.
[2] Perhaps to read छिन्धि.
[3] कृकम् seems unwanted.
[4] Read कृकः
[5] Read कृन्तते:
[6] Here there is the figure 10 to mark the end of the Sūkta.
[7] Read आ वः
[8] Only a small portion of the commentary is seen in the MS.; there is no break in the MS.

आ व इन्द्रम् । यथा अन्नमिच्छन्तः कूपमुत्सिञ्चन्ति तस्य सेकार्थं एवं युष्मदर्थं अहं दातृतममिन्द्रं सोमैर्हुतैरासिञ्चे इति कामानुत्सिञ्चामि इति ॥ (१)

**श॒तं वा॒ यः शुची॑नां स॒हस्रं॑ वा॒ समा॑शिराम् । एदु॑ नि॒म्नं न री॑यते ॥**

स्वरेण ये संगतास्ते समाशिरः[1] । न्ते च[2] गच्छति । यथा निम्नमुदकम् । निम्नं नमेतः[3] ॥

शतं वा । पूतानां सोमानां शतं वा सहस्रं वा सम्यगाशिरेण मिश्रितानां एवागच्छति निम्नमिवोदकम् ॥ (२)

**सं यन्मदा॑य शु॒ष्मिण॑ ए॒ना ह्य॑स्यो॒दरे॑ । स॒मु॒द्रो न व्यचो॑ द॒धे ॥**

तत्र हेतुमुत्तरया प्रदिशति संयदिति । यत् सोमवाशततमस्य[4] बलिन इन्द्रस्य मन्दाया[5] भवति । सहस्रं वा बलिननेनस्यस्योदरे[6] व्यचो व्याप्तिः सन्दधे । यथा समुद्रो व्याप्त एव[7] एवमस्योदरे सोमो व्याप्त इति ॥

सं यन्मदाय । यत् सोमपात्रशतं अस्य बलिन इन्द्रस्य मदाय भवति सहस्रं वा अनेनास्योदरे अन्तरिक्षमिव व्याप्तिः संदधे । यथान्तरिक्षं विततं तद्वद्व्याप्तमिति । तस्मादागच्छतीति ॥ (३)

[1] The earlier part of the commentary not seen in the MS.
[2] Not clear.
[3] Read नमते:
[4] Read सोमपात्रशतं अस्य.
[5] Read मदाय.
[6] Read बलिनः अनेन अस्य उदरे.
[7] एव not wanted.

अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥

अयमु ते[1] सोमो निहितः । त्वं तं समतसि संगच्छसि[2] । कपोत इव[3] कपोतीं गर्भयानीम्[4] । कपोतः कस्य पोत इति वर्णतो बुद्धिमुत्पादयति । वचस्तदस्माकं[5] स्तोत्रं चोहसे प्रापवस्यात्मानं[6] इति ॥

अयमु ते । अयं सोमस्त्वदीयः । तं त्वं कपोतः कपोतीमिव गर्भधानीं पिपासुः संगच्छसि । स्तुतिं च तामस्मदीयां आत्मानं प्रापयसि ॥ (४)

स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते । विभूतिरस्तु सूनृता ॥

स्तोत्रम् । स्तोत्रं धानानां[7] पते गीर्भिरुह्यमान वीर[8] यस्य + + + + + + + स्य[9] ते विभूतिर्लक्ष्मी[10] सूनृता सत्य + स्वस्विति[11] ॥

[1] The pratika is not separately given.

[2] संग mostly worm-eaten.

[3] त in कपोत and व in इव completely worm-eaten.

[4] Read गर्भधानीम्.

[5] Read वचस्तदस्माकं.

[6] Read प्रापयस्यात्मानं.

[7] Read राधानां or धनानां.

[8] Folio *22b* ends with ह्य. The four letters मानवीर which begin the next leaf are completely broken off. It is only a conjecture. The small bit preceding य looks like the end of र.

[9] After यस्य about six or seven syllables are completely gone. Perhaps to read यस्य स्तोत्रं क्रियते तस्य.

[10] Read लक्ष्मीः

[11] After सत्य the next syllable is mostly worm-eaten and cannot be deciphered. It begins with स् and ends with आ; the आ mark is in tack. The second member of the conjunct consonant not clear. The following two syllables are not very legible; may be स्मस्त्रि or स्त्रस्त्रि. The last letter ति is clear. Perhaps to read सत्या अस्त्विति.

स्तोत्रम् । गीर्भिरुह्यमानं अन्नानां पते यस्य तव स्तोत्रं इदमनेन क्रियते स्तोत्रा तस्मै सत्या श्रीरस्तु ॥ (५)

**ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो । समन्येषु ब्रवावहै ॥**

ऊर्ध्वः । उत्तिष्ठ मम रक्षणायास्मिन् संग्रामे शतक्रतो । त्वं चाहं चान्येषु सपत्नेषु संब्रहवहै[1] मन्त्रयावहै कर्तव्यमिति[2] ॥

ऊर्ध्वस्तिष्ठ । ऊर्ध्वतस्तिष्ठ अस्माकं रक्षणायास्मिन् संग्रामे शतकर्मन् शत्रुषु । त्वं चाहं च संभूय ब्रवावहै ॥ (६)

**योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥**

योगे योगे । प्रवेशे प्रवेशे अतिशयेन बलयुक्तमिन्द्रं युद्धे युद्धे हवामहे सखायः सन्तो रक्षणाय ॥ (७)

**आ घा गमद्यदि श्रवत्सहस्त्रिणीभिरूतिभिः । वाजेभिरुप नो हवम् ॥**

आ घा गमत् । उपागच्छेदिन्द्रो यदि शृणुयादाह्वानं सहस्रसंख्यैः पालनैः अन्नैश्च ॥ (८)

**अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं ते पूर्वं पिता हुवे ॥**

[1] Read संब्रवावहै.

[2] After this there is the passage नानेन बोध इति यास्क इति. This is not found in Yāska. What follows is ये ओ यो. These three syllables are worm-eaten; the middle syllable can scarcely be deciphered. Then follows आरोचमाने । पूर्वार्धे नभोऽन्वय इति. This must belong to the verse 21 in this sūkta. Thus the commentary on 14 verses, *i.e.* 7-20 are completely gone. There is no break in the MS.

अनु प्रत्नस्य। यमिन्द्रं तव पिता आहूतवान् तमहं त्वदर्थं पुराणस्यास्य निवासस्थानादनुक्रमेण हुवे अनेकेषु गच्छन्तं नेतारम् ॥ (९)

**तं त्वा॑ व॒यं वि॑श्ववा॒रा शा॑स्महे पुरुहूत। सखे॑ वसो जरि॒तृभ्यः॑ ॥**

तं त्वा वयम्। तं त्वा वयं सर्वेषां वरणीयं प्रार्थयामः सखे वासयितः स्तोतॄणाम् ॥ (१०)

**अ॒स्माकं॑ शि॒प्रिणी॑नां॒ सोम॑पाः सोम॒पाव्ना॑म्। सखे॑ वज्रि॒न्त्सखी॑नाम् ॥**

अस्माकम्। अस्माकं सोमपानसाधनभूतशिप्रायुक्तानां सोमस्य पातः सोमपातॄणां सखे वज्रिन् सखीनाम्। उत्तरत्र संबन्धः ॥ (११)

**तथा॒ तद॑स्तु सोमपाः॒ सखे॑ वज्रि॒न्तथा॑ कृणु। यथा॑ त उ॒श्मसी॒ष्टये॑ ॥**

तथा तदस्तु। यथा वयं त्वत्तः कामयामहे तथास्माकं तदस्तु। सखे वज्रिन् त्वं तथा कुरु इष्टये अभिलषितसिध्यर्थं इति ॥ (१२)

**रे॒वती॑र्नः सध॒माद॒ इन्द्रे॑ सन्तु तु॒विवा॑जाः। क्षु॒मन्तो॒ याभि॒र्मदे॑म ॥**

रेवतीर्नः। योऽस्माभिस्सह मदति इन्द्रः तस्मिन्निन्द्रे बहुला आपोऽस्माकं सन्तु। क्षुधिता वयं याभिर्मदेम शब्दवन्तो विख्याता वा इति ॥ (१३)

**आ घ॒ त्वावा॒न्त्मना॒प्तः स्तो॒तृभ्यो॑ धृष्णविया॒नः। ऋ॒णोरक्षं॒ न च॒क्र्योः॑ ॥**

आ घ त्वावान्। त्वत्सदृशः स्तोत्रकार्यार्थं शत्रूणां धर्षयितः स्वयमेव गच्छन् भवति बन्धुः। तथा त्वं च स्वयमेवागतः सन् स्तोतॄणां कामान् ऋणोः प्राक्षिपः यथाक्षं चक्रयोः प्रक्षिपन्ति ॥ (१४)

**आ यद्दुवः॑ शतक्रत॒वा कामं॑ जरितॄ॒णाम्। ऋ॒णोरक्षं॒ न शची॑भिः ॥**

आ यद्दुवः । स्तोतॄणां परिचरणं कर्म कामं चाक्षमिव चक्रयोर्यदा त्वं प्रज्ञाभिः प्राक्षिपः तदा स्वयमेवागच्छसि ॥ (१५)

**शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।**

**स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ॥**

शश्वदिन्द्र. । इन्द्रेण दत्तं हिरण्यरथं प्रतिगृह्णन् तं स्तौति । ओष्ठव्यापारं कुर्वद्भिरत्यन्तं हेषद्भिरत्यन्तं श्वसद्भिरेतैरिन्द्रः शश्वज्जिगाय शत्रुधनानि । सोऽस्मभ्यं कर्मवान् ददातु हिरण्यरथम् । स ह्यस्माकं धनस्य दाता । स एव नो ददातु इति ॥ (१६)

**आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् ॥**

आश्विनौ । आयातमश्विनौ अश्वयुक्तेनान्नेन क्षिप्रप्रेरणेन गोयुक्तं दर्शनीयौ हिरण्ययुक्तं च ॥ (१७)

**समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥**

समानयोजनः । युवयोर्हि रथो द्वयोरप्येकभूतो दर्शनीयौ अमरणोऽन्तरिक्षमध्ये गच्छति । तत आयातमिति ॥ (१८)

**न्य१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ॥**

न्यघ्न्यस्य । अश्विनावेकं चक्रं रथस्य पर्वतमूर्ध्नि स्थापयामासतुः । अन्यत्तु चक्रं परितो दिवं गच्छति ॥ (१९)

**कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ॥**

कस्त उषः । कस्त उषः कथनप्रिये । थकारधकारौ समानौ । भोगाय भवति मर्तः मरणवर्जिते । कीदृशं च त्वं व्याप्नोषि दीप्तिमति ॥ (२०)

वयं हि ते अमन्मह्यान्तादा पराकात् । अश्वे न चित्रे अरुषि ॥

नानेन बोध इति यास्कइति[1] । ये आ यो आरोचमाने । पूर्वार्धे नञोऽन्वय इति[2] ॥

वयं हि ते । वयं हि त्वां अज्ञासिष्म अन्तात् आ च पराकात् । पराकशब्दो दूरवचनः । मूलादुपक्रम्यान्तादित्यर्थः । अश्वे गमनशीले पूज्ये आरोचने इति । नकारः सम्प्रत्यर्थीयः ॥ (२१)

त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि धारय ॥

स्पष्टोत्तरा[3] इति[4] ॥

त्वं त्येभिः । त्वमेतैः प्रदिप्सितैरन्नैरागच्छ दिवो दुहितरस्मासु रयिं नियच्छ इति ॥ (२२)

---

त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥

त्वमग्ने । आङ्गिरसो हिरण्यस्तूपः । त्वमग्ने प्रथमो अङ्गिरा ऋषिः । एंगारा[5] आसंस्तेहिरसो[6]ऽभवन्[7] इत्युक्तम् । स्पष्ट उत्तरः पादः । तव

[1] Not traceable to Yāska. It is not certain if this belongs to the commentary of this stanza.

[2] This is all that is available in the commentary on this stanza.

[3] The verse No 22.

[4] Here there is the figure 11 to mark the end of the sūkta.

[5] Read येऽङ्गारा.

[6] Read आसंस्तेऽङ्गिरसो.

[7] A. B. 3. 34.

कर्मणि[1] मरुतः प्रादुर्भवन्त्यन्तरिक्षात् । विभ्रपनासो[2] ज्ञानेन व्याप्नवाना ज्ञातकर्मणि[3] इत्यध्वर्यव: । पूर्वपदं ह्रस्वान्तमवगृह्णन्ति[4] । भ्राजदृष्टयो[5] दीप्यमानायुधाः । ऋषिऋषेः[6] प्रेरणार्थात् । त्वया प्रेर्यमाणा मरुतः प्रादुर्भवन्तीति ॥

त्वमग्ने । हिरण्यस्तूप आङ्गिरसः । त्वमग्ने मुख्योऽङ्गिरसां चैकः सर्वस्य द्रष्टा देवो देवानामभवः कल्याणः सखा । तव कर्मणि त्वया प्रेरिताः कवयो लब्धवेगा लब्धव्याप्तयो वा प्रादुर्भवन्ति मरुतो दीप्तस्वायुधाः ॥ (१)

**त्वम॑ग्ने प्रथ॒मो अङ्गि॑रस्तमः क॒विर्दे॒वाना॒ं परि॑ भूषसि व्र॒तम् ।**
**वि॒भुर्विश्व॑स्मै॒ भुव॑नाय॒ मेधि॑रो द्विमा॒ता श॒युः क॑ति॒धा चि॑दा॒यवे॑ ॥**

त्वमग्ने । अङ्गिरसस्तमः[7] अङ्गिरसाववरिष्ठितः[8] । परिभवसि यज्ञम् । विश्वस्मै भुवना[9] । बहुधा भवन् । सर्वं वनमुद्दिश्य विबं विशेविश इति[10] ॥ मेधिरः प्रज्ञावान् । द्विमाता द्वैमातु +[11] द्वयोररण्योरजनि । द्वयोर्लोकयोर्नि-

[1] क mostly worm-eaten.

[2] Read विद्मनापसो.

[3] Read यज्ञकर्मणि.

[4] But the pada is विद्मनाऽअपसः

[5] Read भ्राजदृष्टयो.

[6] Read ऋष्टिर्ऋषेः

[7] Read अङ्गिरस्तमः

[8] Read अङ्गिरसां वरिष्ठतमः

[9] Read भुवनाय.

[10] Passage not clear. Perhaps he is quoting विश्वं विशे विशे (ऋ. वे. ४. ८. १). The previous part may be सर्वं भुवनमुद्दिश्य and is to be connected with बहुधाभवन्.

[11] There is space left blank for a letter after तु. Perhaps to read द्वैमातुरः

मतित्येके[1] । शयुः । कदियाचिदायवे[2] मनुष्याय । कतिया बहुयेत्यर्थः[3] । शयानः । कतियाशयुर्भवति प्रश्न इति[4] ॥

त्वमग्ने प्रथमः । त्वमग्ने प्रथमोऽङ्गिरसां च वरिष्ठः कविर्यज्ञमलङ्करोषि सर्वस्मै भुवनाय अनेकशरीरो भवन् प्राज्ञो द्वयोर्लोकयोर्निर्माता पुरूरवसः पुत्राय आयवे गार्हपत्यादिव्यूहेन अनेकधा शयानः ॥ (२)

**त्वम॑ग्ने प्रथ॒मो मा॑त॒रिश्व॑न आ॒विर्भ॑व सुक्र॒तूया वि॒वस्व॑ते ।**
**अरे॑जेतां॒ रोद॑सी होतृ॒वूर्येऽस॑घ्नोर्भा॒रमय॑जो म॒हो व॑सो ॥**

त्वमग्ने । मातरिवा[5] वायुः । मातरि श्वसितीति । मातान्तरिक्षेमिति निरुक्तम्[6] । तस्मै । विवस्वते यजमानाय परिचरते । सुक्रतूयया कर्मेच्छया । आविर्भव आवीरभवा[7] । वाक्यसंयोगात् भूतार्थेऽपि लो[8] दृश्यते ।

आ दस्युघ्ना मनसा याभ्यस्त[9] (ऋ. वे. ४. १६. १०)

इति । विवस्वानादित्यश्चेदाद्युदात्तः[10] ।

[1] This is what Mādhava son of Veṅkaṭārya says.
[2] Read कतिधाचिदायवे.
[3] Read कतिधा बहुधेत्यर्थः
[4] Not clear. Perhaps कतिधा शयुर्भवतीति प्रश्नो वा इति.
[5] Read मातरिश्वा.
[6] What is found in Nirukta is मातरिश्वा वायुः । मातर्यन्तरिक्षे श्वसिति (नि. ७. २६). In the MS. there are both an इ and an ए mark for क्ष
[7] Read आविरभवः
[8] Read लोट्.
[9] Read याह्यस्तम्.
[10] See Devarāja on Nighaṇṭu. Bibliotheca Indica Edition, p. 187.

महो जाया विवस्वतो ननाश (ऋ. वे. १०. १७. १)

अरेजेतां अकंपेतां बलिनं दृष्ट्वा । रोदसी होत्रवूर्ये[1] यज्ञे[2] । तस्मिन् । होतृणां वरुणयोग्यो[3] होतृपूर्यः[4] सोढवानसि । हविषो भारमयजश्च । महतो देव्यान् । सावधितः[5] ॥

त्वमग्ने । त्वमग्ने पुराणो वायवे आविरभवः शोभनकर्मेच्छया विवस्वते यदा तस्मै मातरिश्वा त्वामाजहार । त्वयि होतरि देवैर्वृते महान्तं त्वां दृष्ट्वा द्यावापृथिव्यौ अकम्पेताम् । त्वं देवानां हविर्वहनभारं सोढवान् । अयजश्च महतस्तान् वासयितः ॥ (३)

**त्वम॑ग्ने॒ मन॑वे॒ द्याम॑वाशयः पु॒रू॒रव॑से सु॒कृते॑ सु॒कृत्त॑रः ।**
**श्वा॒त्रेण॒ यत्पि॒त्रोर्मुच्य॑से॒ पर्या त्वा॒ पूर्व॑मनय॒न्नाप॑रं॒ पुनः॑ ॥**

त्वमग्ने । त्वमग्ने मनवे द्यामकामयथाः[6] श्रद्धा देवं[7] तमकार्षीः । अविवा वशमानयः[8] । पुरूरवसे सुकृते तव परिचरणं कुर्वते । सुकृत्तरश्चाभूः । श्वात्रमिति क्षिप्रनाम ।

श्वात्राः स्थ वृत्रतुरः (वा. सं. ६. ३४)

[1] It looks more like होत्र आर्ये.
[2] Read होतृवर्यो यज्ञः
[3] Read वरणयोग्यो.
[4] Read होतृवूर्यः
[5] Read वासयितः
[6] न and द्या mostly worm-eaten.
[7] Not quite intelligible.
[8] Read अपिवा वशमनयः The visarga worm-eaten.

इति क्षिप्रा आप उच्यन्ते । क्षेपणेन[1] मथनेन[2] यदा त्वरण्योः[3] परिमुच्यसे । तदानीं त्वां पूर्वमानयन्नाहवनीयम् । अहिनयन्त्यपरं[4] पुनःसंस्थिते कर्मणि गार्हपत्यं प्रापयन्ति । यद्वा आहवनीयं गार्हपत्यं च कुर्वन्ति । व्युत्क्रमच्छन्दोऽनुरोधकृत[5] इति ॥

त्वमग्ने मनवे । त्वमग्ने कथमयं मनुरभ्युदयेन युक्तः स्यात् इति तस्मै स्वर्गमकामयथाः । पुरूरवसे त्वं शोभनकर्मणः कर्त्रे सुकृत्तमः । क्षिप्रं यदा अरण्योस्त्वं परिमुच्यसे तदानीमेव त्वां पूर्वमनयन् । पुनश्च अपवृते कर्मणि अपरं च कुर्वन्ति अयं ते योनिर्ऋत्वियं इति ॥　(४)

**त्वम॑ग्ने वृष॒भः पु॑ष्टि॒वर्ध॑न॒ उद्य॑तस्रुचे भवसि श्र॒वाय्यः॑ ।**
**य आहु॑तिं॒ परि॒ वेदा॒ वष॑ट्कृति॒मेका॑यु॒रग्रे॒ विश॑ आ॒विवा॑ससि ॥**

त्वमग्ने । स्पष्टप्राया । उद्यतस्रुग्यजमानो य आहुतिं वषट्कृतिं वषट्कृतां परिवेद । त्वय्येव प्रापयति । यं त्वमग्ने प्रथममेकायुर्दत्तान्नो विशः प्रापयसि । विशः सजाता भवति ॥

त्वमग्ने वृषभः । त्वमग्ने कामानां वर्षिता पुष्टेर्वर्धको यजमानाय भवसि । श्रवणीयोऽग्निः स्वाहाकारहुतं वषट्कारहुतं च परितो लभते मनुष्येभ्यः इति परोक्षः । स त्वमग्ने एकायुरवच्छिन्नायुरमृतोऽग्रे स्थित्वा मनुष्यान् परिचरसि । यद्वा बहूनां प्रकाशं कुर्वन् एकगमनस्त्वं प्रचरसि इति ॥　(५)

[1] ण in णे broken off.
[2] Folio 23*a* ends here.
[3] Read यदा त्वमरण्योः
[4] Read अभितयन्त्यपरं.
[5] Not quite clear.

त्वम॑ग्ने वृजि॒नव॑र्तनिं॒ नरं॒ सक्म॑न्पिपर्षि वि॒दथे॑ विचर्षणे ।
यः शूर॑साता॒ परि॑तक्ये॒ धने॑ द॒भ्रेभि॑श्चि॒त्समृ॑ता॒ हंसि॒ भूय॑सः ॥

त्वमग्ने[1] । त्वमग्ने वृजिनवर्तनिं विपुतमार्गम्[2] । वृणक्तिर्विप्लवार्थः[3] । नरसमक्मन्[4] सचनीये । पिपर्षि पारयसि प्रापयसि । विदथे गृहे । विदथो विन्दधे[5] । विदष्टिः[6] । शूरसाता युद्धे । परितक्ष्ये[7] परिहृत्य गन्तव्ये धने । शूराणां प्रियकरे । दवोहिरल्पेरपि[8] त्वर्दीयैस्समृता सं + म + ति[9] । हंसि भूयसः । दभ्रं[10] दंभनीयमिति ॥

त्वमग्ने वृजनवर्तनिम् । त्वमग्ने युद्धे अशोभनमार्गं नरं पारयसि । गृहे च विद्रष्टः यस्त्वं युद्धे परिगन्तव्ये सति धने क्षुद्रैरपि संगतान् महतोऽपि स्तोतुः शत्रून् हंसि ॥ (६)

[1] मग्ने broken off.

[2] Read विप्लुतमार्गम्.

[3] Even मार्गम् is not quite clear. Then two syllables are completely gone. I conjecture them to be वृण. The letters क्तिर्वि are not at all distinct. प्ल is mostly gone. The whole word is only a guess.

[4] Read नरं सक्मन्. It looks as though स is scored and changed into म.

[5] Read विन्दते:

[6] Read विदष्टे.

[7] Read परितक्म्ये.

[8] Read दभ्रेभिरल्पैरपि.

[9] After सं a letter completely worm-eaten. Cannot be made out. म is fairly clear. Then there is an ए mark; but the consonant following is gone. ति is in the next line. May be संगममेति.

[10] भ्र completely worm-eaten.

त्वं तम॑ग्ने अमृत॒त्व उ॑त्त॒मे मर्तं॑ दधासि॒ श्रव॑से दि॒वेदि॑वे ।
यस्ता॑तृषा॒ण उ॒भया॑य॒ जन्म॑ने॒ मयः॑ कृ॒णोषि॒ प्रय॒ आ च॑ सू॒रये॑ ॥

त्वन्तम् । त्वं तमग्ने अमृतत्वे उत्तमे दयासि[1] चिरमभृतं करो । मर्तं ददासि करोषि । श्रवसेऽह्नायान्वयहम्[2] । द्वितीयं वाक्यमन्यादृशम् । अतः श्रवस इति विभक्तिभेदः[3] । यस्तातृषाणः ईप्समाने[4] भवति । उभयाय जन्मने । सुखमन्नं च । अन्नादस्य मे जातमस्तु । तदन्नं च बहु भवत्विति । यद्वा द्विपाच्चतुष्पाच्चोभयं जन्म । तदर्थं यस्तातृषाणो भवति तस्मै सूरये मयः सुखं च करोषि । सुखहेतुभूतं प्रयोऽन्नं चेति द्वयोरपि समुच्चय एवार्थ इति ॥

त्वं तमग्ने । त्वं तमग्ने अमृतत्वे उत्कृष्टे मनुष्यं निदधासि दिवे दिवे अन्नाय । यस्त्वं सूरेः स्तोतुरुभयविधाय जन्मने तृष्यन् उभयं करोषि । सुखं चास्य भूयात् अन्नं च अस्तु इत्युभयोरुत्पत्तिमिच्छन् उभयं करोषि ॥ (७)

त्वं नो॑ अग्ने स॒नये॒ धना॑नां य॒शसं॑ का॒रुं कृ॑णुहि॒ स्तवा॑नः ।
ऋ॒ध्याम॒ कर्मा॒पसा॒ नवे॑न दे॒वैर्द्या॑वापृथिवी॒ प्राव॑तं नः ॥

त्वं नः । त्वमस्माकमग्ने लाभाय धनाम्[5] । यशस्विनं स्तोतारं पुत्रं कुरु स्तूयमानः[6] । ऋध्याम लभेमहि । र्मापसा[7] नचेन[8] अपत्येन ।

[1] Read दधासि.

[2] I have copied the passage as it is in the MS. The purpose of चिरमभृतं करो (perhaps to read चिरममृतं करोषि) not clear. Read मर्तं दधासि करोषि श्रवसेऽन्नायान्वहम्.

[3] Not clear.

[4] Read ईप्समानो.

[5] Read धनानाम्.

[6] First written स्तूयमानाः; then the आ mark in नाः deleted with a dot above it.

[7] Read कर्मापसा. The first म in र्म completely worm-eaten.

[8] Read नवेन.

देवैर्द्यावापृथिवी प्रावनमिति[1] । नैपातिकः पादः पावमाने दशमे मसले च विसृष्टः । अ त्वं नो अग्ने इति बहुवत्त्रृत्तिका भानोपादानयुक्ताः[2] । तत्र कारणं समयानुक्रमण्यामुक्तम् । तथान्येषां च त्रिकाणां चतुष्काणां चा[3] वाक्यात्मकानामिति ॥

त्वं नो अग्ने । त्वमग्ने अस्माकं लाभाय धनानां यशस्विनं स्तोतारं पुत्रं कुरु स्तूयमानः । प्राप्नुयाम वयं कर्म यज्ञं नवेन स्तुतिलक्षणे अनेन कर्मणा । तानस्मान् स्तुतिप्रवृत्तान् देवैस्सह द्यावापृथिवी रक्षतम् ॥ (८)

**त्वं नो॑ अग्ने पि॒त्रोरु॒पस्थ॒ आ दे॒वो दे॒वेष्व॑नवद्य॒ जागृ॑विः ।**
**त॒नू॒कृद्बो॑धि॒ प्रम॑तिश्च का॒रवे॒ त्वं क॑ल्याण॒ वसु॒ विश्व॒मोपि॑षे ॥**

त्वन्नः[4] । आकारः पादस्थमध्याः[5] । पर आकारः अधिपरी च सर्वत्र पादान्ताः[6] । किञ्च त्वं तामीति[7] पदे यस्मिन् पादे भवतः स न्यूनी भवति । त्वं मह्यं मह्यमग्ने[8] । तनूकृद्भवेति सम्बन्धः । त्वमस्मभ्यमग्ने

[1] व in प्रावनमिति completely worm-eaten. Read प्रावतमिति.

[2] The passage from नैपातिकः not clear. I print it as I find it in the Ms.

[3] Read च.

[4] त्व completely worm-eaten.

[5] द is completely worm-eaten. स्थ closes the line. The first letter in the next line broken off. Part of the next letter seen, which looks like ध्याः. Reading only a conjecture. Perhaps to read पादमध्यस्थः

[6] From आकारः passage not clear.

[7] Read त्वं तमिति.

[8] मह्यं unnecessarily repeated.

द्यावापृथिव्योरुपस्थे[1] वर्तमानो[2] देवो[3] देवेषु[4] अनवद्य[5] जागरणशीलः । तनूकृद्बोधितव्यतमनूः[6] पुत्रः । प्रमतिश्च भव त्वं कल्याण विश्वं वान्[7] आवसि[8] स्तोतरिति[9] । कल्याणं कल्येनानियम्[10] । कमनीयमिति यास्कः[11] ॥

त्वं नो अग्ने पित्रोः । त्वमस्माकमनवद्य द्यावापृथिव्योरुपस्थे वेद्यामासीद देवो देवानां मध्ये जागरणशीलः । स त्वं स्तोत्रे अङ्गानां कर्ता भवामीति बुध्यस्व । भव च तस्मै प्रमतिः । त्वं हि विश्वं धनं कारवे आवपसि इति ॥ (९)

**त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयम् ।**
**सं त्वा रायः शतिनः सं सहस्रिणः सुवीरं यन्ति व्रतपामदाभ्य ॥**

त्वमग्ने । स्पष्टप्राया । त्वां संगच्छन्ति बहूनि धनानीत्युत्तरार्थः[12] ॥

त्वमग्ने प्रमतिः । त्वमग्ने प्रकृष्टमतिः । त्वं पितेव च भवस्यस्माकम् । त्वमन्नस्य कर्ता । तव बान्धवा वयम । संगच्छन्ते त्वां शतसहस्रसंख्याः रायः शोभनं वीरं कर्मणां रक्षितारं अदाभ्य ॥ (१०)

[1] प in उपस्थे completely worm-eaten.
[2] मा completely worm-eaten.
[3] Folio 23*b* ends with दे. The letter वो which begins the next sheet completely worm-eaten.
[4] वे completely worm-eaten.
[5] वद्य mostly worm-eaten.
[6] Read तनूकृद्बोधितव्यम् । तनूः
[7] Read विश्वं वसु.
[8] Read आवपसि.
[9] Read स्तोतरीति.
[10] Not clear.
[11] N. 2. 3.
[12] ध mostly worm-eaten.

त्वाम॑ग्ने प्रथ॒ममा॒युमा॒यवे॑ दे॒वा अ॑कृण्व॒न्नहु॑षस्य वि॒श्पति॑म् ।
इळा॑मकृण्व॒न्मनु॑षस्य॒ शास॑नीं पि॒तुर्यत्पु॒त्रो मम॑कस्य॒ जाय॑ते ॥

त्वामग्ने । त्वामग्ने[1] प्रथममायुमायवे मनुष्याय पुरूरवसे आयुषं पुत्रमकृण्वन् । अपिच त्वामकृण्वन् बहुष्यस्य[2] राज्ञो देवा विश्पतिमा[3] सेनानीम् । अपि वा आधवे[4] नहुषस्येति समानाधिकरणपरम्[5] । भेदाश्चि-भक्तिभेदः[6] । मनुष्य[7] सन्तं मनुष्यस्य नहुषस्य[8] विश्पतिमकृण्वन्निति । तथा मनुषस्य[9] मनोरिळां नाम धर्माणामनुशासिनीं दुहितरं दुहितरञ्चामेवा-कृण्वन्[10] यज्ञे प्रयाजानराजानां[11] मध्ये तामवकल्पयन् मया[12] सर्वानवा-प्स्यसि कामानिति । सा मनुमन्वशात् इति वाजसनेयकम्[13] । इळा वै मानवी यज्ञानूकौशिन्यासीत[14] इति च तैत्तिरीयकम्[15] । यदा ममकस्य

[1] त्वा completely worm-eaten.

[2] Read नहुषस्य.

[3] Read विश्पतिं instead of विश्पतिमा.

[4] Read आयवे.

[5] रम् mostly worm-eaten.

[6] Perhaps to read पादभेदाद्विभक्तिभेदः

[7] Read मनुष्यं.

[8] नहु mostly worm-eaten.

[9] Read मनुष्यस्य.

[10] Repetition of दुहितरं not wanted. Read दुहितरं त्वामेवाकृण्वन्.

[11] Read प्रयाजानुयाजानां.

[12] What is written is तामवकल्पयन्मया. Perhaps to read तामवा-कल्पयन्तया.

[13] Not traced. There is सा मनुमाजगाम in S'. B. 1. 8. 1. 8.

[14] Read यज्ञानूकाशिन्यासीत्.

[15] तै. ब्रा. १. १. ४. ४.

पितुर्राङ्गिरस्य[1] पुत्रो जायते तदा स च त्वमासीराङ्गिरसः । यदि वा ममकः पिता मनुरेव । उक्तस्य[2] यदा पुत्रः सर्वो मनुष्यवर्गो जायत इति ॥

त्वामग्ने । त्वामग्ने पूर्वमायुमकृण्वन् आयवे मनुष्याय पुरूरवसे । पुरूरवसः पुत्र आयुः । तदा देवा अकृण्वन् नहुषस्य च राज्ञो विश्पतिं नाम पुत्रम् । तथा मनोश्च त्वामिळां नाम दुहितरं अकृण्वन् । या जाता सती पितरं मनुमन्वशात् । यज्ञे प्रयाजानुयाजयोर्मध्ये तामवाकल्पयन् तया सर्वानेव कामानवाप्स्यसि इति । यदा ममकस्य पितुरङ्गिरसः पुत्रो जायते तदानीं तं च त्वामकृण्वन् अङ्गिरसामेकं इति ॥ (११)

**त्वं नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष त॒न्व॑श्च वन्द्य ।**
**त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेषं॒ रक्ष॑माण॒स्तव॑ व्र॒ते ॥**

त्वं नः । त्वं नो अग्ने तव देव पालनैर्मघोनो धनवतो रक्ष तन्वश्च पुत्रांश्च वन्द्य । त्वं त्राता तोकस्य पुत्रस्य । तनये स्थितानां गवां त्राता भवसि । सर्वदा रक्षमाणसूप[3] भृते[4] वर्तमानम् ॥

त्वं नो अग्ने । त्वमस्मानग्ने तव देव रक्षणैर्हविष्मतो रक्ष पुत्रांश्च । वन्द्य त्वं हि पुत्रस्य पुत्रेऽपि गवां रक्षको भवसि । त्वदीये कर्मणि प्रवृत्तं मनुमनवरतं रक्षमाणः ॥ (१२)

**त्वम॑ग्ने॒ यज्य॑वे पा॒युरन्त॑रोऽनिष॒ङ्गाय॑ चतुर॒क्ष इ॑ध्यसे ।**
**यो रा॒तह॑व्योऽवृ॒काय॒ धाय॑से की॒रेश्चि॒न्मन्त्रं॒ मन॑सा व॒नोषि॒ तम् ॥**

[1] Read पितुरङ्गिरसः

[2] Perhaps to read तस्य instead of उक्तस्य.

[3] Read रक्षमाणस्तव. The letter मा completely worm-eaten.

[4] Read व्रते.

त्वमग्ने । त्वमग्ने यज्यवे[1] पालकोऽन्तरः । रक्षसामनिषंगाय चतुरक्ष इध्यसे । चतुरक्षस्सर्वतोज्वालः । यो दत्तहविष्कोऽवृकाय रक्षोवर्जिताय धात्रे । वृकिरादानार्थो हिंसार्थो वा । तस्य कीरेश्चित् स्तोतुः तं मन्त्रं मनसा वनोषि कामयसे ॥

त्वमग्ने यज्यवे । त्वमग्ने यजमानार्थं कर्मणोऽन्तरङ्गो रक्षको रक्षोभिः अनिषङ्गाय सर्वतो ज्वालाभिः पश्यन् रक्षसां अनन्ववचाराय समिध्यसे । यो दत्तहविष्को रक्षोवर्जिताय तस्मै प्रीणनाय सोमं पिबसि । यश्च तस्य स्तोतुर्मन्त्रः तं च मनसा कामयसे ॥ (१३)

**त्वम॑ग्न उरु॒शंसा॑य वा॒घते॑ स्पा॒र्हं यद्रेक्णः॑ प॒र॒मं व॒नोषि॒ तत् ।**
**आ॒ध्रस्य॑ चि॒त्प्रम॑तिरुच्यसे पि॒ता प्र पाकं॒ शास्सि॒ प्र दिशो॑ वि॒दुष्ट॑रः ॥**

त्वमग्ने । त्वमग्ने उरुंशसाय[2] बहुस्तुतये यजमानाय । स्पृहणीयं यद्रेक्ण उत्तमं भवति तद्वनोषि कामहसे[3] लभतामिति । रेक्णो धनं रिचैः[4] प्रेरणार्थात् । अध्रस्य[5] चित् प्रमतिरुच्यसे पिता । आध्रः कृश आधान्नो[6] भवति देवानाम् । पिता पालयिता । प्रशास्सि च पाकं पक्तव्यप्रज्ञम् । दिशश्च प्रशास्सि । दिङ्मूढं विद्वत्तर इति ॥

[1] First written युज्यवे ; then उ mark in यु scored off.

[2] Read उरुशंसाय.

[3] Read कामयसे.

[4] Read रिचेः cf. N. 3. 2.

[5] Read आध्रस्य.

[6] The writing is very illegible. आधान्नो is the nearest approximation I can read.

त्वमग्न उरुशंसाय। त्वमग्ने बहुस्तुतये यजमानाय स्पृहणीयं यद्धनं उत्तमं तत् प्रयच्छसि। तथा दानाधारभूतस्य दरिद्रस्य प्रमतिः पिता उच्यसे। प्रशास्सि च विद्वत्तरस्त्वं पक्तव्यप्रज्ञमज्ञम्। प्रदिशश्चतस्रो दिशः ॥ (१४)

त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः।
स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा दिवः ॥

त्वमग्ने। त्वमग्ने दत्तदक्षिणन्नरम्[1]। दत्तदक्षिणा[2] धनं दक्षतेः समर्थतिकर्मणः। हस्तश्चेत् दक्षिणे[3] दक्षणेः[4] उत्साहकर्मणः। चर्म[5] वारकं कवचं इवोरसि स्यूतम्। परिपासि सर्वतः। स्वात्मनो[6] यो गृहे सुखकृत्[7] अतिथीनान्निवासकृद्वा[8]। जीवयाजं यजते दक्षिणादानेन मनुष्यान् प्रीणातीत्यर्थः। स नरो दिव उपमा भवति स्वर्गमुपमीयते संयोजयत्यात्मने ॥

त्वमग्ने प्रयतदक्षिणम्। त्वमग्ने दरिद्रेभ्यो दत्तधनं मनुष्यं कवचमिवोरसि बद्धं इषुभ्यः सर्वेभ्यो दुरितेभ्यः परिरक्षसि। स्वाद्वन्नो यो गृहे दरिद्राणां सुखकृत् जीवानां अन्नप्रदानात् यज्ञं करोति सः स्वर्गस्य उपमा अन्तिके वर्तते ॥ (१५)

[1] Folio *24a* ends with दक्षिण.

[2] दत्त not wanted in the beginning.

[3] Read दक्षिणो.

[4] Read दक्षतेः cf. N. 1. 7.

[5] Read वर्म. The scribe must have had वर्म in mind, because he writes the previous word as उत्साहकर्मणो.

[6] Read स्वाद्वन्नो.

[7] The letters हे, सु and ख mostly worm-eaten; only a conjecture from the small bits remaining.

[8] न्नि mostly worm-eaten; only a guess. But it looks more like त्म than like न्नि from the bits that remain.

इमाम॑ग्ने श॒रणिं॑ मीमृषो न इ॒मम॑ध्वा॑नं॒ यमगा॑म दू॒रात् ।
आ॒पिः पि॒ता प्रम॑तिः सो॒म्याना॒ं भृमि॑रस्यृषि॒कृन्मर्त्या॑नाम् ॥

इमामग्ने । शररणिर्वृत्तलोपः[1] प्रवासादेत्य अग्निन्नूनमस्तौत्[2] । इमामग्ने शरणिं तितिक्षस्वास्माकम् । इममध्वानं तितिक्षस्व यमगाम आरात् । अग्निहोत्रं विहाय गतवन्तो दूरमित्यर्थः । त्वमापिः पिता प्रमितिश्च[3] सोम्यानाम् । अपिच भृमि[4] भ्रमणशीलः त्वभृषिकृद्दर्शनकृत्[5] मर्त्यानामसि ॥

इमामग्ने । अरण्ये तपोऽर्थं गतः अग्निमाशास्ते । इमामग्ने तपोजनितां हिंसां फलप्रदानेन अस्मान् यथा सहामहे तथा कुरु । तथा इममध्वानं च यं वयं त्वां द्रष्टुकामा दूरादगाम । ज्ञातिः पालयिता प्रमतिश्च सोमार्हाणां भ्रमणशीलस्त्वं अन्धकारापनयनान्मनुष्याणां दर्शनकृत् ॥ (१६)

म॒नु॒ष्वद॑ग्ने अङ्गि॒र॒स्वद॑ङ्गिरो ययाति॒वत्सद॑ने पूर्व॒वच्छु॑चे ।
अच्छ॑ या॒ह्या व॑हा॒ दैव्यं॒ जन॒मा सा॑दय ब॒र्हिषि॒ यक्षि॑ च प्रि॒यम् ॥

मनुष्वत् । यथा मनोर्यथा वाङ्गिरसो यथा वा ययातेर्यथा वा पूर्वः पुनरेव मम सदने अभियाहि दीप्त । आवह च दैव्यं जनम् । तमासादय च बर्हिषि स्तीर्णे । यज च प्रियम् । प्रियः प्रीणातीति ॥

[1] Read हिरण्यस्तूपः; it is rather difficult to see how the scribe could have altered the name to this form. Perhaps there are other words. There is a reference to fear of defect in the performance of the rites in the Bhāṣya of Skandasvāmin. Or the reading may be इमामग्ने शरणिम् । हिरण्यस्तूपः वृत्तलोपः

[2] Perhaps to read अग्निमनेनास्तौत्.

[3] Read प्रमतिश्च.

[4] Read भृमिः

[5] Read त्वमृषिकृद्दर्शनकृत्.

मनुष्वदग्ने । अङ्गिरसामेकं मन्वादीनामिव ममापि गृहे अधुना अभिमुखं याहि । आवह च दैव्यं जनम् । आसादय च बर्हिषि । यज च प्रियं देवगणम् ॥ (१७)

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।
उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥

एतेनाग्ने । एतेनाग्ने स्तोत्रेण वृद्धो भव शक्त्या च विज्ञानेन च । यप्यस्ति[1] । वाशब्दः[2] । अपिचास्मिन्[3] श्रेयोऽभिप्रजय[4] । संसृजास्मां-सुस्वदीयया[5] सुमत्या अन्नवत्येति[6] ॥

एतेनाग्ने । एतेनाग्ने स्तोत्रेण वृद्धो भव । यथा कश्चिच्छक्त्या महता प्रयत्नेन स्तोत्रं करोति । तथा यत्ते चकृम विदा वा ज्ञानेन वा यद्ब्रह्म वयं चकृम । अपिच अस्मान् श्रेयश्च अभिप्रणय । अन्नवत्या त्वदीयया सुमत्या च अस्मान् संसृज इति ॥ (१८)

---

इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥

[1] Read perhaps यद्यप्यस्ति.
[2] Not intelligible.
[3] Read अपिचास्मान्.
[4] Read श्रेयोऽभिप्रणय.
[5] Read संसृजास्मांस्त्वदीयया.
[6] There is the figure 12 to mark the end of the sūkta.

इन्द्रस्य नु । वाजसनेयकम्—इन्द्रो वै वृत्राय वज्रं प्रजहार । नो हिषाति मायं[1] चक्रे । स पराः[2] परावतो जगाम । ते होचुर्देवा हतो वै वृत्र इति । अथेन्द्रो न्यत्वेष्ट[3] । हन्तैनं अन्विच्छामेति[4] । तमन्वेष्टुं दध्रिरे । अग्निर्देवानाम् । हिरण्यस्तूप ऋषिणा[5] । बहुतनुति[6] विवेवेदि[7] । तत्रेन्द्रस्य तत्र सूक्ते इ ददश[8] । इन्द्रस्य नु वीर्याणि अहं ब्रवीमि । यानि चकार प्रथमानि वज्री । अहन्हहीम्[9] । तेन निरुद्धा अपश्चानुतर्द[10] ।

[1] नो हिषातिमायं not intelligible.

[2] राः mostly worm-eaten.

[3] न्यत्वेष्ट not intelligible.

[4] Read अन्विच्छाम इति.

[5] Read ऋषीणाम्.

[6] हु and त partly worm-eaten.

[7] दि partly worm-eaten.

[8] The whole passage is currupt. The passage in the S'. B. is: इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान् मन्यमानो नास्तृषीतीव बिभ्यन्निलयांचक्रे । स पराः परावतो जगाम । देवा ह वै विदांचक्रुः हतो वै वृत्रः । अथेन्द्रो न्यलेष्ट इति । तमन्वेष्टुं दध्रिरे अग्निर्देवतानां हिरण्यस्तूप ऋषीणां बृहती छन्दसाम् । तमग्निरनुविवेद । (श. ब्रा. १. ६. ४. १). There is a more or less similar passage in S'.B. 4. 1. 3. 1. I can only give the unintelligible portions along with the corresponding portion in the above quotation:

| MS. | S'. B. |
|---|---|
| नो हिषाति मायं चक्रे | सोऽबलीयान् मन्यमानो नास्तृषितीव बिभ्यन्निलयां चक्रे. |
| अथेन्द्रो न्यत्वेष्ट. | अथेन्द्रो न्यलेष्ट. |
| बहुतनुति विवेवेदि. | बृहती छन्दसाम् । तमग्निरनुविवेद. |

The portion तत्रेन्द्रस्य etc. may have to be read as तत्रैन्द्रस्य वीर्याणि अनेन सूक्तेन ददर्श. or some such thing.

[9] Read अहन्नहिम्.

[10] Read अपश्चानुततर्द.

प्राहिन्नच्च[1] वक्षणा पर्वतानामन्तरवस्थिताः । अहिराहननात् इह वृत्रः । क्षणो[2] नद्यो वहन्तीति । यास्कस्त्वाभ[3] वहन्ति कूलानिति[4] । पर्वतः पर्ववाञ्छिलोच्चयः[5] यद्वा मेघः ॥

इन्द्रस्य नु । अथेन्द्रस्याहं क्षिप्रं वीर्याणि प्रवक्ष्यामि यानि चकार पुरातनानि वज्री । तान्याह । अहिमसुरमहन् । हत्वा च तेन रुद्धा अपः सूच्येव रश्मिभिस्ततर्द । प्राभिनच्च शिलोच्चयानां नदीः पृथिव्यां पातयितुम् ॥ (१)

**अह॒न्नहिं॒ पर्व॑ते शिश्रिया॒णं त्वष्टा॑स्मै॒ वज्रं॑ स्व॒र्यं॑ ततक्ष ।**
**वा॒श्रा इ॑व धे॒नव॒: स्यन्द॑माना॒ अञ्ज॑: समु॒द्रमव॑ जग्मु॒राप॑: ॥**

उत्तरा[6] स्पष्टप्राया । स्वर्यं प्रेरणीयम् । ततक्ष चक्रे । वाश्राः शब्दायमानात्[7] । जोजसन्यारनुरुध्या इति[8] ॥

अहन्नहिम् । अहन्नहिं महीधरे लीयमानम् । त्वष्टास्मै वज्रं स्वरकरणशीलं अकरोत् तीक्ष्णधारम् । शब्दकारिण्यः अभिनवप्रसूता इव धेनवो वत्सान् प्रति स्यन्दमाना अञ्जसा अन्तरिक्षं प्रत्यवगता आपः । यद्वा उदधिं प्रति गता इति ॥ (२)

[1] Read प्राभिनच्च.

[2] Read वक्षणा. The syllable क्ष completely worm-eaten. What is written may be वज्रिणो also.

[3] Read यास्कस्त्वाह.

[4] The word वक्षणा is not explained by Yāska.

[5] Read पर्ववान् शिलोच्चयः

[6] The verse No. 2.

[7] Read शब्दायमानाः

[8] Not intelligible. इति mostly worm-eaten.

**वृषा॒यमा॑णोऽवृणीत॒ सोमं॒ त्रिक॑द्रुकेष्वपिबत्सु॒तस्य॑ ।**
**आ साय॑कं म॒घवा॑दत्त॒ वज्र॒मह॑न्नेनं प्रथम॒जामही॑नाम् ॥**

वृषायमाणः । वृषेवाचरन्[1] अवृणीत[2] सोमं प्रशस्तमानम्[3] । प्रजापतेः पितुरिति ब्राह्मणम्[4] । त्रिकद्रुकेष्वपिबत्सुतस्य । अभिप्लवत्र्यहं पूर्वणिं[5] त्रिकद्रुका[6] इत्याचक्षते । यत्रस्सन्ततः[7] कं द्रवन्ति संवत्सर इति । कद्रवति[8] कुटिलगमनार्थः[9] । आदत्त सायकं + + + मंकवा[10] वज्रम् । तेनाहन्नेनं प्रथमजातमहीनां असुराणां वृत्रम् ।

इन्द्रो दक्षं परिजानादहीनाम् (ऋ. वे. १०. १३९. ६)

इति मध्योदात्तो नदीवचन इति ॥

वृषायमाणः । वृषभ इवाचरन् अवृणीत सोमम् । आभिप्लविकस्य पूर्वं त्र्यहं त्रिकद्रुकम् । तस्मिन् सुतं अपिबत् सोमम् । आदत्त अन्तकरमायुधं मघवा । तेनैनं मघशिरसमसुरं मेघानां मुख्यमहन् ॥ (३)

[1] Folio 24*b* ends with वृषेवा.

[2] त completely worm-eaten.

[3] Perhaps to read प्रशस्तम्.

[4] Not traced. The Brāhmaṇa passage seems to be defective.

[5] Read पूर्वं.

[6] Ā. S'. S. 10. 3. 11. 1.

[7] Perhaps to read यत्र सन्ततं.

[8] कद्रवतिः

[9] र्थः completely worm-eaten.

[10] After सायकं the leaf is broken and about 3 syllables are lost. What is seen after the break is a म with a dot before, which must be the latter part of मं (written म. म in this MS.) and then क वा follows. The broken syllables may be मघवा. The scribe must have written मघवा मंक वा; read मघवा कर्मवान्.

यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः ।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥

यदिन्द्र । आदनन्तरवचनः । मायिनो मायायिनो[1] वृत्रस्य सभयाः[2] । वृत्रेण मेघरूपेणापि । + सूर्यमुषसं[3] द्यां च प्रकाशयंस्तदानीं मन्यं[4] शत्रुं न किलाविन्दो यस्ते शातानीयो[5] भवेदिति[6] ॥

यद्रिन्द्र । यदेन्द्र हतवानसि प्रथमजातमहीनां यदा च तदनन्तरं तत्सहायानां मायावतां मायाः प्रकर्षेण हिंसितवानसि । तदनन्तरं अहिना तिरोभूतं सूर्यं द्यां उषसं च प्रादुर्भावयन् त्वं तदानीं जगति न कंचन शत्रुं हतशिष्टमन्वविन्दः ॥ (४)

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥

अहन् । अहन् वृत्रं सुतरम्[7] । तथा वृत्रतरं व्यंसं च । वृत्रं यस्ततार । न तरबन्तः स्वरार्थाभावाच्चा[8] । इन्द्रो वज्रेण वेगवता आयुधेन ।

[1] Read मायाविनो.

[2] Read सहायाः

[3] One syllable lost after मेघरूपेणापि as the leaf is broken. It may be आत्.

[4] Read अन्यं.

[5] Read शातनीयो.

[6] Some words in the mantra not commented. Perhaps there is an omission in the MS.

[7] Perhaps to read वृत्रमसुरम् instead of वृत्रं सुरतरम्.

[8] Perhaps to read स्वरादर्थाभावाच्च.

स्कन्धांसीव शाखा इव । स्कन्धः स्कदतेः समास्कन्दनं भवति[1] । कुलिश मायुधम् । कूशलातनं[2] भवतीति यास्कः[3] । कुलिशेन विवृक्णाग्निः स्कन्धांसिव[4] । अहिश्शयते उपवच्चनः[5] पृथिव्या इति ॥

अहन् वृत्रम् । हतवान् वृत्रं अतिशयेन निवेष्टयितारम् । व्यंसं च अपरमसुरं इन्द्रो महता आयुधेन हन्त्रा । यथा वृक्षस्य स्कन्धांसि कुठारेण विविधं छिन्नानि शेरते एवमहिः शेते छिन्नपादहस्तः पृथिव्या उपपर्चनः ॥ (५)

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥

अयोद्धेव । योधनासमर्थो दुर्म इव[6] मानी इन्द्रमा हि जुह्वे महाबलं बहुबाधनं ऋजीषिषःमपार्जकं[7] शत्रूणाम् । अथ प्रह्वियमाणो नातारीदस्येन्द्रस्य वधानां संगमं । अथेन्द्रेण हतो हनिष्यमाणो वा संपिष्टवान् रुजाना नदीः इन्द्रशत्रुर्वृत्रः । इन्द्रस्य शत्रुरिन्द्रशत्रुः । तत्पुरुषेऽपि पूर्वपदे स्वरे[8] दृष्टः । इन्द्रशत्रुरिन्द्रेण शातनीय इत्येके[9] । इन्द्रः शातयिता यस्येति

[1] Cf. स्कन्धो वृक्षस्य समास्कन्नो भवति । अयमपीतरः स्कन्ध एतस्मादेव । आस्कन्नं काये (नि. ६. १८.)

[2] Perhaps read कुलिश आयुधम् । कूलशातनो.

[3] N. 6. 17.

[4] Read स्कन्धांसीव.

[5] Read उपपर्चनः

[6] Read दुर्मद इव.

[7] Read ऋजीषमपार्जकम्.

[8] Read पूर्वपदे स्वरो.

[9] Skandasvāmin has इन्द्रः शातयिता यस्य; Mādhava son of Veṅkaṭārya has इन्द्रो यस्य शातयिता.

वैयाकरणाः । वाजसनेयकम्—स यदु ह चेन्द्रशत्रुर्वर्धस्वेति तस्माद्धैनमिन्द्र एव जघा[1] । अथ वद्य[2] वक्ष्यतीन्द्रस्य शत्रुर्वर्धश्चेति[3] श्वर्ध[4] स ऐन्द्रं[5] अभ्यभविष्यदिति[6] ॥

अयोद्धेव । युद्धासमर्थो मानी यथा समर्थमाह्वयति एवमाहूतवान् इन्द्रं महावीरं बहूनां बाधितारं ऋजीषिणम् । न चातारीदिन्द्रस्य आयुधानां गतिम् । अथ पृथिव्यां निपातितोऽवशः सन् नदीः संपिष्टवान् इन्द्रो यस्य शातयित आसीत् ॥ (६)

अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥

अपादहस्तः । हस्तपादवर्जितोऽपि इन्दः[7] पृतन्यत्[8] । अथेन्द्र आजव्यातास्य[9] अधिसानौ समुच्छ्रिते हनौ ऊरुसन्धौ वज्रम् । वृष्णो वध्रिः प्रतिमानं बभूषन्नित्यौपमिकम्[10] । वद्धि[11] हतमुष्कः । पुरुत्रा-

[1] Read जघान.

[2] Read यद्ध.

[3] Read शत्रुर्वर्धस्वेति.

[4] Read शश्वदुह.

[5] Read स एवेन्द्रं.

[6] The passage in S'. B. is अथ यदब्रवीदिन्द्रशत्रुर्वर्धस्वेति तस्मादु हैनमिन्द्र एव जघान । अथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्धस्वेति शश्वदुह स एवेन्द्रमहनिष्यत्. (श. ब्रा. १. ६. ३. १०).

[7] Read इन्द्रं.

[8] Read अपृतन्यत्.

[9] Read आजघानास्य.

[10] Read बुभूषन्नित्यौपमिकम्.

[11] Read वध्रिः

नेकेषु देशेषु । अशयदिन्द्रेण व्यस्तः[1] । पुरुत्रा वृत्रहमेरामन्त्रितं[2] आद्युदात्तमिति ॥

अपात् । हस्तपादवर्जितोऽपि इन्द्रमपृतन्यत् । आजघानास्य उच्छ्रिते देशे वज्रमिन्द्रः । वर्षितुर्वृषभस्य छिन्नवृषणः प्रतिद्वन्द्वी भवितुमिच्छन् इत्यौपमिकम् । अनेकेषु देशेषु वृत्रोऽशयत् शकलीकृतः ॥ (७)

**नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ।**
**याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥**

नदम् । सिन्धुमिव बहुधा भिन्नकूलं असुथा[3] अत्र[4] । अपिवा व्यर्थम् । शयानं नृणां मनो रुहाणा ह्लादयन्त्यः अतिगच्छन्त्यःपम्[5] । याश्चिद्वृत्रो महिमु[6] परिवृत्यातिष्ठत्[7] । तामसां[8] अपामिन्द्रेण हतोभिः[9] पत्तशायी[10] बभूव पृथिव्यां पातितः ॥

नदं न । यथा भिन्नं सेतुमापोऽतियन्ति एवमनया पृथिव्या सह शयानं मनुष्याणां मन आरोहन्त्यो ह्लादयन्त्यः अतीत्य गच्छन्ति । याश्चिदपो वृत्रः शरीरमहत्तया परिवृत्य अतिष्ठत् तासामहिरसुरः पत्तनशायी बभूव ॥ (८)

[1] The visarga is worm-eaten. It looks more like anusvāra.
[2] Read
पुरुत्रा वृत्रहन्तमा (ऋ. वे. ८. ८. २२)
इत्यत्रामन्त्रितं.
[3] Read अमुया.
[4] Perhaps to read अमुत्र.
[5] Read अतिगच्छन्त्यापः
[6] Perhaps to read महीम्.
[7] Folio 25*a* ends with परिवृत्या.
[8] Read तासां.
[9] Read हतोऽहिः
[10] Perhaps to read पत्तनशायी.

नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥

नीचावयः[1] । वयो वेतेर्गत्यर्थात् । नीचीनबाहुरभवत् वृत्रपुत्रा वृत्रस्य माता । वृत्रो यस्याः पुत्रः । तत्परिरक्षणार्थम् । पुत्रः पुनातेः । अपि वा[2] पुतो नकात्त्रणामत्पुत्र इति यास्कः[3] । पोत इत्यपत्यनाम भवति । पुत इति पायुनाम[4] । इन्द्रो अस्या मतुखचयज्जहार[5] अधस्तात् आयुध[6] जहार । तदानीमुत्तरा सूर्माता अधरः[7] पुत्र आसीत् । सा[8] दनु + + र्दानवी[9] शिश्ये सहवत्सा धेनुः[10] । वत्सो निवासादिति ॥

[1] Read नीचावयाः

[2] After वृत्रो यस्याः पुत्रः the leaf is broken. तत्परिरक्ष is in tact. ण can be made out from the bottom. The आ mark in णा and र्थम् । पुत्रः now completely gone. But these syllables were in tact when the transcript was made a few years ago. पुनाते is clear. There is no visarga. Then about three or four syllables completely gone. The visarga and अपि वा is only my conjecture. The bottom end of the first two letters look like that of अपि. It may as well be पुत्र पुना-तेर्निपरणाद्वा. Here the line ends. What begins the next line is पुतो.

[3] I have copied the letters as they are in the MS. What Yāska says is: पुन्नरकम् । ततस्त्रायत इति वा (नि. २. ११).

[4] I do not understand either the full meaning or the relevancy of these two sentences.

[5] Read मातुरव वधर्जभार.

[6] Read आयुधं.

[7] The visarga is worm-eaten.

[8] After आसीत् and before स, a letter, perhaps त, begun and scored off.

[9] After दनु, the leaf is worm-eaten and two letters are completely gone. र्दानवी is clear. It looks as though these syllables (द, नु, the two worm-eaten letters and the first द or र्द) are deleted by dots above. I see some dots; but I cannot say if they are by the scribe or are due to the leaf being damaged by worms. What we want is सा दानवी.

[10] We want धेनुः इव.

नीचावयाः । नीचीनबाहुशाखा अभवत् वृत्रो यस्याः पुत्रः । वृत्रे हन्यमाने तन्माता तद्वधपरिरिरक्षयिषया तस्योपरि बाहू प्रसार्य अतिष्ठत् । अथेन्द्रः अस्या अधस्तात् वृत्रशरीरे एव वज्रं प्रहृतवान् । तदानीं वृत्रस्योपर्यासीत् तन्माता वृत्रश्च अधः । तदानीं दानुर्वृत्रमाता वत्ससहिता धेनुरिव शये ॥ (९)

**अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।**
**वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥**

अतिष्ठन्तीनाम् । आपः काष्ठा भवन्ति[1] क्रान्त्वा स्थिता भवन्तीति[2] । अतिष्ठन्तीनां अनिवेशनानाम् । स ह्यपां स्वभावः । काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य निण्यं नृणं निनतम्[3] । विचरन्ति विसृज्य चरन्ति आपः । ततो दीर्घं तम आशयदधिशिष्ये[4] मृत इन्द्रशत्रुः । विचरन्ति विजानन्त्यापः[5] । दीर्घं द्राघतेः[6] । तमः तनोतेः[7] । आशयदाशेतेः[8] । इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा[9] इति ॥

[1] भ worm-eaten. I am not sure whether what is written is ह or भ.

[2] Cf. N. 2. 15.

[3] नृणं is mostly worm-eaten. The scribe who transcribed it five years ago has written it as प्रार्थं. The second letter looks like थं. But the first is decidedly not प्रा. It may be नृ. Only the ऋ mark is seen. The second can be णं. Cf. वृत्रस्य निण्यं निर्णामम् । (नि. २. १६) Perhaps this is what the commentator has written.

[4] Read अधिशिश्ये.

[5] N. 2. 16. From here to the end of the stanza, it is a quotation from N.

[6] N. 2. 16.

[7] N. 2. 16.

[8] N. 2. 16.

[9] N. 2. I6.

अतिष्ठन्तीनाम् । अतिष्ठन्तीनामस्थानानामपां मध्ये वृत्रस्य शरीरमन्तर्हितं प्रतिगच्छन्त्यापः इन्द्रस्य वृत्रं निलीनं दर्शयितुम् । तत इन्द्रेण हतो वृत्रो दीर्घं तम आशयत् ममार इति ॥ (१०)

**दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।**
**अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥**

दासपत्नीः । दासोऽसुरे[1] दस्यतेः उपशोषतीति[2] । शृभ्रश्वेत्[3] कषीणकर्मणेति[4] । दासपतिका अभिना[5] गुप्ता अतिष्ठन् । अभिर्मेघः[6] । निरुद्धा आपः पणिना असुरेणैव[7] गावः । पणि[8] पणनात् । बलिं पणिर्वणिशति यास्कः[9] । अपां बिलमपिहितं समासीत्[10] पिहितद्वारं वृत्र[11] जघन्वानिन्द्रस्तदपववार इति[12] ॥

[1] Read दासोऽसुरो.

[2] Read उपशोषयतीति. Cf. N. 2. 17.

[3] Perhaps to read शूद्रश्वेत.

[4] Perhaps कर्षणकर्मण इति. The Dhātupāṭha has तसु उपक्षये, दसु च (4. 104. 105) and दसि दर्शनदंशनयोः (10. 137).

[5] Read अहिना.

[6] Read अहिर्मेघः

[7] Read असुरेणेव.

[8] Read पणिः

[9] What is found in Yāska is : पणिः पणनात् वणिक् । पण्यं नेनेक्ति. (नि. २. १७). Perhaps the word बलिं is a mistake for बिलं and ought to come only after the quotation and the reading should be पणिः पणनात् । पणिर्वणिगिति यास्कः

[10] After स, a letter is completely worm-eaten. I guess it to be म. The आ mark is clear. It may as well be द. Perhaps to read यदासीत्.

[11] Read वृत्रं.

[12] In note 2 on p. 202 it was said that there is a long break after the commentary on R. V. 1. 30. 6. and that there is no break in the

दासपत्नीः। दासाधिपत्न्यः अहिना गुप्ता अतिष्ठन् निरुद्धा आपः असुरैरिव गावः। तत्र अपां बिलमपिहितं यदासीत वृत्रं जघ्निवान् अपववार तत् इति ॥ (११)

ये ओ यो ग प्रवेशे[1]ऽतिशयेन प्रवृद्धमिन्द्रं युद्धे युद्धे हवामहे सखायो वधं[2] रक्षणार्थम्। वाजसनेन्नु[3]—कर्मणि[4] तुवस्तरं अन्नेन[5] हवामह इत्येतत् (श. ब्रा. ६. ३. २. ४) इति।

यो न इदमिदम् (ऋ. वे. ८. २१. ९)

writing in the MS. We had there the letters ये ओ यो. Here, after वृत्र जघ, we have ग प्रवेशे. These two together must be योगे योगे। प्रवेशे प्रवेशे which is the commentary on R. V. I. 30. 7. Then the commentary continues to पूजनीये अहषि which is the commentary on R. V. 1. 30. 21. The continuation of वृत्र जघ begins then as न्वानिन्द्रस्तदपववार इति. In the present MS. the page numbering goes on continuously. The only explanation is that the MS. which the scribe used must have had its leaves disarranged which he did not notice. One leaf must have ended with मन्त्रयात्रहे कर्तव्यमिति। नानेन बोध इति यास्क इति। यो आ यो. Then the third leaf must have begun आरोचमाने (ऋ. वे. १. ३१. २१. on p. 205) and must have ended with वृत्र जघ. Then the second leaf (misplaced) must have begun ग प्रवेशे and must have ended with पूजनीये अहषि; then the fourth leaf must have begun न्वानिन्द्रस्तदपववार इति। I printed the portion नानेन बोध इति यास्क इति। ये ओ यो under R. V. 1. 30. 21, since this portion is not clear and since its continuation definitely belongs to it.

[1] ये ओ यो is already printed on p. 205 under R. V. 1. 30. 21. ग प्रवेशे and what follows appear between वृत्र जघ and न्वानिन्द्र etc. printed under R.V. 1. 32. 11. on p. 229. I print this portion here to represent the MS. correctly. The following is the commentary on R.V. 1. 30. 7—21, omitted on pp. 202—5.

[2] Read वयं.

[3] Read वाजसनेयकम् instead of वाजसनेन्नु.

[4] Read कर्मणि कर्मणि.

[5] Read अन्नेऽन्ने.

इत्यत्र सखाय इन्द्रं इति पादो[1] न विसृष्टः । सखाय इति तत्र महितव्य-मित्यम[2] ॥ (१. ३०. ९)

आ घ । उपागच्छेदेव यदि शृणुयादस्माकं हवं बहुभिः पालनैरन्नैश्च सहेति ॥ (१. ३०. ८)

अनु । अनुभुवे[3] प्रत्नस्य पुराणस्योकस्सकाशात्[4] अन्तरिक्षात् । प्रत्नः[5] प्रतनो यथानूक्तो नूतन इति[6] । तुवि प्रतिगच्छति तं नरं यं ते त्वाजं[7] पिता पूर्वं हुवे भूतावान्[8] अजीगर्तः । ते म इत्यादेः सार्वविभक्तित्वं विभक्त्यनुक्रमण्यां[9] उक्तमिति ॥ (१. ३०. ९)

तं त्वा वयं[10] विश्वैर्वाहि आशास्महे[11] पुरुहूत[12] अपेक्षितं[13] सखै[14] वासयितः[15] जरितृभ्यो जरितॄणाणाम्[16] ।

[1] सखाय इन्द्रमूतये is the last pāda here.
[2] The passage corrupt and not quite intelligible.
[3] Read अनु हुवे.
[4] Read पुराणस्यौकसस्सकाशात्.
[5] प्र mostly worm-eaten.
[6] प्रत्न occurs in N. 3. 16, but not explained.
[7] This word not clear. Perhaps to read ते तत्र or त्वां.
[8] Read हुतवान्.
[9] This is the 5th of the 12 Anukramaṇis written by the author. Cf. Note 3 on p. 168.
[10] Pratika not separately given.
[11] After विश्वैर्वाहि the leaf is broken and about 2 syllables missing. आ mark in the syllable and स्महे follow. आश conjectured by me. Read विश्वैर्वरणीय आशास्महे.
[12] पु ends folio 25*b* and it is mostly worm-eaten.
[13] Anusvāra in तं mostly worm-eaten.
[14] Read सखे.
[15] यि mostly worm-eaten. What was written looks more like धि than यि.
[16] Read जरितॄणाम्.

स नो वस्व उप मासि (ऋ. वे. ८. ७१. ९)

इत्यत्र[1] जरितृभ्यः[2] इति संप्रदाने चतुर्थी। ततो न स्तृष्ट इति ॥
(१. ३०. १०)

अस्माकम्। द्वृच एकार्थो[3]। अस्माकं शिप्रिणीनां शशिप्राणानां[4] सोमस्य पातः सोमपाम्नां[5] सखे वज्रिन् सखीनाम्[6]। तदा तं दस्तु सोमस्य पातः सखे वज्रिन्[7] ॥ (१. ३०. ११)

तथा कृणु कुरु[8] यथा त्वां कामयामहे। इष्टये यज्ञार्थम्। इष्टशब्दो हविर्यज्ञ आद्युदात्तः। यज्ञमात्रोऽन्तोदात्त इति ॥ (१. ३०. १२)

रेवतीः। आपो रेवत्यः। यदि वा नापो[9] रेवत्योऽस्माकं सधमादः सखा सधमाद्यदिति[10]। तस्मिन्निन्द्रे सन्तु बहुबलाः। क्षुमन्तोऽन्नवन्तः। याह्मिर्मदेम[11]। क्षुरन्नं क्षौतेः शब्दकर्मण इति ॥ (१. ३०. १३)

[1] What is written is उपमासित्यत्र. The letter सि is completely worm-eaten, except for the इ mark. It is not सी.

[2] जरितृभ्यः occurs in the last pāda.

[3] Read द्वयृच एकार्थः

[4] Read सशिप्राणां.

[5] Read सोमपाव्नां.

[6] स mostly worm-eaten.

[7] The passage from तदा तं unnecessarily repeated.

[8] Pratīka not separately given. Perhaps तदा तं in the unnecessarily repeated portion at the end of the commentary in the previous stanza is the Pratīka.

[9] Read यद्विवा आपो.

[10] Reading not certain.

[11] Read याभिर्मदेम.

आ स[1] । आ ऋणाः[2] प्रक्षिपति त्वत्सदृशः त्मना स्वयमेव । आप्तः सखा आप्नोतेः । स्तोतृभ्यं[3] तदर्थम् । धृष्णो धर्षतितः[4] । कमिव । अक्षमिव चत्र्योः[5] चक्रयोः । इयातो[6] याच्यमान इति ॥ (१.३०.१४)

आ यत् । आ ऋणोर्यद्द्रुवो धनम् । आ ऋणोश्च काममपेक्षितं जरितॄणाम् । अक्षमिव कर्मभिः । ततस्वामित्थं[7] स्तुमः । ऋणोरित्याख्यातमत्र यद्युक्तम् । अतः ऋणोरक्षमिति सूक्तैक्येऽप्यसृष्टः । विभक्तिश्च भिन्नापि[8] । सन्दिग्धार्थेष्वपि समयो न प्रवर्तते । अक्षोऽश्नोतेः । रथाङ्गमाद्युदात्तः देवनार्था[9] अन्तोदात्ताः[10] ॥ (१. ३०. १५)

शश्वत् । इन्द्रेण दत्त रथं[11] प्रतिगृह्णन् वदति शश्वदिन्द्रः । पेपृथद्भिः[12] ओष्ठशब्दं कुर्वद्भिः । पृथिश्शब्दार्थः[13] । जिगाय नातदद्भिः[14] आस्यशब्दं च कुर्वद्भिः । शाश्वसद्भिश्च यननि[15] सपत्नानाम्[16] । स नो

[1] Read आघ.

[2] Read ऋणोः.

[3] Read स्तोतृभ्यः

[4] Read धर्षयितः

[5] Read चक्रयोः

[6] Read इयानो.

[7] Read ततस्त्वामित्थं.

[8] Passage not clear. Cf. a similar expression in verse 17 below.

[9] Read देवनार्थ.

[10] Read अन्तोदात्तः Here there is the figure 11. But the sukta does not end here. It is only a varga that ends here.

[11] Read दत्तं रथं.

[12] Read पोप्रुथद्भिः

[13] Read प्रुथिश्शब्दार्थः

[14] Read नानदद्भिः

[15] Read धनानि.

[16] Read सपत्नानां.

हिरमयं[1] रथं कर्मवान् । स तो[2] दाता सनये नो याचमानाय[3] वाह्मम्[4] । तच्छब्दौ द्वौ[5] पूरकौ तथास्मच्छब्दौ[6] चौ[7] ।

होता हिरण्यरथः (ऋ. वे. ४. १. ८)

इति बहुव्रीहिः[8] ॥ (१. ३०. १६)

आश्विनौ । आयातमश्विनावश्ववत्या । शयीरधा[9] प्रेर्यमाणया[10] । इषा गोमत्या । दस्रा दर्शनीयौ । हिरण्यवत्या सह ।

आ नो अश्वावदश्विना (ऋ. वे. ८. २२. १७)

इत्यत्र गोमदस्रा[11] इति पादो[12] न सृष्टोर्विभक्तिभेदादिति[13] (१.३०.१७)

[1] Read हिरण्मयं.

[2] Read स नो.

[3] याचमानाय must be the meaning of सनये and the presence of नो between the two words seems out of place. Perhaps नो must be read as स नो and must follow याचमानाय.

[4] Word not clear. There is the word अदात in the text.

[5] The स: coming twice in the last pāda.

[6] The न: coming twice in the last pāda along with स:

[7] Read च.

[8] In this stanza quoted, the word हिरण्यरथ has accent on the first syllable. But here it is on the last syllable.

[9] Read शवीरया.

[10] प्रे mostly worm-eaten.

[11] Read गोमद्दस्रा.

[12] The last pāda in R.V. 8. 22. 17.

[13] Read न सृष्टो विभक्तिभेदादिति.

समानयोजनः । समानयोजः[1] समानयोजनो हि युवयोः रथो द्वयोरप्येक एव युज्यते[2] । दस्रौ मर्त्यः[3] सपत्नैरहिंस्योऽन्तरिक्षेऽश्विनौ गच्छति ॥ (१. ३०. १८)

न्याध्न्यस्य[4] । नियेमथुरघ्न्यस्य पर्वतस्य हन्तुमशक्यस्य मूर्धन्येकं[5] चक्रं परिगच्छति । अन्यत् द्याम् । चक्रं क्रन्दतेः । चक्रतेर्गतिकर्मण[6] इति यास्कः[7] ।

ईमान्यद्वयपुषे[8] वपुः (ऋ. वे. ५. ७३. ३)

इत्यत्र पूर्वपादेन संसृष्टत्वात् चक्रं रथस्य इति पादो[9] न विसृष्टः । तथा गूढार्थश्च भवति । तत्रैकान्याभ्यां समर्थाभ्या[10] त्येकशब्दयोगे[11] पूर्वाख्यातस्योदात्तत्वं शाखान्तरे भवति ।

प्रजामेकां[12] रक्षत्यूर्जतेका[13] ।

इति[14] । दाशतय्यां चानुदात्तमेव ।

[1] समानयोजः not wanted.
[2] Folio 26*a* ends with युज्य.
[3] Read अमर्त्यः
[4] Read न्यघ्न्यस्य.
[5] Read मूर्धन्येकं.
[6] Perhaps to read चरतेर्गतिकर्मण.
[7] What Yāska says is चक्रं चक्रतेर्वा चरतेर्वा क्रामतेर्वा (नि. ४. २७). The आ mark in या and स्कः completely worm-eaten.
[8] Read ईर्मान्यद्वपुषे.
[9] The second pāda in R. V. 5. 73. 3.
[10] After भ्यां there seems to be a visarga wrtten. Read समर्थाभ्यां.
[11] Not intelligible; perhaps to read इत्येकशब्दयोगे.
[12] Read प्रजामेका.
[13] Read रक्षत्यूर्जमेका.
[14] T. S. 4. 3. 11. 1; A. V. 8. 9. 13; M. S. 2. 13. 10, K. S. 39. 10. A. V. and M. S. have jinvati instead of रक्षति.

आपो भूयिष्ठा इत्येको अब्रवीत् (ऋ. वे. १. १६१. ९)

अन्वको[1] वदति यद्ददानि[2] (ऋ. १. १३. १)

इति । अन्ययोगे पुनः पूर्वाण्याख्याख्यातान्युदात्तानि[3] ।

वृत्राण्यन्यः समिथेषु जिघ्नते (ऋ. वे. ७. ८३. ९)

तयोरन्यः पिप्पलं स्वाद्वत्ति (ऋ. वे. १. २६४)

इति । यदन्यशब्दो[4] न श्रूयते क्षार्नी[5] विकल्पेन भवति ।

क्षेमेण मित्रो वरुणं दुवस्यन्ति[6] (ऋ. वे. ७. ८२. ५)

अन्या नामानि कृण्वते सुते सचा (ऋ. वे. १. १६१. ५)

इति । बह्वत्र वक्तव्यम् । तत्सर्वं स्वरानुक्रमण्यां[7] उक्तरिति[8] (१.३०.१९)

कस्ते । कस्त उषं[9] कथप्रिये[10] स्तुतिप्रिये । भुजे भोगाय भवति मर्तोऽमर्त्यो । कन्तेन्नक्षसे[11] प्राप्नोषि दीप्तिमति । (१.३०.२०)

[1] Read अन्वेको.

[2] Read यद्दाति.

[3] Read पूर्वाण्याख्यातान्युदात्तानि.

[4] Read यदान्यशब्दो.

[5] Read तदार्नी.

[6] Read दुवस्यति.

[7] This is the sixth of the 12 anukramanis of the author. cf. N. 3. on p. 168.

[8] Read उक्तमिति.

[9] Read उषः

[10] क mostly worm-eaten.

[11] Read कं त्वं नक्षसे.

वयं हि[1] त्वां न जानीमः[2] । अन्तात् । अन्तस्समीपः । यत्रोदानीं[3] व्युच्छसि । आ परौकात्[4] । पराको दूरः । पराकान्तः कालः । यत्र वुच्छिष्यसि नित्यानाद्यं तेषाम्[5] । अश्वे व्याप्ते । चित्रे पूजनीये । अरुषि[6] । (१. ३०. २१)

अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः ।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥

अश्व्यो वारः । वारो वालो निरावरणाद्दंशमशकानाम्[7] । अश्वस्य वालः । अश्व्यो वार इत्यापमिकम्[8] । अभावः[9] तदानीं इन्द्र असुराणां निवारक आसीत्[10] । सृके आयुधे । यदा त्वा[11] दीप्तः एको वृत्रः प्रत्यहन् । सृजते । बली परमसहमातः[12] तस्यायुधं हस्तेन प्रतिहन्ति ।

[1] The pratīka not separately given.

[2] The text is वयं हि ते अमन्महि. There is no need for a negative particle in the commentary.

[3] Read यत्रेदानीं.

[4] Read आ पराकात्.

[5] Not quite intelligible.

[6] Here closes the portion which should precede the word आरोचमाने in the commentary on R. V. 1. 30. 21. on p. 205. Then follows in the MS. न्वानिद्रस्तदपववारेति which is the close of the commentary on R. V. 1. 32. 11.

[7] Read निवारणाद्दंशमशकानाम्.

[8] Read इत्यौपमिकम्.

[9] Read अभवः

[10] Read आसीः

[11] Read त्वां.

[12] Read परमसहमानः

ततः संक्रुद्धस्तेन युध्यते प्रतिहन्ति[1] । अजियो[2] गा अजयश्शूर सोमम् ।
अवासृजश्च निरुद्धान्[3] सर्तवे[4] सप्त सिन्धून् ।

इमं मे गङ्गे यमुने सरस्वति (ऋ. वे. १०. ७५. ५)

इत्यृचा प्राधान्येनोक्ता इति ॥

अश्व्यो वारः । यदा भवत्प्रतिबोधनार्थं असुरैः पीड्यमानः कश्चिद्देवस्त्वां त्वदीये वज्रे निहन्ति तदा त्वमश्वपृष्ठस्थो दंशानां वारको वाल इव भवसि । शत्रूनुभयतो हंसि । स त्वमसुरेभ्यः अजयो गाः । अजयश्च सोमम् । अवासृजः सरणाय सप्त सिन्धून् गङ्गाद्याः सप्त देवनदीः ॥ (१२)

**नास्मै॑ वि॒द्युन्न त॑न्य॒तुः सि॑षेध॒ न यां मिह॒मकि॑रद्ध्रा॒दुनिं॑ च ।**
**इन्द्र॑श्च॒ यद्यु॑यु॒धाते॒ अहि॑श्चोताप॒रीभ्यो॑ म॒घवा॒ वि जि॑ग्ये ॥**

नास्मै । वृत्रो मेघरूपं धारयन्तिन्द्रस्य[5] अपसेधनार्थं विद्युदादीन् प्रागदर्शयत्[6] । इन्द्रस्य निषेधं कर्तुमशक्ता आस्का[7] । विद्युद्विद्योततेः[8] । तन्यतस्तनितम्[9] । यां च मिहं वृष्टिमकिरत् ह्रादुरिश्च[10] । ह्रादुनिः[11] अशनिः

[1] From सके the passage corrupt and not quite clear.
[2] Read अजयो.
[3] द्ध mostly worm-eaten.
[4] र्त and ए mark in वे completely worm-eaten.
[5] Read धारयन्निन्द्रस्य.
[6] Something appears to be missing.
[7] Folio 26*b* ends here. आस्का not clear. The second letter not legible; looks like स्का. Perhaps to read आसन्.
[8] द्योत mostly worm-eaten.
[9] Letters mostly worm-eaten. Only a conjecture. Cf. तन्यतुस्तनित्री (नि. १२. ३०).
[10] Read ह्रादुनिश्च.
[11] Read ह्रादुनिः

ह्रादते: शब्दकर्मण: । इन्द्रश्च यदा युयुधाते अहिश्च । तदानीं अपरिभ्यो विद्युदादितिरिक्ताभ्योऽपि[1] मायाभ्यस्तं मघवा विजिग्य इन्द्र अहे:[2] ॥

नास्मै विद्युत् । अहिर्मेघरूपं धारयन् इन्द्रस्य वधार्थं विद्युदादीनकरोत् । सर्वानेव तानिन्द्रो जिगाय । नास्मै इन्द्राय वारणार्थमभवत विद्युत् । न च गर्जितशब्द: । न च यां वृष्टिमकरोदशनिं च । यदा इन्द्रश्च अहिश्च युयुधाते तदानीं विद्युदादिव्यतिरिक्ताभ्योऽपि मायाभ्यो विजिग्ये अहिमिन्द्र: ॥ (१३)

**अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् ।**
**नव च यन्नवतिं च स्रवन्ती: श्येनो न भीतो अतरो रजांसि ॥**

अनयेन्द्रमृषिरधिक्षिपन्निव[3] स्तौति । अहेर्यातारं[4] हन्तारं त्वदन्यं कमपश्य इन्द्र । यातिर्वधकर्मा च यथा यातुधान इति । हृदि यत्ते वृत्र घ्नुषो[5] भीरगच्छन्नास्तृषीति हीत[6] आसीत् । नचवयन्नवतिं[7] च स्रवन्ती भीको[8] रजांस्युदकानि[9] । अतर: शीघ्रं[10] यथा श्येन[11] शीघ्रं व्रजेदेवमिति ॥

[1] Read विद्युदादिव्यतिरिक्ताभ्योऽपि.

[2] Read विजिग्ये इन्द्र अहिम् । The letters वि and न्द्र completely worm-eaten.

[3] षि and क्षिप completely worm-eaten. Reading only a conjecture.

[4] Pratika not separately given.

[5] Read वृत्रं जघ्नुषो.

[6] Read भीत.

[7] Read नव च यन्नवतिं.

[8] Read स्रवन्ती: भीतो.

[9] द and क completely, नि partly worm-eaten.

[10] Not wanted.

[11] Read श्येन:

अहेर्यातारम्। इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतो जगाम। तदाह। अहेरसुरस्य हन्तारं त्वत्तोऽन्यं कं अपश्यः इन्द्र। यातिर्वधकर्मा। हृदये यत्तव भयमागतं वृत्रं जघ्नुषः। यदा त्वं नव च नवतीश्च नदीरुदकान्यतरः श्येन इव शीघ्रं भीतः त्वमिति ॥ (१४)

**इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः।**
**सेदु॒ राजा॑ क्षयति चर्षणी॒नाम॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥**

इन्द्रः[1] इतो यातो जंगमस्यावसितस्य सस्थाचरस्य[2] च राजा शमस्य शृङ्गिणश्च वज्रबाहुः[3]। शमः शान्तो शान्त। शृङ्गि शृङ्गम्[4]। अत्र यन्यु श्रूयते[5] स एव राजा वसति सर्वासां प्रजानाम्[6]। अपि चासौ यथा अरान् नेमिः परिभवेदेवं सर्वाण्येवतानि[7] परिभवति च व्याप्तो-रोऽर्तेः[8]। प्रकृतो[9] भवति। नैमिर्नमनात्[10] इति ॥

इत्यध्यायं दाशतवीम्या[11] द्वितीयं
ग्रामे ग्रामे[12] जातो गोमति र्व्याचकार[13]।

[1] Pratika not separately given.
[2] Read स्थावरस्य instead of सस्थाचरस्य.
[3] आ mark in बा completely worm-eaten.
[4] Reading uncertain.
[5] Perhaps to read अत्र यजुः श्रूयते.
[6] Not traced.
[7] Read सर्वाण्येतानि.
[8] Read व्याप्तः। अरोऽर्तेः Cf. अराः प्रत्यृता नाभौ. (नि. ४. २८)
[9] Read प्रत्यृतो.
[10] Read नेमिर्नमनात्.
[11] Read दाशतय्या.
[12] Repetition not wanted.
[13] Read गोमति व्याचकार.

यस्मिन् विप्राः सोमपाः शीलवन्तो
यन्तास्पृक्षीन्न[1] स्वभावः कलेयः[2] ॥

इन्द्रो यातः । इन्द्रो जङ्गमस्य स्थावरस्य च राजा शान्तस्य हरिणादेः श्रृङ्गिणो महिषादेश्च वज्रबाहुः । स देवमनुष्याणां राजा भूत्वा निवसति । परिभवति च तदन्यानि भूतानि अरानिव नेमिः ॥ (१९)

इत्थं द्वितीयमध्यायं व्याकरोत्प्रथमेऽष्टके ।
गाथिनिर्माधवो नाम संगृह्यार्थं प्रदर्शयन् ॥

---

## द्वितीयोऽध्यायः

---

[1] Perhaps to read यानस्प्राक्षीन्न.

[2] Read कलेयं: Here there is the colophon इति द्वितीयोऽध्यायः, there is also विघ्नेश्वराय नमः after the colophon.

# तृतीयोध्यायः[1]

एतायामोपं गव्यन्त इन्द्रमस्माकं सु प्रमतिं वावृधाति ।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः ॥

एत । आगच्छतेन्द्रमन्वेष्टुम् । उपगच्छामस्तमिन्द्रमपक्रान्तं गा इच्छन्तः । अस्माकं स इन्द्रः प्रमतिं वर्धयति गोप्रदानेन सुमनसः[2] करोति । सोऽरावृणो[3] शत्रुरबाधको वा[4] । अणो अन्नातेः[5] । कुवित् बहु । अस्य रायः । अवर्जते[6] अस्मात्[7] । बह्वमुं[8] रयिमित्युक्त्वा प्रकारान्तरेण वाक्यमुपसंहरति गवामिति । केतः कितेः संज्ञानायं[9] भवति[10] । तत्पर-मुत्तमं अस्मानिन्द्रः आविदावर्जते[11] इति प्रापयति[12] ॥

[1] This is not in the MS.

[2] सु partly worm-eaten.

[3] Read सोऽनामृणः

[4] Not clear. Perhaps to read सोऽनामृणोऽशत्रुरबाधको वा.

[5] Not clear.

[6] Read आवर्जते.

[7] Perhaps the meaning of आत.

[8] Read बहुं.

[9] Read संज्ञानार्थात्.

[10] It seems that something is missing before भवति.

[11] Read कुविदावर्जते.

[12] Read प्रापयति इति instead of इति प्रापयति.

एतायामोप । हिरण्यस्तूपः । . . . . . . सोऽस्माकं अनेकार्थाभिलाषिणीं मतिं सुष्ठु वर्धयति । हिंसकवर्जित उपगमनानन्तरं अस्य धनस्य बह्वावर्जयति । तदेवाह गवां सङ्ख्यं कुविदावर्जयति इति ॥ (१)

उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥

उप । उपपतां[1] धनस्य दातारम + लिगिरप्रतिगतम्[2] । पुरा सेवितामिव वसतिं श्येनः । श्येन इति वर्णिनाम[3] । शंसनीयं गच्छति इति यास्कः[4] । इन्द्रं स्तुवन्नुपमेभिः कल्याणैः । अर्कैः वैरन्यानुपमिमीते[5] । यः स्तोतृभ्यो हव्यो[6] भवति युद्धे ॥

उपेदहम् । उपैव पताम्यहं धनस्य दातारं शत्रुभिरप्रतिगतं स इन्द्रमर्चयन् उपमानभूतैः । य इन्द्रः स्तोतृभ्यो हव्यो भवति यज्ञे हन्ति चेति ॥ (२)

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥

[1] Read उपपतामि.

[2] After दातारम there is space for one letter left blank. Read दातारमप्रतीतमप्रतिगतम्.

[3] Not clear. Perhaps पक्षिनाम.

[4] N. 4. 24.

[5] Not clear. Perhaps अर्कैः स्तवैः । अन्यान् उपमिमीते ।

[6] ह completely worm-eaten.

नि सर्वसेनः । निष्प्रजति[1] पृष्ठे समग्रसेन इषुधीन् । सर्वस्सर्तेः[2] । सेना सेश्वरा[3] । इषुधीरिषूणां[4] निधानात्[5] । इषु[6] इषेर्गर्गतिकर्मणः[7] । समजत्यर्यो[8] वीर ईश्वरो वा । अर्तेः[9] प्रेरणार्थात् । गा अपहृताः पुनर्यस्येच्छति । निरुक्तः[10] । चोष्कूयमाण इन्द्र भूरि वामम् । ददिन्द्र[11] वननीयमिति । स्कौतिः प्रेरणार्थः ।

इन्द्र चोष्कूयसे वसु (ऋ. वे. ८. ६. ४१)

आचतेर्वा[12] शब्दकर्मणः ॥

चोष्कूयसे[13] विश इन्द्रे[14] मनुष्यान् (ऋ. वे. ६. ४७. १६)

मा पणिभूरस्मासु[15] प्रवृद्ध । पणिः पणनादप्रदात्रात्रेति[16] ॥

[1] Read निषज्जति.

[2] Cf. सर्वं संसृतम् (नि. २. २८).

[3] See N. 2. 11.

[4] Read इषुधिरिषूणां.

[5] See N. 9. 13. Perhaps to read निधानम्.

[6] Read इषुः

[7] Read इषेर्गतिकर्मणः see N. 9. 18.

[8] Folio 27*a* ends with सम.

[9] Add अर्यः before अर्तेः

[10] The relevancy of this word not clear. There is no quotation from Nirukta here.

[11] रि and वा partly, मन्द completely and द partly worm-eaten. भू and दिन्द्र in tact.

[12] Not clear.

[13] Read चोष्कूयते.

[14] Read इन्द्रो.

[15] Read पणिर्भूरस्मासु.

[16] Read पणनादप्रदातेति. see N. 2. 17.

नि सर्वसेनः। निषज्जति समग्रया सेनया उपेतः इषुधीन् आत्मपृष्ठे। अथ च समजति ईश्वरः पशून् तस्मै शत्रुभ्यो यस्य शत्रुभिरपहृतान् संभक्तुमिच्छति। ददविन्द्र बहु वननीयं धनं मा पणिर्भूरस्मासु प्रवृद्ध। पणिः पणनात्। कारणमनवेक्ष्य देहि इति॥ (३)

**वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र।**
**धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः॥**

वधीः। अवधीहि[1] दस्युं धनिनं घनेन वज्रेण। वृत्रस्यान्तः सर्वे देवाः सर्वाश्च विद्याः सर्वाणि हवींषि चासन् इति वाजसनेयकम्[2]। ते विधनित्वम्[3]। एकस्वरन्तुपशाकेभिरिन्द्रः[4]। उपशाकाः सहायाः शक्तं कुर्वन्तीति। धनोरधि धनुषोऽधि। यद्वा धन्वनोऽन्तरिक्षादधि। विष्वक् ते व्यासन्[5] विनष्टा आसन्। धन्वतेः[6] गतिकर्मण इति निरुक्तम्[7]। अयज्वानः सनकाः प्रयन्ना[8] वृत्रसहायाः सुरायाः[9] प्रतीमपयानं[10] ईयुः। अपिवा मभ्रूरिति[11]॥

वधीर्हि। त्वं वज्रेण उपक्षपयितारं धनवन्तं वृत्रम्। एक एव चरन् सहायभूतैर्मरुद्भिः सह तत्र तव धनुषः सकाशात् विष्वक् ते वृत्रसहाया विविधं गता। अयजमानाः प्रत्नास्ते मरणं गताः॥ (४)

[1] Read अवधीर्हि.
[2] Not traced.
[3] Not intelligible.
[4] Read एकश्चरन्नुपशाकेभिरिन्द्रः
[5] Read व्यायन्.
[6] धनुः to be added before धन्वतेः
[7] N. 9. 16.
[8] Read प्रत्ना.
[9] हाया mostly worm-eaten. Only a conjecture. सुरायाः not wanted.
[10] Read प्रेतिमपयानं.
[11] Read मभ्रुरिति.

परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥

अपाचित्[1] । परा ववृजुस्ते इन्द्र शिरांसि विमुखा अभवन् । अयज्वानो यन्त्वभि[2] स्पर्धमानाः । निष्प्रयमो[3] यदा हरिवः स्थातरुग्र अव्रतान् दिवो अन्तरिक्षाद्रोतस्योः[4] द्यावापृथिवीभ्यां चेति ॥

पराचिच्छीर्षा । परावव‍ृजुः शीर्षाणि ते इन्द्र आसन् पराङ्मुखा युद्धे अयज्वानो यज्वभिः स्पर्धमानाः । यदा त्वं दिवः स्थापयितः हरिवः उद्गूर्ण प्रातिष्ठथाः शत्रून् प्रति तदानीं अयजमानान् तान् द्यावापृथिव्योर्निरधमः ॥ (९)

अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ॥

क्युत्सत् न्नवद्यरहितस्येन्द्रस्य[5] सेनां अयज्वानम् । अथ तमिन्द्र-मधातथन्त निरगमयन्युत्समायैस्तैर्योद्धुं ऋक्सामभिः[6] । क्षितयो नवग्वाः ।

[1] Read पराचित्.

[2] Read यज्वभिः

[3] Read निष्प्राधमो.

[4] Read अन्तरिक्षाद्रोदस्योः The letter त before स्योः partly worm-eaten. What remains looks more like a part of त than of द.

[5] क्व in the beginning mostly worm-eaten. From a bit that remains it looks like क्व. Read अयुयुत्सन्नवद्यरहितस्येन्द्रस्य. Pratika not separately given.

[6] From अथ तमिन्द्र, the passage is corrupt. I have copied the passage as it is in the MS. Perhaps to read अथ तमिन्द्रं अयातयन्त निरगमयन् अयुयुत्सन् तैर्योद्धुं ऋक्सामभिः

क्षितय इति मनुष्यनाम । मनुष्या ह्यङ्गिरसः । यं[1] कामयेतानपर्यजयेदिति[2] तमेतस्मिन्नक्षत्रे धातयेत्[3] इति ब्राह्मणम्[4] । अङ्गिरसा[5] सत्रमासीनानां केचिन्नवहिमंसे:[6] काममाप्त्वोदतिष्ठन् । केचिद्दशभिः । तस्मादङ्गिरसो नवग्वा दशग्वाश्च । यास्कस्त्वाह वनीतगतयो[7] नवग्वा इति[8] । अथ ते पृषायुध व[9] वध्रयो निरष्टा इन्द्रेण निरस्ताः । यदि वा कर्षणास्मर्था[10] उत्कृष्टाः[11] । प्रवद्भिः प्रवणैः । इन्द्रादन्यत आय[12] जानन्तो बलिनमिन्द्रमिति ॥

अयुयुत्सन् । अयुयुत्सन् अवद्यरहितां सेनां अव्रताः । अथैनमिन्द्रं नवग्वाः क्षितयो युद्धार्थं निरगमयन् । अथ ते वृषायुधः छिन्नवृषणा इव वार्धक्यादुत्सृष्टाः साण्डेन युध्यमानाः प्रकर्षगमनवद्भिः रथैः बलवानिन्द्र इति जानन्तो युद्धात् प्रगताः ॥ (६)

[1] After य something is completely worm-eaten. I conjecture it to be anusvāra.

[2] After ज the ए mark is clear. The consonant is mostly worm-eaten. I conjecture the syllable to be ये.

[3] Reading uncertain.

[4] Not traced- The passage corrupt.

[5] Read अङ्गिरसां.

[6] Read केचिन्नवभिर्मासैः After हिम and before सेः the leaf is slightly worm-eaten. It looks like an anusvāra.

[7] Read नवनीतगतयो.

[8] N. 11. 19.

[9] Read वृषायुध इव.

[10] Read कर्षणासमर्था.

[11] Read उत्सृष्टाः

[12] Read आयन्.

त्वमे॒तान्रु॑द॒तो जक्ष॑त॒श्चायो॑धयो॒ रज॑स इन्द्र पा॒रे ।
अवा॑दहो दि॒व आ दस्यु॑मु॒च्चा प्र सु॑न्व॒तः स्तु॑व॒तः शंस॑मावः ॥

त्वमेतान्[1] रोदनं भक्षणं[2] च माये भवतः[3] योधितवानसि । हत्वं[4] एतान् अन्तरिक्षस्य नसीन्द्र त्व[5] पारे स्थितोवा वादहः[6] दहिरयो[7] नयनार्थाः । दिवो दस्युमुच्चेदच्छ्रितान्[8] । प्रावश्च सुन्वतः स्तुवतश्चाभिलषितमिति ॥

त्वमेतान् । त्वमेतान् अव्रतान् रुदतो हसतश्च पृथिव्याः पारे योधितवानासीः इन्द्र । तदानीं उच्छ्रितात् दिवोऽसुरं नीतवानसि । सुन्वतः स्तुवतश्च प्रार्थनां प्रकर्षेण अरक्षश्च ॥ (७)

च॒क्रा॒णास॑ः परी॒णहं॑ पृथि॒व्या हिर॑ण्येन म॒णिना॒ शुम्भ॑मानाः ।
न हि॑न्वा॒नास॑स्तितिरु॒स्त इन्द्रं॒ परि॒ स्पशो॑ अदधा॒त्सूर्ये॑ण ॥

चक्राणासः । परीणहिराच्छादनार्थं[9] । कुर्वाण[10] आच्छादनं पृथिव्या[11] हिरण्मयेन मणिना शोभमानाः । मणिर्मनैः[12] पूजार्थात् । मणिरेव

[1] Pratika not separately given.
[2] ण completely worm-eaten.
[3] माये भवतः not intelligible.
[4] Read इन्द्र त्वं.
[5] Looks like a repetition of नसि in योधितवानसि and इन्द्र त्वं before एतान्.
[6] Read स्थितः । अवादहः
[7] Perhaps to read दहिरयं.
[8] द in दस्यु mostly worm-eaten. Read दस्युमुच्चैरुच्छ्रितात.
[9] णहि mostly worm-eaten. Folio 27*b* ends with राच्छा. Read परीणहिराच्छादनार्थं:
[10] Read।कुर्वाणा.
[11] थि mostly worm-eaten.
[12] Read मणिर्मने:

वा शोभार्थः । न ते प्रेरयन्त आयुधानि तीर्णवन्त[1] इन्द्रम् । पर्यदधात् तान् स्पृशः[2] सूर्येण इन्द्रः पृथक् चकार । स्पशस्पपत्नाः[3] स्वाशयते-र्बन्धनार्थादिति[4] ॥

चक्राणासः । कुर्वाणा आच्छादनं महत्तया पृथिव्याः हिरण्मयेन अलङ्कारेण शोभमानास्ते इन्द्रं प्रति गच्छन्तो न तीर्णवन्तः । सोऽयं सूर्येण सह परितो रश्मीन् निहितवान् ॥ (८)

**परि॒ यदि॑न्द्र॒ रोद॑सी उ॒भे अबु॑भोजीर्महि॒ना वि॒श्वतः॑ सीम् ।**
**अम॑न्यमानाँ अ॒भि मन्य॑मानै॒र्निर्ब्र॒ह्मभि॑रधमो॒ दस्यु॑मिन्द्र ॥**

परि । पर्यवुभेनजीः[5] यदेन्द्र त्वं उभे रोदसी महिम्ना सर्वत एव । सीमित्येव निस्सपत्नामभुकथास्सीमिति[6] प्रकृतपरामर्शः । परिग्रहार्थमिति[7] यास्कः[8] । तदानीममन्यमानान् अहिमन्यमानेभ्यो[9] ब्रह्मभ्यो निरधमो + +

[1] The writing is very illegible. It looks like आयुधानीतिर्ण्यवन्त.

[2] Read स्पशः

[3] Read स्पशः सपत्नाः After स्प the line ends. The first letter in the next line is completely worm-eaten. प is only a conjecture. I am not at all certain that what was written is प. From a small bit, it looks as something else. But I cannot say what it is.

[4] Read स्पशतेर्बाधनार्थादिति. Dhātupāṭha has स्पश बाधनस्पर्शनयोः (1. 936) and स्पश ग्रहणसंश्लेषणयोः (10. 141).

[5] Read पर्यबुभोजीः

[6] After सर्वत एव the MS. is corrupt. सीमित्येव is not wanted. The rest to read perhaps निस्सपत्नमभुङ्क्थाः । सीमिति.

[7] Read परिग्रहार्थ इति.

[8] N. 1. 7.

[9] Read अभिमन्यमानेभ्यो.

+ + शस्त्राणमन्यमानानेवाहिमन्यन्ते न तथा मन्त्राः परोक्षफलाः[1] । यद्वा करण एवं[2] तृतीया । सहकारिभिरङ्गिरोभिः प्रयुक्तैः ऋक्सामभिरिति ॥

परि यदिन्द्र । इन्द्र त्वं माहात्म्येन अन्यान् शत्रून् हत्वा द्यावापृथिव्या-वुभे अपि सर्वतः पर्यबुभोजीः निस्सपत्नमभुङ्थाः । तदानीं अङ्गिरोभिः प्रयुज्य-मानैः अमन्यमानान् अव्रतान् अभिमन्यमानैर्मन्त्रैः दिवः शत्रुं निरधमः ॥ (९)

**न ये दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन् ।**
**युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो गा अदुक्षत् ॥**

न ये । न ये गावोऽन्तरिक्षात् पृथिव्यास्समीपं आपुनः न स्वैः[3] कर्मभिर्धनस्य दात्रीमिमां[4] पृथिवीं पर्यभवन् । युजं हस्ते युक्तं वृषभश्चक्रे[5] इन्द्रः । ततो द्योतमानेन तेन वज्रेण तमसो मेघान् ता गा निरधुक्षत् । आप इव गाव इति[6] ॥

नि ये दिवः । या आपो दिवः पृथिव्या अन्तं नापुः । न कर्मभिर्धनस्य दातारं इन्द्रं परितोऽभवन् । तेषां जयार्थं सहायं वज्रं वर्षिता इन्द्रश्चक्रे । ततो ज्योतिषा गा अपः तमसो मेघान् निरधुक्षत् दस्युं हत्वा इति ॥ (१०)

[1] After निरधमो there is space for three or four letters left blank in the MS. Then शस्त्राण begins. दस्युमिन्द्र not commented. Passage not clear.

[2] Read एव.

[3] Read आपुः । न स्वैः The scribe confused between आपुर्न स्वैः and आपुः न स्वैः

[4] The आ mark in दा completely worm-eaten.

[5] वज्रं omitted.

[6] The relevancy of आप इव गावः not clear.

अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ नाव्यानाम् ।
सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥

अनु । अन्वक्षरन्नापोऽस्य स्वयामन्नम्[1] । स्वरसं अवर्धत चासौ वृत्रो नाव्यानामपां मध्ये । नाव्या आपो नाव्याग्या: नो: प्चनर्नयनात्[2] । सध्रीचीनेन सृष्टत्वादपरां मुखेन[3] मनसा युक्त इन्द्र ओजिष्ठेनायुधेन तं वृत्रमहन्नभिद्यून् द्योतमानेषु दिवसेष्विति ॥

अनु स्वधाम् । वृत्रे हते इन्द्रस्य आप: स्वधां मधु अक्षरन् । अयं चेन्द्रो नावा तार्याणां अपां मध्ये अवर्धत । सहायभूतेन अनुगुणेन धृष्टेन मनसा बलवत्तमेन हननसाधनेन हतवान् असुरं दिवसेषु तेष्विति ॥ (११)

न्याविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥

न्याविध्यत् । इलीबिशोऽसुरो भवति । इलाबिलशय इति यास्कः[4] निरवध्यत इलीपीसस्य[5] सकाशा[6] दृक्को[7] दृंहितानि जलानि । व्यभिनच्च

[1] Read स्वधामन्नम् .

[2] After नाव्यानामपां मध्ये, the passage not clear. In the last word there is च written under प. Perhaps to read नाव्या आपः नावां योग्याः । नौः प्लवनं नयनात् ।

[3] Read सृष्टत्वादपराङ्मुखेन.

[4] Cf. N. 6. 19.

[5] Read इलीबिशस्य.

[6] Read सकाशात् .

[7] Read दृढा.

तं शृङ्गिणं शुष्णं इन्द्रम्[1] । यावर्तरो वेतिगोस्ति[2] मघवन् । यावच्च बलं ते । तेन सर्वेण संयुक्तस्सन् वज्रेण शत्रुखमवधीस्तं[3] पृतनाकाममिति[4] ॥

न्या।विध्यत् । निरविध्यदुदकस्य निर्गमनद्वारं आवृत्य शयानस्य दृढानि द्वाराणि मेघस्य । तेजस्विनं शुष्णासुरं च व्यभिनदिन्द्रः । यावद्वेगो यावच्च बलं मघवतः तत्सर्वमादाय पृतनाकामं शत्रुं शुष्णमवधीः ॥ (१२)

**अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत् ।**
**सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥**

अभ्यजिगादस्य[5] शुष्णस्य सहायाच्छत्रून्[6] चातयितव्युत्सिध्म[7] साधक इन्द्रः । यद्वा अस्येन्द्रस्य सिध्मस्साधको वज्रः शत्रूनिन्द्रस्याभ्यजिगात् । व्यभिनत्तिग्मेन वृषभेण वज्रेण शत्रुपुराणि । समसृजद्वज्रेण[8] वृत्रमिन्द्रः । प्रातिरच्च स्वामिमति[9] वर्धयन् शत्रुं शाशदानश्शातयन् । शदिश्शदिना[10] सम इति ॥

[1] Read इन्द्रः

[2] Read यावत्तरो वेगोऽस्ति.

[3] शत्रु ends the line. What begins the next line appears to be ख. It is not very legible. Read शत्रुमवधीस्तं.

[4] क mostly worm-eaten.

[5] Pratika not separately given.

[6] Read सहायान् शत्रून्.

[7] Read शातयितव्यान् । सिध्मः

[8] द्व Completely worm-eaten. Can just be made out.

[9] Read स्वां मतिं.

[10] Read शदिश्शातिना. What begins the words is छ्शदि. This may be in Sandhi with यन् preceding.

अभि सिध्मः । साधयिता कर्मणां इन्द्रोऽस्य शुष्णस्य शातयितव्यान् सहायानभ्यजिगात् । व्यभिनच्च वज्रेण कामानां वर्षित्रा पुराणि । वृत्रं च वज्रेण समयोजयदिन्द्रः । अवर्जयत् स्वां मतिं शत्रुपुराणि शातयन् ॥ (१३)

**आवः कुत्सर्मिन्द्र यस्मिञ्चाकन् प्रावो युध्यन्तं वृषभं दशद्युम् ।**
**शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥**

आवः । कुत्समिन्द्र यस्मिन्नचकमथाः[1] स्तुतिः[2] । प्रावश्च युध्यन्तं सपत्नैर्वृषभं स्तोतारं दशद्युं नाम । अश्वानां शफच्युतो रेणुं[3] प्राप दिवम् । त्वया स + पेरितिस्याथस[4] श्वैत्रेयश्श्वित्रायाः पुत्रः । उक्तस्थौ[5] जलं प्रविष्ट[6] शत्रुभयात् । तेषामभिभवार्थम् ॥

आवः कुत्सम् । रक्षितवानसि कुत्सं इन्द्र यस्मिन् कुत्से स्तुतीः कामितवानसि । प्रावश्च युध्यन्तं स्तुतीनां वर्षितारं दशद्युं नाम । युद्धे शफैः च्युतो रेणुः अन्तरिक्षे नक्षत प्रवृद्ध आसीत् । अथ श्वित्रायाः पुत्रो दशद्युः त्वया उपबृहितः शत्रूणामभिभवाय कस्मिंश्चित् ह्रदे भयात् प्रविष्टः तत उत्तस्थौ ॥ (१४)

**आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।**
**ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥**

[1] न्न च mostly worm-eaten.

[2] Read स्तुतीः

[3] Folio 28*a* ends here. Read रेणुः

[4] The passage corrupt. The letter between स and पे completely worm-eaten. I cannot guess what it could be. It must be the explanation of नृषाह्याय.

[5] Read उत्तस्थौ.

[6] Read प्रविष्टः

अस्योत्तरा[1] भूयसे निर्वचनाय। आवः आवः शमम्[2]। रक्षितवानसि युद्धादुपशान्तं वृषभमुदकेषु[3] गतं क्षेत्रगतं[4] क्षेत्रजयार्थं मघवन् श्वैत्रेयम्[5]। चिरमति[6] युद्धे तस्थिवांसेस्ते[7] वेदना न्यक्रन्[8]। वेदनानि व्यसनानि भैषज्याय परेभ्यो वेद्यन्त इति। शत्रुत्वमाचरतां तेषां तानि वेदनानि सोधनानि[9] सोऽधराण्यकरिति[10]॥

अस्य उत्तरा[1] भूयसे निर्वचनाय आवः शममिति। बलाभावाच्छान्तं वृषभमुदकेषु भयात् गतं पृथिवीजयार्थं श्वित्राया अपत्यं दशद्यु आवः। चिरं तस्मिन् स्थिताः शत्रवः कृतवन्तो युद्धम। अथ तेषां शत्रुत्वमिच्छतां उपद्रवाणि अधराणि चकार इति॥ (१९)

---

[1] The verse No. 15.

[2] Repetition of आवः not wanted. Perhaps आवः alone is the pratīka and आवः शमं is the commentary proper.

[3] ष भ completely broken. Only a conjecture. षु is slightly worm-eaten. Then something is completely gone and after that an आ mark and anusvāra are seen. Perhaps गां.

[4] गतं क्षेत्रगतं not clear. Perhaps क्षेत्रगतं a mistake for क्षेत्रजेषे.

[5] Read श्वैत्रेयम्.

[6] Read चिरमपि.

[7] Read तस्थिवांसस्ते.

[8] There is only अक्रन् and not न्यक्रन् in the text.

[9] सोधनानि not wanted.

[10] Here there is the figure 1 to mark the end of the Sūkta.

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥

त्रिश्चित् । आश्विनो[1] । अद्य भवतं नवेदसौ प्राज्ञौ । विभुर्महान् । युवयोर्यामो रथे:[2] । राति[3] धनं चाश्विनौ । यामो रथो यमेम:[4] ।

धामं[5] येष्ठाः शुभा शोभिष्ठाः (ऋ. वे. ७. ५६. ६)

अनेनो वो मरुतो यामो अस्तु (ऋ. वे. ६. ६६. ७)

यदिति वा[6] यामो धनम् । रातिर्दानम ।

यामो बहूयादुषसो[7] वो अद्य (ऋ. वे. ४. ५१. ४)

युवयोर्हि[8] यन्त्रं यमनं इतरेतरसम्बन्धम् । हित्येव[9] वाससो भवति । हिम्या राञ्या यथा वाससोऽह्नः[10] तादृशः । तौ युवां अभ्यायन्तव्यौ भवतः स्तोतृभिरिति[11] ॥

त्रिश्चिन्नः । त्रिश्चिदस्माकमद्य भवतं प्राज्ञौ । विभवति युवयोर्गमनं अनेकेषु दानं च । युवयोर्हि युगलं रात्र्येवाह्नः सुश्लिष्टम् । तौ युवां अस्मान् प्रति गन्तारौ भवतं देवैः ॥ (१)

[1] Read अश्विनौ.
[2] Read रथः
[3] Read रातिः
[4] Read यमैः
[5] Read यामं.
[6] Read यदि वा.
[7] Read बभूयादुषसो.
[8] Read युवयोर्हि.
[9] Read हिम्येव.
[10] स in सो partly worm-eaten.
[11] त्रिश्चिन्नः in the beginning not commented.

त्र॒यः प॒वयो॑ मधु॒वाह॑ने॒ रथे॒ सोम॑स्य वे॒नामनु॒ विश्व॒ इद्वि॑दुः ।
त्र॒यः स्क॒म्भास॑: स्कभि॒तास॑ आ॒रभे॒ त्रिर्नक्तं॑ या॒थस्त्रिर्व॑श्विना॒ दिवा॑ ॥

त्रयः । त्रयः पवयश्चक्राणि भवन्ति । पवन्त इति । मधु जलं मध्वेव वा । तत्वाहनेन[1] रथे । सोमस्य वेनामनु । वेना जाया वेनतेः कान्तिकर्मणः । सूर्यायाः स्वयंवरे सर्वे एव देवा[2] । स्कं[3] रथान्तानि वाच्च-क्राणि दुरजानन्[4] ।

त्व ती[5] चक्रा त्रिवृतो रथस्य (ऋ. वे. १. ३४. ९)

यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यारयाः[6]

(ऋ. वे. १०. ८५. १४)

तस्मिन् रथे त्रयस्क + + भः स्थूणा[7] स्कभिताः[8] आरम्भार्थम् । तेन्तर-थेन[9] त्रिर्नक्तं याथा[10] यज्ञेषु । त्रिरेवे[11] दिवेति ॥

[1] Read तद्वाहने.

[2] Read देवाः

[3] It ought to be स्कम्भास: But it is not wanted.

[4] Not clear. Perhaps to read रथान्तानि चक्राणि विदुरजानन्. After दुर the line ends. The leaf is slightly worm-eaten and it seems there is a visarga after र. The next line begins जानन्.

[5] Read क त्री.

[6] Read सूर्यायाः

[7] There is space left blank for 2 syllables after स्क and before भ. It is not quite भ. It is partly भ and partly स—a confusion of two letters. Read त्रयः स्कम्भासः । स्कम्भः स्थूणः ।

[8] Perhaps to read स्कभितासः

[9] Not clear. Perhaps to read तेन रथेन.

[10] Read याथः

[11] Read त्रिरेव.

त्रयः पवयः। त्रीणि मधुपात्राणि मधुवाहने भवतोः रथे। सोमस्य कान्तां सूर्यामनु तस्याः स्वयंवरे सर्वे एव देवाः तं रथं प्रत्यक्षेणाजानन्। तस्मिन् तिस्रः स्थूणा अवष्टम्भनार्थं स्थापिताः। तौ युवां रात्रेः अस्मान् त्रिरागच्छतं अह्नश्च ॥ (२)

समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम्।
त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ॥

समाने। एकस्मिन्नहनि[1]। त्रिरवद्यगोहनौ यावद्या गूहतो गूहनं[2] अननुष्ठानात्। यदि वा नृणामवद्यानि नाशयतः। निरद्य[3] यज्ञं हविः युवयोर्मधुना सिञ्चकम्[4]। त्रिश्च बलवन्त्यन्नानि अश्विना युवां रात्र्युषसश्च[5] अस्मभ्यं पिन्वतं प्रयच्छतं[6] सर्वदेति ॥

समाने अहन्। एकस्मिन्नहनि त्रिरागतौ हे अवद्यानि विनाशयन्तौ। त्रिरद्यास्माकं यज्ञं मधुना सिञ्चतम्। तथा रात्रीरुषसश्च बलयुक्तान्यन्नानि युवामस्मभ्यं त्रिर्दुग्धम ॥ (३)

त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम्।
त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ॥

[1] न्न mostly worm-eaten.

[2] Not quite clear. Perhaps to read यावद्यं गूहतः। The word गूहनं seems unwanted.

[3] Read त्रिरद्य.

[4] Read सिञ्चतम्.

[5] Perhaps to read रात्र्यीः उषसश्च.

[6] प्रय ends the line. च्छतं begins the next line about one inch from the margin. च्छ is written, as usual, छ्श.

त्रिर्वर्तिः । त्रिर्वर्तिर्यानम्[1] । त्रिरनुव्रते जने । अनुव्रतोऽनुकूलकर्मा । त्रिषुस्सुष्ठु[2] परिरक्षणीये त्रेधेव शिक्षितं[3] धनानि । उपमार्थीयाः संप्रत्यर्थाश्च भवन्त्यनन्वितोपमार्था इति निपातानुक्रमण्यां[4] अस्माभिरुक्तम्[5] । त्रिर्नाद्यं[6] हर्षकरं धनम् । वहतमश्विनौ युवाम् । त्रिः पृक्षोऽन्नं अस्मभ्यं उदकानीव पर्जन्यः पिन्वकम्[7] ॥

त्रिर्वर्तिः । त्रिर्मार्गं गच्छतम् । त्रिरनुकूलकर्मणि जने आगच्छतम् । त्रिः सुष्ठु परिरक्षणीये । तथा त्रेधा दत्तम् । इवेति पूरणम् । त्रिरस्माकं हर्षजननं धनं वहतम् । त्रिरन्नं अस्मासु उदकानि इव पर्जन्यः पिन्वतम् ॥ (४)

**त्रिर्नो र॒यिं व॑हतमश्विना यु॒वं त्रिर्दे॒वता॑ता॒ त्रिरु॒ताव॑तं॒ धियः॑ ।**
**त्रिः सौ॑भग॒त्वं त्रिरु॒त श्रवां॑सि नस्त्रि॒ष्ठं वां॒ सूरे॑ दुहि॒ता रु॑हद्रथ॑म् ॥**

त्रिर्न[8] । त्रिकस्मभ्यं[9] रथिं[10] वहतमश्विनौ युवाम् । त्रिर्देवतातौ[11] यज्ञे देवैः स्तोतृभिस्तते । त्रिशश्चावतं[12] गच्छतं कर्माणि । त्रिस्सौभगत्व-

[1] Read त्रिर्वर्तिर्यातम्.

[2] Read त्रिस्सुष्ठु.

[3] Read शिक्षतं.

[4] Folio 28*b* ends with निपा. This anukramaṇī is the third of the 12 anukramaṇis of the author. Cf. p. 168. n. 3.

[5] स्मा mostly worm-eaten.

[6] Read त्रिर्नान्द्यं.

[7] Read पिन्वतम्.

[8] Read त्रिर्नः

[9] Read त्रिरस्मभ्यं.

[10] Read रयिं.

[11] Here the line ends about three and a half inches away from the margin, as the leaf gets narrow at the end.

[12] Read त्रिश्चावतं.

दावहृदन्नस्थिश्च[1] श्रवांसि । सौभगं धनम् । तदेव सौभगत्वम् । धनेन हि सुभगो भवति ।

दिवे दिवे सौभगवामासुवन्ति[2] (ऋ. वे. ४. ५४. ६)

त्रिषु चकेषु[3] स्थितम् । युवयो रथं सूरो[4] दुहिता । षष्ठ्या एकारः । आरुहत् आरूढवती । दुहिता दूरे निधानात्[5] । असगोत्रेषु निधीयते । रुहदित्यत्र शाकल्योऽडागमं न करोति ।

आ वामूजानि[6] रथमश्विनारुहत् (ऋ. वे. १. ११९. २)

इत्यत्र[7] करोति । तत्राहुः । हिरण्यस्सुतपः[8] सूर्यायाः स्वयंवरं प्रति[9] गच्छन् तौ सूक्तेनानेनास्तौत् । ततश्च रुहदिति लेडन्तं इति ॥

त्रिर्नो रयिम् । त्रिरस्मभ्यं धनं वहतम् । त्रिर्यज्ञे दत्तम् । अपि च कर्माणि रक्षतम् । त्रिः सौभाग्यं त्रिरुत अन्नानि । त्रिभिश्चक्रैः यस्तिष्ठति तं युवयोः रथं सूर्ये स्वयंवरार्थं गतयोः तस्य दुहिता आरुरोह ॥ (५)

**त्रिर्नो॑ अश्विना दि॒व्यानि॑ भेष॒जा त्रिः पार्थि॑वानि॒ त्रिरु॑ दत्तम॒द्भ्यः ।**
**ओ॒मानं॑ शं॒योर्मम॑काय सू॒नवे॑ त्रि॒धातु॒ शर्म॑ वहतं शुभस्पती ॥**

[1] The MS. is corrupt. Perhaps to read त्रिः सौभगत्वं आवहतं नः त्रिश्च.

[2] Read सौभगमासुवन्ति.

[3] Read चक्रेषु.

[4] Read सूरे.

[5] Cf. दुहिता दुर्हिता । दूरे हिता । दोग्धेर्वा (नि. ३. ४).

[6] Read वामूर्जानी.

[7] Here the Pada is अश्विना अरुहत्.

[8] Read हिरण्यस्तूपः

[9] प्र partly and ति mostly worm-eaten. Only a conjecture.

त्रिस्न:[1] । त्रिन्नो[2] अश्विना दिव्यानि भेषजान्यन्नानि भेषजा।न्येव[3] वा । त्रिः पार्थिवानि दत्त । त्रिश्चाद्भ्यः अन्तरिक्षस्थाप्य:[4] । अन्तरिक्षनामसु च आप इति पठितम् । ओमेति सुखनामा यतीति[5] । यच्छंयुर्बार्हस्पत्यः स्वायै प्रजायै देवेभ्यो लैभे[6] तमोमाग्नं[7] ममकाय[8] स्तूनेवे[9] । त्रिधातु च गृहं वहतं शुभस्पती जलस्य[10] पति[11] इति । शंयुश्शमे[12] संस्थापनार्थात् द्युर्नाम करहः[13] संस्थापयिता । यज्ञस्य स्वगा[14] कर्तारं नाविन्द इति तैत्तिरीयमिति[15] ॥

त्रिर्नो अश्विना । त्रिरस्मभ्यमश्विनौ दिवि भवानि भेषजानि दत्तम् । त्रिः पार्थिवानि त्रिश्चान्तरिक्ष्याणि । यज्जगतो रक्षकं सुखं तत् त्रिगुणं उदकपती सूनवे मदीयाय आवहतम् ॥ (६)

**त्रिर्नौ अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतम् ।**
**तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ॥**

[1] Read त्रिर्नः
[2] Read त्रिर्नो.
[3] न्ये looks more like ग्न्ये. But it can be read as न्न्ये.
[4] Not clear. Perhaps to read अन्तरिक्षस्थाभ्यः or अन्तरिक्षस्थानि.
[5] Not clear. Perhaps ओमेति सुखनाम अवतीति ।
[6] Read लेभे.
[7] Read तमोमानं.
[8] Read ममकाय.
[9] Read सूनवे.
[10] ज partly worm-eaten.
[11] Read पती.
[12] Read शंयुश्शमेः
[13] Not clear.
[14] Not clear.
[15] Read तैत्तिरीयकमिति. Not traced.

त्रिर्नः । त्रिर्नोऽश्विना यष्टस्यौ[1] दिवे दिवे पर्यशायतम् । त्रिधातु पृथिवीः[2] । बर्हिषस्त्रिभियातुभिः[3] परिस्तीर्णां वेदिमस्माभिः कारयतमित्यर्थः[4] ॥

त्रिर्नो अश्विना । अश्विनौ यजनीयौ अह्नः । त्रिरस्मान् वेदिभूतां पृथिवीं बर्हिषा त्रिधातुना पर्यशायतं परितः तारितवन्तौ । त्रिधातु तिस्रो वेदीः । नासत्यौ रथ्यौ दूरादागच्छतम् । व्याप्त इव वायुः अहानि यथा वायुर्दिवसेषु संचरति ॥ (७)

**त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रयं आहावास्त्रेधा हविष्कृतम् ।**
**तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ॥**

त्रिस्सप्ता[5] । त्रिरश्विनौ सिन्धुभिऋक्भिः[6] । सप्तमातृभिः । सप्त नद्यः । ताभ्यो ह्यपामुत्पत्तिः । स्वमिवरीभिः तिस्रय इत्यर्थः[7] । तदेवोक्तं त्रियः आभावः[8] कृताः इति । तदेव विशदतरमुक्तं त्रेधा हविष्कृतमिति । द्रोणकलशं आद्धनीयं[9] पूतभृदिति त्रीनभावान्[10] ब्रूते । तेषु सोमोऽभिषुतो[11]

[1] Read यष्टव्यौ.
[2] Read पृथिवीम्.
[3] Read बर्हिषस्त्रिभिर्वातुभिः
[4] The second half of the verse not commented.
[5] The pratīka can only be त्रिः or त्रिरश्विना.
[6] Read सिन्धुभिर्ऋग्भिः
[7] Not clear.
[8] Read त्रयः आहावाः
[9] Read आधवनीयं.
[10] Read त्रीनाहावान्.
[11] ए mark in तो worm-eaten.

विभक्त इत्यर्थः । तिस्रः पृथिवीरुपरि त्रिभ्यो लोकेभ्य एव ऊर्ध्वं या द्यौः तत्रो[1] दिवः प्रवा प्लवन्तौ अहोरात्रैर्निहितं[2] आदित्यं रक्षेथे । अनक्तवोऽनक्तमिति[3] ॥

त्रिरश्विना । सप्त आदित्यरश्मयो मातरो यासां नदीनां ताभिः अश्विनौ त्रिः कृतम् । एतद्विशदमाह त्रयः इति । कूपस्य समीपं प्रभूतोदकं निधानं आहावः । त्रय आहावाः कृताः । एतदेव स्पष्टमाह त्रेधा इति । द्रोणकलश आधवनीयः पूतभृत् इति त्रय आहावाः । तेषु त्रेधा सोमः कृतः । एवं कृते तिस्रो वेदीः अभिप्लवनेन दिव आगच्छतम् । युवामहोरात्रैः निहितमादित्यं रक्षेथे ॥ (८)

**क्व॑१ त्री च॒क्रा त्रि॒वृतो॒ रथ॑स्य॒ क्व॑१ त्रयो॑ ब॒न्धुरो॒ ये सनी॑ळाः ।**
**क॒दा योगो॑ वा॒जिनो॒ रास॑भस्य॒ येन॑ य॒ज्ञं ना॑सत्योपया॒थः ॥**

का त्री[4] । क त्रिणी[5] चकाणि[6] युवयोः त्रिवृतो रथस्य । त्र्यश्रि[7] त्रिवृत् । क त्रयो वन्धुनो[8] ये सनीळाः । बन्धुरो वस्नाते:[9] । यैः बध्यते

[1] Perhaps to read तत्र.

[2] After अ something begun. Perhaps क. It is completely scored off. Then हो follows.

[3] Perhaps to read अक्तवोऽनक्ता इति.

[4] Read क्व त्री.

[5] Read त्रीणि.

[6] काणि mostly worm-eaten. Folio *29a* ends here.

[7] Read त्र्यश्रिः

[8] Read वन्धुरो. नो is slightly worm-eaten. But it is certainly नो and not रो as it is written.

[9] Read बध्नाते;

त्रिभिश्चतुर्भिर्वा रथः काष्कैः[1] । रीडमवस्थानं[2] निलीयमेरनेः सारथेस्सर्वेष्वस्य च[3] । कदा च योगो बलवते रासहस्य[4] । रासेन भीषयतीति । मत्वर्थयो[5] रभावः[6] यथा वृषभ इति । येन रथेन नास्त्यौ[7] यज्ञमुपयाथ इति ॥

क त्री चक्रा । क त्रीणि चक्राणि । त्रिभिश्च तैर्वर्तमानस्य युवयोः रथस्य क वा त्रयः फलकासंघाटाः । प्रउगाकारस्य कोणेषु त्रयः फलकासंघाटा भवन्ति । ये सनीळाः । एकस्मिन् रथफलके संघटिताः । कदा च योगः रथे युवयोः बलवतो रासभस्य येन रासभेन नासत्यौ यज्ञमुपगच्छथः ॥ (९)

**आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः ।**
**युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ॥**

आ नासत्या । आगच्छतं नासत्यौ पिबतं चेति समुच्चयः । हूयते हविः हुतम् । अस्य मध्वः पिबतं मधुपैरास्यैः[8] । आस्यानि तानि यैर्वर्णानस्यन्ति ।

मध्वः पिबतं मधुपेहिरासहिः[8] (ऋ. वे. ४. ४५. ३)

[1] Read काष्ठैः
[2] Read नीडमवस्थानं.
[3] Not clear.
[4] Read रासभस्य.
[5] Read मत्वर्थीयो.
[6] Perhaps to read भकारः instead of रभावः
[7] Read नासत्यौ.
[8] धु completely worm-eaten.
[9] Read मधुपेभिरासभिः

इति तृतीयेऽष्टके न सृज्यते कार्यकारणाभावाभावात्[1] । युवयोहि[2] रथं सवितोषसः पूर्वमेव यज्ञार्थं चित्रमुदकवन्तं[3] प्रेरयतीति ॥

आ नासत्या । आगच्छतं नासत्यौ । हूयते हविः । तं सोमं पिब सोमपैरास्यैः । बहुवचनेन तात्पर्यमस्ति । अथवा बहूनि भवन्ति देवशरीराणि । युवयोर्हि रथं उदकम् । तं उषसः पूर्वं अपररात्रे एव सविता दिवसकरणाय इच्छति चित्रं प्रेरयति वा ॥ (१०)

**आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।**
**प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥**

आ नासत्या । आगच्छतं नासत्यौ यत्रस्त्रिंशता[4] देवैरहः[5] । मधु यस्मिन् स्थाने पीयते तन्मधुपेयम्[6] । अश्विना प्रवर्धयतमायुः पापानि च निर्भृजतं[7] विनाशयतम् । रपः पापो येन परिवाद्यो भवति । निषेधतं च द्वेषो येनान्विष्टो भवति । भवतं चास्माक[8] सबाहुवौ[9] सहायाविति ॥

आ नासत्या । आयातं नासत्यौ त्रयस्त्रिंशद्भिर्देवैः । इह पातव्यं सोमम् । आयुश्च प्रवर्धयतम् । पापानि च विनाशयतम् । द्वेष्टॄंश्च निषेधतम् । भवतं च सहभूतौ अस्माभिः ॥ (११)

[1] Read कार्यकारणभावाभावात्.
[2] Read युवयोर्हि.
[3] व completely worm-eaten.
[4] Read त्रयस्त्रिंशता.
[5] First written दै. Then the first of the two ए marks to form the ऐ mark deleted by a small vertical stroke above it. Read देवैरिह.
[6] Written तम्मधुपेयम्.
[7] Read निर्मृजतं.
[8] Read चास्माकं.
[9] Read सचाभुवौ.

आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥

स्पष्टोत्तरेति[1] ॥

आ नो अश्विना । आवहतं अश्विनौ त्रिवृता रथेन अस्मभ्यं इतोमुखं सुवीरं रयिम् । शृण्वन्तौ वां अहं रक्षणार्थं भृशमाह्वयामि । वृध्यर्थं च अस्माकं भवतं युद्धे ॥ (१२)

---

ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे ।
ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये ॥

ह्वयामि । सावित्रं सूक्तम् । आद्या लैङ्गिकी । स्पष्टः पूर्वार्धः । ह्वयामि[2] रात्रीं जगामस्य[3] निवेशयित्री[4] । रात्रिन्नीशा[5] नमयति[6] भूतानि सर्वाणि नक्तञ्चारिण्यवेति[7] यास्कः[8] । तदयुक्तमिव । तथा च कौषीतकम् ।

[1] There is no figure 2 to mark the end of the sūkta here. उत्तरा is verse No. 12.

[2] ह्व partly worm-eaten.

[3] Read जङ्गमस्य.

[4] Read निवेशयित्रीम्.

[5] Read रात्रिर्निशा. The letter रा partly worm-eaten.

[6] Read रमयति.

[7] Read नक्तंचारीणि इति. The letter न worm-eaten. I am not certain if what is written is न or र.

[8] See प्ररमयति भूतानि नक्तंचारीणि (नि. ८. १८)

ये चेके[1] चानन्दा अन्ने पाने मिथुने राञ्येव[2] ते सन्तता क्रीडन्ते[3] तेषां रात्रि केरोतरः[4] (कौ. ब्रा. २. ७) इति ॥

ह्वयाम्यग्निम् । ह्वयाम्यग्निं मुख्यं अविनाशाय । ह्वयामि मित्रावरुणौ इह रक्षणाय । ह्वयामि रात्रिं जङ्गमस्य निवेशयित्रीम् । ह्वयामि देवं सवितारं रक्षणाय ॥ (१)

**आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।**
**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥**

आ कृष्णेन । कृष्णवर्णेन मध्यमस्थानेनावर्तमानः । यद्वा[5] आङा-ख्यातेनान्वितम् । तदा द्वितीयः[6] पूरकः । सदेहात्[7] उत्तरस्यां आ देवो धातीति[8] न सृष्टः । अपिवा वेष्टितत्वात् । निवेशयन्नभृतं[9] मर्त्यं च । अभृतः[10] प्राणाः । मर्त्यानि शरीराणि । यद्वा देवमनुष्यानीति[11] । शिष्टं स्पष्टम् ॥

[1] Read यैवैके.

[2] Read रात्र्या एव.

[3] The printed edition has संतता अव्यवच्छिन्नाः क्रियन्ते.

[4] Read रात्रिः कारोतरः

[5] द्वा mostly worm-eaten.

[6] First written द्वितीयं. Then the anusvāra changed into a visarga.

[7] Read सन्देहात्.

[8] Read यातीति.

[9] Read निवेशयन्नमृतं.

[10] Read अमृताः

[11] Read देवमनुष्यानिति. A better reading would have been देवान् मनुष्यान् च इति.

आ कृष्णेन । कृष्णवर्णेन रजसा द्युलोकेन वर्तमानो निवेशयन् देवान् मनुष्यांश्च । हिरण्मयेन सविता रथेन देव आयाति सर्वाणि भुवनानि पश्यन् ॥ (२)

**याति॑ दे॒वः प्र॒वता॑ यात्यु॒द्वता॒ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्याम् ।**
**आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒ विश्वा॑ दुरि॒ता बाध॑मानः ॥**

उत्तरा च[1] । अपबाधमान इत्यन्वयः इति ॥

याति देवः । याति देवः प्रवणेन मार्गेण प्रातः । यात्यनन्तरमुन्नतेन । याति शोभनाभ्यामश्वाभ्यां यष्टव्यः । आयाति देवः सविता दूरात् अपबाधमानो विश्वानि दुरितानि ॥ (३)

**अ॒भीवृ॑तं॒ कृश॑नैर्वि॒श्वरू॑पं॒ हिर॑ण्यशम्यं यज॒तो बृ॒हन्त॑म् ।**
**आस्था॒द्रथं॑ सवि॒ता चि॒त्रभा॑नुः कृ॒ष्णा रजां॑सि॒ तवि॑षीं॒ दधा॑नः ॥**

अभीवृतम्[2] । हिरण्यैर्बहुरूपम् । कृशीदीप्यर्थः[3] । अपि वा कर्शयति संसृष्टम् । कश[4] एव वा भवति संस्थातनो[5] रजतादिभ्यः । हिरण्यशम्यम् । शम्या अश्वनीयोजनार्था[6] स्कन्धेष्वश्वानां निपात्यते[7] ।

[1] The verse No 3.

[2] Written अ + वृतम्. There is space for a syllable left blank between अ and वृ.

[3] Read कृशिर्दीप्त्यर्थः

[4] क partly worm-eaten. Not certain if what is written is कृ or क.

[5] Not clear. Perhaps to read संस्थानतो.

[6] Read अश्वाजनीयोजनार्था.

[7] Folio *29b* ends with निपात्य. The corner of the next leaf broken. ते is only a conjecture.

शम्याः[1] शमयतेः। वेगाद्धि शतयति[2]। यजनीयो बृहन्तम्। बृहत् बृहंहतेः[3]।

आस्थाद्रथं स्वधया युज्यमानम् (ऋ. वे. ७. ७८. ४)

इत्यत्र त्रिकमेव विसृजति। तत्र निदान[4] उभयत्र सूक्तयोश्चतुर्थ्यौ भवतः। समानं च वृत्तं स्थानं च। अपि च द्वे अपि वाक्ये साख्यातत्वादिति[5]॥

अभीवृतम्। परिवृतं हिरण्मयैः नानारूपं हिरणमयशम्यं यष्टव्यो महान्तं रथमास्थितः सविता चित्रदीप्तिः कृष्णानि तेजांसि बलं च दधानः॥　　(४)

**वि जनाञ्छ्यावाः शितिपादो अख्यन् रथं हिरण्यप्रउगं वहन्तः।**
**शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः॥**

व्यख्यज्जनान्[6] श्यावर्णाः श्वेतपादाः रथं हिरण्यप्रउगं वहन्तः। रथस्य मुखदेशः प्रउगम्[7]। शश्वद्विशो मनुष्याः[8] सवितुर्दैव्यस्य[9] उपस्थे श्विनानि[10] भुवनानि तिष्ठन्ति। यद्वा विशस्सवितुः निवेशयितुस्सवितुरिति॥

[1] Read शम्या.

[2] Perhaps to read शमयति.

[3] ते mostly worm-eaten. Read बृंहतेः

[4] Read निदानं.

[5] The second half of the verse is not interpreted.

[6] Pratika not separately given. Read व्यख्यज्जनान्.

[7] उग mostly worm-eaten.

[8] After मनु there is an anusvāra which seems to be crossed. There is a small line inside.

[9] Read सवितुर्दैव्यस्य. The ए mark and the first द in र्दै mostly worm-eaten.

[10] Read विश्वानि.

वि जनान्। व्यख्यन् जनान् श्यावववर्णाः श्वेतपादाः हिरण्मयप्रउगं रथं वहन्तः। शश्वत् सवितुर्दिवि भवस्य उपस्थे विशो व्याप्ताः तिष्ठन्ति सर्वाणि भुवनानि ॥ (५)

**तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।**
**आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥**

तिस्रे[1]। तिस्रो द्यवाभूमयो दीप्तास्त्रय इमे लोकाः। तासां द्वे सवितुरुपस्थे भवतः। एका मध्यमा यमस्य वैद्युतस्याग्ने[2]। भुवने विराषाट् भवति। विरा[3] विरेर्गत्यर्थात्। ये तत्र गन्तुमिच्छन्ति तात्[4] सहन्ते इति भवति।

आग्रस्तुराषाट्[5] (ऋ. वे. ३. ४८. ४)

पृतनाषाळमर्त्यः (ऋ. वे. १. १७५. २)

इति। + + + + + + त्यमभृतानि[6] ज्योतींषि जलानि वा कञ्चनाधिष्ठन्ति[7]। अयथा[8] चक्रात् बहिरुपहितेनाणिना रथो ध्रियते एवं केनचिदिदं सर्वं ध्रियते। यदि कश्चित्तद्वेत्ति य इह तत् ब्रवीत्[9]। सविता आणिस्थानीयः सर्वस्यास्य जगत इत्यर्थः। आहिरणे[10] प्रक्षेपणार्थादिति ॥

[1] Read तिस्रो.
[2] Read वैद्युतस्याग्नेः
[3] Read विराट्.
[4] Read तान्.
[5] The MS. has भवत्याग्रस्तुराषाट्. Read उग्रस्तुराषाट्.
[6] After पृतनाषाळमर्त्य इति space for about 6 letters (one inch) left blank in the line.
[7] Passage not clear.
[8] Initial अ not wanted.
[9] Read ब्रवीतु.
[10] Perhaps to read आणिरणेः Cf. आणिररणात् (नि. ६. ३२)

तिस्रो द्यावः। तिस्रो द्यावः सन्ति। तत्र द्वे सवितुरुपस्थे उत्सङ्गे भवतः। अथापरा यमस्याग्नेर्भुवने विराजते वैद्युतस्य। चक्रनिर्गमननिरोधार्थं आणिं रथाक्षान्ते निहितं रथाङ्गानि इव अमृतानि कंचन अधितिष्ठन्ति। यस्तज्जानाति स इह तत् ब्रवीतु। अग्निना सवित्रा च उभयतः स्थिताभ्यां आणिभ्यामिव तिस्रोऽपि द्यावो ध्रियन्ते विनष्टा इति। यद्वा सर्वेषां अमरणानि सवितरि तिष्ठन्ति इति। तत्सविता वोऽमृतत्वमासुवत् (ऋ. वे. १. ११०. ३) इति मन्त्रः॥ (६)

**वि सु॒प॒र्णो अ॒न्तरि॑क्षाण्यख्यद्गभी॒रवे॑पा असु॑रः सुनी॒थः।**
**क्वे॒३॑दानीं॒ सूर्यः॒ कश्चि॑केत कत॒मां द्यां र॒श्मिर॒स्या त॑तान॥**

वि सुपर्णः। सवितुः सूर्यस्य च पृथक्त्वेन च स्तुतयो भवन्त्यैकेन[1] च यथेन्द्रसूर्ययोः। तत्रेयं अभेदन[2] स्तुतिः। अपामीवां बाधते वेति सूर्यं[3] इति पृथक्त्वेन। व्यख्यत् सुपतनो रोदस्योरन्तरा क्षितानि स्थानानि। गभीरवेपतोस्यसुरस्सुनयनः[4]। स सूर्य इदानीं क्व भवति। कस्तद्वेद कतमां द्यां रश्मिरस्याततान। किमिमां प्रति निलीनः आहोस्विदन्तरिक्षम्[5]। उताहो[6] दिवर्यम्[7]। इति सूर्यं सूर्यरश्मिं च सायं पश्यन् पृच्छति॥

वि सुपर्णः। व्यख्यत् शोभनपतनः अन्तरिक्षाणि त्रीणि गम्भीरवेगः प्राज्ञः प्रशस्यः। स इदानीं सविता सुवीर्यः क्व भवति। रात्रौ कश्च एनं जानाति। कतमां च द्यां अस्य रश्मिः आततान। इति रात्रौ पृच्छति॥ (७)

[1] Read भवन्त्येकत्वेन. The letter न्त्यै mostly worm-eaten.
[2] Read अभेदेन.
[3] Verse 5 in this sūkta.
[4] Read गभीरवेपाः असुरः सुनयनः
[5] क्षम् completely worm-eaten; रि is partly so; only a conjecture.
[6] उ mostly worm-eaten; only a conjecture.
[7] Perhaps to read दिवम्.

**अ॒ष्टौ व्य॑ख्यत्क॒कुभ॑: पृथि॒व्यास्त्री धन्व॒ योज॑ना स॒प्त सिन्धू॑न् ।**
**हि॒र॒ण्या॒क्षः स॑वि॒ता दे॒व आगा॒द्दध॒द्रत्ना॑ दा॒शुषे॒ वार्या॑णि ॥**

अष्टौ । अष्टौ व्यख्यत् ककुभो दिशः पृथिव्यस्संबन्धिनीः[1] । ककुभः ककुभेः[2] उच्छ्रायार्थात् । उच्छ्रिता इव हि दिशो वृक्षाग्रेषूपलभ्यमानाः[3] । त्रीणि च धन्वानि विस्तृतानि[4] योजनानि[5] । त्रीन् विस्तृतान् लोकानित्यर्थो भवति । यथा च[6] सप्त सिन्धून् । अपि वा योजना योजनः । त्रीन् लोकान् सप्त सिन्धून् योजयत्[7] । हिरण्याक्षः सविता देव आगच्छतु दधद्रत्नानि दाशुषे वरणीयानीति[8] ॥

अष्टौ व्यख्यत् । अष्टौ दिशः व्यख्यदन्तरिक्षसंबन्धिनीः । त्रीणि च अन्तरिक्षाणि कार्येष्ववकाशप्रदानेन योजकानि सप्त च सिन्धून् । हिरण्याक्षः सविता देव आगात् प्रयच्छन् रत्नानि वरणीयानि यजमानाय ॥ (८)

**हिर॑ण्यपाणिः सवि॒ता विच॑र्षणिरु॒भे द्यावा॑पृथि॒वी अ॒न्तरी॑यते ।**
**अपामी॑वां बाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रज॑सा॒ द्याम॑णोति ॥**

[1] Read पृथिव्यास्संबन्धिनीः

[2] Reading uncertain.

[3] What is found in the Nirukta is : ककुप् ककुभिनी भवति । ककुप् च कुब्जश्च कुजतेर्वा उब्जतेर्वा (नि. ७. १२).

[4] नि completely worm-eaten.

[5] ज mostly worm-eaten.

[6] Perhaps to read तथा च.

[7] Written सिन्धूनिन्योजयत्. Then नि deleted with a dot above. Read सिन्धून् योजयन्.

[8] वर completely worm-eaten. Folio 30*a* ends with वरणीया.

हिरण्यपाणिः । हिरण्मयपाणिः सविता जगरी विस्रष्टोहे[1] द्यावापृथिवी अन्तरियते मध्येन सञ्चरते । अपबाधते अमीवाम् । अमीवा रक्षसो अमोरभिभवार्थात्[2] । वेति सूर्यं वेति च सूर्यम् । तेन च संगच्छते इत्यर्थः[3] । अभ्यृणोति[4] च द्यां कृष्णेन रजसा सूर्येव वस्त्रमिति[5] ॥

हिरण्यपाणिः । हिरण्मयपाणिः सविता जगतो विद्रष्टा द्यावापृथिव्योरुभयोः मध्येन गच्छति । अपबाधते च रक्षः । सूर्यं च प्राप्नोति । कृष्णेन तेजसा सूच्येव द्युलोकं विध्यति ॥　　(९)

**हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।**
**अपसेधन् रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥**

हिरण्यहस्तः[6] स्वयान्[7] यनी[8] । स्वमिति सधननाम[9] सूपसृष्टादमेः[10] । अपव्येश्वन्रक्षसो[11] बलवतः स्वराद्यातुधाना[12] राक्षसा हिंसानिलया

[1] Read जगतां विद्रष्टोभे.

[2] Read अमीवा रक्षसः । अमेरभिभवार्थात्.

[3] From वेति च the letters worm-eaten, some partly, some mostly. But not difficult to decipher the letters.

[4] भ्यृ completely worm-eaten. Only a conjecture. What is written may be भि ऋ. The ए mark in णो is also completely gone.

[5] Not clear. Perhaps to read सूच्येव वस्त्रमिति.

[6] Pratika not separately given.

[7] Read स्ववान्. The commentary on असुरः सुनीथः सुमृळीकः missing.

[8] Read धनी.

[9] Read स्वमिति धननाम.

[10] Perhaps to read सूपसृष्टादर्तेः cf. स्वं पुनराश्रितं भवति (नि. ५. २२). Root ऋ is for स्वर् in Nirukta. Cf. N. 2. 14.

[11] Read अपसेधन् रक्षसो. यात्वर्वाङ् not commented.

[12] Perhaps to read बलवतः असुरान् । यातुधाना or बलवतः राक्षसान् । यातुधाना.

भवन्ति । सोऽयं प्रतिदोषं प्रतिनिशम् । अस्थादृषिभिः स्तूयमानः । तत्र षोडशिनः स्तोत्रे पतञ्जलिः । अथापि विद्यते तस्य कालस्य स्तुतिर्नास्य विद्यते । तस्य कालस्य स्तुतिर्नास्य विद्यते । कस्मात्त्वस्य विद्यते । पराङेतस्यां वेलायामदित्यो भवति । नो पराचस्तुतिर्विद्य । उदाहरणित्वेव पराचस्तुतिं हिरण्यस्तूपे भवति । अस्थाद्देवः प्रतिष्टोषं गृणान इति[1] ॥

हिरण्यहस्तः । हिरण्यहस्तो बली प्रशस्यः सुखयिता धनवान् सविता अभिमुखः इह आयातु । रक्षसो हिंसकान् यातुधानान् निषेधन् उदस्थाद्देवाः प्रतिरात्रं अस्माभिः स्तूयमानः ॥ (१०)

**ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।**
**तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥**

ये ते[2] पन्था मार्गा रश्रयो वा[3] पतन्तीति । पूर्वासः भवः प्रत्ता वा भवन्ति पूर्वासः भवः[4] । तेभिरिति स्पष्टम् । पुनर्न इति पूरणम् । अपि वा तेभिरस्मानागच्छेति क्रियेति[5] ॥

[1] From तत्र षोडशिनः I have copied the passages as they are in the MS. I have not been able to trace it.

[2] The pratīka is not separately given.

[3] Perhaps to read रश्मयो वा.

[4] Passage not clear. There is an unwanted repetition and evidently there are omissions. I have copied it exactly as it is in the MS.

[5] This word not clear. Here there is the figure three to mark the end of the sūkta.

ये ते पन्थाः। ये तव मार्गाः चिरन्तनाः रेणुवर्जिताः सुष्ठुकृताः अन्तरिक्षे तैरस्मान् पथिभिः सुगमैः अद्य रक्ष। अपि च अस्मान् अधिब्रूहि। पुनर्न इति पूरणम् ॥ (११)

---

प्र वो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म्।
अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते ॥

प्रवः। व्योरः[1] कण्वः। देवकामा विशः प्रकृषिः[2] ब्रूते। प्रमह[3] इति याज्ञाकर्मा[4]। तदर्थमग्निमीमहे। यमेनमन्येऽपीळते ऋषय[5] इति ॥

प्र वो यह्वम्। कण्वो घौरः। प्रयाचामहे वो बह्वीनां देवानिच्छन्तीनां विशां महान्तं अग्निं वयं शोभनवचनैः वचोभिर्यमग्निं सर्वेऽप्यन्ये अभिलषितं याचन्ते ॥ (१)

जना॑सो अ॒ग्निं द॑धिरे सहो॒वृधं॑ ह॒विष्म॑न्तो विधेम ते।
स त्वं नो॑ अ॒द्य सु॒मना॑ इ॒हावि॒ता भवा॒ वाजे॑षु सन्त्य ॥

जनासः। स्पष्टा। वयं च त्वां हविष्मन्तः परिचराः[6] ॥

[1] Read घौरः

[2] Not clear.

[3] Perhaps to read प्रमहे.

[4] Read यज्ञकर्मा.

[5] The commentary seems to have been considerably mutilated. Many words are not commented and what remains is not clear.

[6] Perhaps to read परिचराम:

जनासोऽग्निम् । यं त्वामग्ने अन्येऽपि जना अधारयन् बलस्य वर्धयितारं तं वयमपि हविष्मन्तः परिचरामः । स त्वं नो अद्य शोभनमना इह रक्षको भव युद्धेषु भजनीय ॥ (२)

प्र त्वां दूतं वृणीमहे होतारं विश्ववेदसम् ।
महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ॥

प्र त्वा । प्रवृणीमहे त्वां दूतमस्य यज्ञस्य होतारमिति होतृत्वेन वरणम् ।

अग्निं दूतं वृणीमहे (ऋ. वे. १. १२. १)

इत्यत्र तु दूतत्वेनेति[1] न सृजति । शिष्टं स्पष्टम् ॥

प्रत्वा दूतम् । प्रवृणीमहे त्वां दूतं होतारं सर्वधनम् । महतो भवतस्तव विचरन्त्यर्चयो दिवि च स्पृशन्ति भासमानाः ॥ (३)

देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते ।
विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ॥

उत्तरा[2] चेति ॥

देवासस्त्वा । वरुणादयो देवाः त्वां दूतं पुराणं समिन्धते । तथा यस्तुभ्यं हविः प्रयच्छति मनुष्यः सः त्वया विश्वं धनं जयति ॥ (४)

[1] Perhaps to read दूतमिति.

[2] The verse No. 4.

मन्द्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥

मन्द्रः । मन्द्रो मदयति स्तुत्या देवान् । अपि च[1] पाकेनान्नातिनि[2] स्वान्दूरकरोति[3] । त्वयि विश्वानि संगतानि प्रतानि[4] कर्माणि + + + + + + प्रजानां[5] यानि देवाः पृथक् पृथक् कुर्वन्ति । पृथिवी धारयति । पर्जन्यो भवति[6] बर्षयति । सूर्यः प्रकाशयति । त्वयि सर्वाण्येतानि[7] संगतानि ॥

मन्द्रो होता । मादयिता होता गृहपतिः अग्ने दूतो मनुष्याणां भवसि । त्वयि विश्वानि कर्माणि ध्रुवाणि संगतानि यानि देवाः पृथक् पृथक् कुर्वन्ति । वर्षणनियमनोत्क्षेपणादीनि यानि प्रत्येकं देवाः कृण्वन्ति तानि सर्वाणि त्वयि संगतानि इति ॥ (५)

त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः ।
स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या ॥

[1] च completely worm-eaten.

[2] Read पाकेनान्नानि or पाकेनान्नादीनि.

[3] Read स्वादूकरोति.

[4] Read व्रतानि.

[5] After कर्माणि two letters are completely worm-eaten. The first must be a consonant with र following; perhaps it is ध्र and the word is ध्रुवा. Then space for about three or four syllables left blank and प्रजानां follows. The word omitted may be ध्रुवाणि.

[6] This word not wanted.

[7] प्रकाशयति । त्व ends the line. For the next line, corner broken and about three syllables completely gone. The आ mark in र्वा and even a small bit of the consonantal part seen. Reading only a conjecture.

त्वे इत्। त्वय्येवाग्ने सुधने युवतम विश्वमाभृयते[1] हविः। स त्वमस्माकमद्य सुमना[2] उतापरं श्वः परश्वश्च। यज देवान् सुवीर्या सुवीर्यौ वा[3]। परशब्दं[4] कालवचनोऽन्नोदात्तः[5]। पुरुषपरश्चेदाद्युदात्तः[6]।

यश्च पूर्व स्तापरः[7] (ऋ. वे. १०. १३६. ५)
उतापरं तुविजात ब्रवाम (ऋ. वे. २. २८. ८)

इति च कालपर इति॥

त्वे इदग्ने। त्वय्येवाग्ने शोभनधने युवतम सर्वदेवार्थं हविराहूयते। स त्वं नो अद्य सुमनाः अपिच परश्वश्च यज देवान् शोभनेन वीर्येण॥ (६)

**तं घेमित्था नमस्विन उप स्वराजमासते।**
**होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः॥**

तं घ। स्पष्टप्राया। होत्राः सप्त वषट्कर्तारम्[8]। छन्दांसि वा। अतितरन्तः शत्रूनिति॥

तं घेम्। तं हैनमित्थं हविष्मन्त उपासते स्वराजम्। वाग्भिरग्निं मनुष्याः प्रज्वलयन्ति अतितरन्तः शत्रून्॥ (७)

[1] Read विश्वमाहूयते.

[2] सु mostly worm-eaten.

[3] Perhaps to read सुवीर्यान् also between सुवीर्या and सुवीर्यौ वा.

[4] Read अपरशब्दः or the reading may be सुवीर्या सुवीर्यौ। अपरशब्दः

[5] Read कालवचनोऽन्तोदात्तः

[6] Folio 30*b* ends with पुरुषपर. The letters श्चेदा in the next leaf partly worm-eaten.

[7] Read उतापरः

[8] Read वषट्कर्तारः

घ्नन्तों वृत्रमंतरन् रोदसी अप उरु क्षयाय चक्रिरे ।
भुवत्कण्वे वृषा द्युम्न्याहुतः क्रन्ददश्वो गविष्टिषु ॥

घ्नन्तः । स्तन्तो[1] वृत्रं वृक्तिं[2] पापं वा । द्यावापृथिवी वपोन्तरिक्षं[3] चाग्निना अतरन्[4] । देवाः उरु क्षयाय चक्रिरे दीर्घकालमात्मनो निवासाय त्रीन् लोकाननुकुर्वन्[5] ।

उरु क्षयाय चक्रिरे सुधानु[6] (ऋ. वे. ७. ६०. ११)

इति समानार्थमिति । सोऽग्निर्भवतु घोरे[7] मयि कण्वे वृषा द्युम्नी दीप्तिमान् । द्युम्नं द्योतदेतर्यशो[8] वान्नं वेति निरुक्तम्[9] । आहुते[10] हविर्भि[11] । क्रन्ददश्वो गविष्टिष्वित्यौपमिकम् । गविष्टयः संग्रामाः । गावो येष्विष्यन्ते[12] तेषु । यथा बलेन क्रन्दन् शब्दं कुर्वन् अश्वः साधकः एवमाहुतोऽयमपीति ॥

[1] Read घ्नन्तो.

[2] What is written is वृत्रमवृक्तिं. But a full म is frequently found written instead of anusvāra. So I conjecture the reading to be this.

[3] After द्यावापृथिवी व there is space for a letter left blank before पो. Perhaps to read द्यावापृथिवी चान्तरिक्षं being the meaning of रोदसी अपः

[4] त completely worm-eaten.

[5] Read लोकानकुर्वन्.

[6] Read सुधातु. What is written is सुधान्विति.

[7] Read घोरे.

[8] Read द्योततेर्यशो.

[9] N. 5. 5.

[10] Read आहुतो.

[11] Read हविर्भिः

[12] य in ये mostly worm-eaten.

घ्नन्तो वृत्रम् । घ्नन्त उपद्रवं अतरन् द्यावापृथिव्यौ अन्तरिक्षं च । विस्तीर्णं निवासाय स्थानं कुर्वन्ति स्तोतारोऽग्नेः । सोऽग्निरद्धुना कण्वे मयि वर्षिता भवतु अन्नवान् आहुतः । गवामन्वेषणेषु क्रन्ददश्वो यथा शब्दायमानोऽश्वो गाः साधयति तद्वत्साधयिता ॥ (८)

**सं सीदस्व महाँ असि शोचस्व देववीतमः ।**
**वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥**

संसीदस्व[1] बर्हिषि । महांस्त्वमसि । दीप्यस्व देवानत्यन्तं[2] कामयमानः । विसृज धूममग्ने अरुषं गन्तारं यज्ञिय प्रशस्त दर्शनीयमिति ॥

सं सीदस्व । संसीदस्व । महानसि । ज्वल अतिशयेन देवान् प्रति गन्ता । विसृज धूममग्ने आरोचमानं यज्ञिय प्रशस्त दर्शनीयम् ॥ (९)

**यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन ।**
**यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥**

यन्त्वा । यन्त्वा[3] देवा दधुदिव[4] आहृत्यास्मिन् लोके प्रजापतये यजिष्ठं हव्यवाहन । यं च कण्वः कण्वपुत्रो मेध्यान्तिथिः[5] । यं च वृषा

[1] There seems to be an anusvāra after सी also. I see a small dot above, meant to delete it. The pratīka is not separately given.

[2] After देवानत्य there is something written. It is a consonant with a य mark following. But the consonant is not at all clear.

[3] In both these cases न्त्वा appears like ह्वा. But it can be made out also as न्त्वा.

[4] Read दधुर्दिव.

[5] Read मेध्यातिथिः

यं चोपस्तुता[1] । संसीदस्वेति पूर्वयर्चान्वयं[2] । द्विविधाः प्रगाथा भवन्ति । एकार्था अनेकार्थाश्च । कैषु[3] द्वयोऋचोराख्यातमस्ति[4] ते भिन्नार्थाः । वाक्यैकबाहवो[5] नान्तर्य[6] त एकार्था भवन्ति । यत्र त्वन्यतरस्यामेवाख्यातं तत[7] एकार्था एव[8] । तथा ।

मा चिदन्यद्वि शंसत (ऋ. वे. ८. १. १)

इति ॥

यं त्वा देवासः । यं त्वां देवा मनवे निदधुः अस्मिन् लोके यष्टृतमं हविषां वोढः । यं च कण्वपुत्रो मेध्यातिथिः धनस्य स्प्रष्टारं निदधे । यं च वृषा । यं वा उपस्तुतः ॥ (१०)

**यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि ।**
**तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ॥**

यमग्निं[9] मेध्यातिथिः कण्वः[10] शतय[11] ऋतादध्याभृत्य[12] । सूर्य

[1] Read चोपस्तुतः The word धनस्पृतम् not commented.

[2] An anusvāra written and deleted at the end. Read पूर्वयर्चान्वयः

[3] Read येषु.

[4] Read द्वयोर्ऋचोराख्यातमस्ति.

[5] Not clear.

[6] Not clear. After नान्तर्य there is a र written and deleted with a dot above.

[7] Only one त is wanted.

[8] The entire statement on this point not quite clear.

[9] Pratika not separately given.

[10] It is not certain if it is an anusvāra or visarga that follows ण्व. Can be made out as visarga also.

[11] Not clear. It is the explanation of ईधे.

[12] Read ऋतादध्याहृत्य.

ऋतम् । अपि वा द्यौ[1] । तस्येषो रश्मयः प्रदीप्यन्ते । इषिः प्रेरणार्थः । तमिमा ऋचो वर्धयन्ति । तं वयं च वर्धयाम इति ॥

यमग्निम् । यमग्निं कण्वपुत्रो मेध्यातिथिर्यज्ञाज्जनयित्वा समीधे तदर्थमेतान्यन्नानि प्रदीप्यन्ते । तथा तमिमा ऋचो वर्धयन्ति । तं वयं च वर्धयामः ॥ (११)

**रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् ।**
**त्वं वाजस्य श्रुत्यस्य राजसि स नो मृळ महाँ असि ॥**

रायः । मुख्यः पादो जागतस्सतोबृहती । हि तथा[2] अग्ने इति चाद्युदात्तम् । अपि च द्वितीयः पादो वरुहेते[3]ऽष्टाक्षरः संपद्यते । धनेन पूरयास्मानन्नवन् । अस्ति हि तेऽग्ने देवेष्वाप्यं सख्यम्[4] । धनवत्स्वपि च त्वमेवान्नस्य श्रोतव्यस्य महत ईशिषे । सोमभ्यं[5] मृळ । महानसि त्वमिति ॥

रायस्पूर्धि । धनेन पूरय अन्नवन् । अस्ति हि ते अग्ने देवेषु धनेश्वरेषु ज्ञातित्वम् । यः त्वमन्नस्य श्रोतव्यस्य ईश्वरो भवसि सः अस्मान् सुखय । महान् भवसि ॥ (१२)

**ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता ।**
**ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥**

[1] Read द्यौः

[2] Read तथा हि instead of हि तथा.

[3] Not clear. Perhaps to read बार्हतो.

[4] स partly worm-eaten.

[5] Read सोऽस्मभ्यं.

ऊर्ध्वः । अयं चाग्नेय एव प्रगाथः । तदीनि हि कीर्त्यन्ते कर्माणि नापोद्धृतश्च प्रातरनुचत् आग्नेयात् क्रतोरविश्च[1] । ऊर्ध्व[2] ऊ षु + + + + + + स्य होतरिति[3] समानदेवतत्वादेव सूक्तमुखे चतुष्कस्य समयो भवति । यत्तु यौप्यत्वं प्रागथस्य[4] शौनकेनोक्तं[5] तत्तु यूपे[6] प्रगाथस्य तस्य विनियोगात्[7] । यूपस्थो[8] वनस्पति[9] + + + यत इति[10] । ऊर्ध्वोऽस्मा-कमवनाय तिष्ठ यथा देवस्सविता प्रातरुत्तिष्ठति । ऊर्ध्वेऽन्नस्य[11] दाता भव । यदा त्वमञ्जद्भिराज्येन वाघद्भिर्यजमानैस्सह विह्वयामहे । यदि हवा[12] ब्राह्मणोक्ताः । छन्दांसि वा अञ्जयो[13] वाघतः[14] इति ॥

[1] The passage from तदीनि corrupt; not clear.

[2] Folio 31*a* ends here.

[3] After ऊ षु one inch in the leaf is completely worm-eaten. The first syllable must have an ए mark, which is decipherable; the consonant is completely gone. This must be ऊर्ध्व ऊ षु णो अध्वरस्य होतः (ऋ. वे. ४. ६. १) इति.

[4] Read प्रगाथस्य.

[5] B. D. has आग्नेयं प्रेति. (३. १०७). But Sarvānukramaṇī has ऊर्ध्व ऊ षु यौपौ.

[6] प partly worm-eaten.

[7] तस्य विनि and त् partly worm-eaten.

[8] प completely and स्थ in स्थो partly worm-eaten.

[9] न स्प completely worm-eaten.

[10] After वनस्पति about 3 syllables completely worm-eaten. They cannot be made out at all. Perhaps to read वनस्पतिरभिष्ठूयत इति. The letter ति in इति missing as the corner of the leaf is broken.

[11] Read ऊर्ध्वोऽन्नस्य.

[12] Not quite clear. Perhaps something is missing.

[13] ज्ञ looks more like ज than ज्ञ.

[14] A. B. 2. 2.

ऊर्ध्व ऊ षु ण । यथा सविता सर्वरक्षार्थं ऊर्ध्वः तिष्ठति एवमस्मद्रक्षार्थं ऊर्ध्वः तिष्ठ । तथा च सन् भवानन्नस्य दाता । यदा वयं आज्येन त्वां अञ्जद्भिः ऋत्विग्भिः विविधं हवामहे ॥ (१३)

**ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।**
**कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥**

ऊर्ध्वः । ऊर्ध्वोऽस्माभि पाहि[1] अंहसः आहन्त्रीन्[2] रक्षसः । केतुना रश्मिना सन्दह च विश्वमन्त्रिणमत्तारं[3] राक्षसम् । कुरु चास्मांश्च-रथाय[4] चरणाय जीवनाय च । लम्भयास्मान् देवेषु धनमिति ॥

ऊर्ध्वो नः । ऊर्ध्वोऽस्मान् रक्षसो निपाहि । तेजसा विश्वं रक्षः संदह । कुरु चास्मान् ऊर्ध्वान् चरणाय जीवनाय च । वेदय देवेषु अस्माकं परिचर्याम् ॥ (१४)

**पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः ।**
**पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ॥**

पाहि । पाह्यस्मानग्ने:[5] रक्षसः । पाहि च हिंसकाददातुः । पाहि च रीषतो[6] न्यूनीकुर्वतोऽपि च ताडयितुमिच्छतो महादीप्तेः[7] ॥

[1] Read ऊर्ध्वोऽस्मान पाहि; or perhaps the following नि is taken over here and we have to read ऊर्ध्वोऽस्मान्निपाहि.

[2] Perhaps to read आहन्तॄन्.

[3] Read विश्वमत्त्रिणमत्तारं.

[4] ऊर्ध्वान् is left out.

[5] Read पाह्यस्मानग्ने.

[6] Read रिषतो.

[7] यविष्ठ्य left out. Read महादीप्ते.

पाहि नो अग्ने। पाह्यस्मानग्ने रक्षसः। पाहि हिंसितुरदातुश्च। पाहि न्यूनीकर्तुः। अपिच ताडयितुर्महादीप्ते युवतम॥ (१९)

घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अस्मध्रुक्।
यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत॥

घनेव। हनो[1] हन्तेन्द्रणघणो[2] भवति[3]। घनेनेय[4] लोष्टि[5] विष्वग्विजह्यदातृत्[6]। तपुर्जम्भ यस्य जंभास्तपन्ति यातुधानात्[7]। जंभा दन्ता दभेश्चेतनार्थात्[8]। दहन्तु[9] रश्मयः। योऽस्मभ्यं द्रुह्यति। परत्र सम्बन्धा[10]। यो मर्त्योऽस्मानक्तुहियायुधैरिति[11]। शिशीते[12] नूकरोति[13]। मा नः रीपुरीशिष्ट[14]॥

[1] Read घनो.

[2] Read हन्तेर्द्रुघणो.

[3] This is not found in the Nirukta.

[4] Read घनेनेव. The letter घ is worm-eaten and looks like प.

[5] Perhaps to read लोष्टं.

[6] Read विष्वग्विजह्यदातृन्. After ह्य a letter, which is not clear, written and deleted with a dot above. Then दा is written.

[7] Read यातुधानान्.

[8] Not clear. The Dhātupāṭha has. जभ (जभी) 1. 415; यभ (जभ) मैथुने (विपरीतमैथुने) 1. 1029; जभि (जभ) नाशने 10. 176; दम्भु दम्भे 5. 23.

[9] Read दहन्ति. The letter न्तु not at all legible. It is not न्ति; it may be ति.

[10] Read सम्बन्धः

[11] Read मर्तोऽस्मानक्तुभिरायुधैरति.

[12] शी and त in ते mostly worm-eaten.

[13] Read तनूकरोति.

[14] Read रिपुरीशिष्ट.

घनेव। यथा तप्तं लोहपिण्डं कार्मारो घनेन विष्वक् हन्ति एवं अदातॄन् सर्वतो जहि तापयितृदंष्ट्र। यो वा अस्मद्‌द्रोग्धा। यो वा अस्मान् मर्त्यः आयुधैरत्यन्तं तनूकरोति। सः मा अस्माकं रिपुः ईशिष्ट ॥ (१६)

**अग्निर्व॑व्ने सु॒वीर्य॑म॒ग्निः कण्वा॑य॒ सौभ॑गम्।**

**अ॒ग्निः प्राव॑न्मि॒त्रोत मेध्या॑तिथिम॒ग्निः सा॒ता उप॑स्तु॒तम् ॥**

अग्निर्वव्ने। अग्निः प्रायच्छत् सुवीर्यम्। अग्निः कण्वाय सौभगं धनं च। अग्निः प्रावच्च मित्राणि। अपिच मेध्यातिथिमग्निः सातौ सङ्ग्रामे उपस्तुतं च ऋषिम्। क्रियाशब्दश्चेदाद्युदात्तः।

उपस्तुता उपमन्नाथमानाः (ऋ. वे. १. ११०. ५)

इति ॥

अग्निर्वव्ने। अग्निः प्रायच्छत् सुवीर्यं धनम। अग्निः कण्वाय सुभगत्वम्। अग्निः प्रावत मित्राणि। अपिच मेध्यातिथिमग्निः सङ्ग्रामे उपस्तुतं च आवत् ॥ (१७)

**अ॒ग्निना॑ तु॒र्वशं॒ यदुं॑ परा॒वत॑ उ॒ग्रादे॑वं हवामहे।**

**अ॒ग्निर्न॑य॒न्नव॑वास्त्वं बृ॒हद्र॑थं तु॒र्वीतिं॒ दस्य॑वे॒ सहः॑ ॥**

अग्निना। अग्निना सह तुर्वशप्रभृतिं तदनुचरान् हवामहे राजऋषीन्[1]। अग्निर्नयतु नववास्त्वादीनपि दस्यवे। सभोनो[2] दस्योर्यो भवतितेति[3]। बृहद्रथो राजर्षौ पूर्वपदप्रकृतिस्वरः।

[1] Read राजर्षीन्.

[2] Read सहोऽन्नो.

[3] Perhaps to read सहोऽन्नं दस्योर्यद्भवतीति or सहोऽन्नं दस्योर्योऽभिभवितेति.

बृहद्रथा बृहतिर्विश्वमिन्वा[1] (ऋ. वे. ५. ८०. २)

इति बहुव्रीहावन्तोदात्त[2] इति ॥

अग्निना तुर्वशम् । अग्निना सह दूरात् तुर्वशं यदुं उग्रदेवं च राजर्षीन् आह्वयामः । अग्निः नववास्त्वादीन् त्रीन् अनयत उपक्षपयितुरभिभविता ॥ (१८)

**नि त्वाम॑ग्ने मनु॑र्दधे ज्योति॒र्जना॑य॒ शश्व॑ते ।**
**दी॒दे॑थ॒ कण्व॑ ऋ॒तजा॑त उक्षि॒तो यं न॑म॒स्यन्ति॑ कृ॒ष्टयः॑ ॥**

नि त्वाम् । निदये[3] त्वामग्ने मनु[4] ज्योतिर्भृतमनेकस्मै[5] जनाम्[6] । स त्यं[7] दीप्यस्व कण्वे मधि[8] ऋताज्जातो हविर्भिरुक्षिता[9] । यं त्वां नमस्यन्ति मनुष्या इति ॥

नि त्वामग्ने । निदधे त्वामग्ने मनुरनेकस्मै जनाय ज्योतिर्भूतम् । संदीप्यस्व कण्वे मयि यज्ञाज्जातो हविर्भिरुक्षितः । यं त्वां नमस्यन्ति मनुष्याः ॥ (१९)

[1] Read बृहती विश्वमिन्वा.

[2] हुव्री partly worm-eaten.

[3] Read निदधे.

[4] Read मनुः

[5] Between ज्योतिर्भृ and ने the two letters are not legible. तम only a conjecture. They seem to have been scored. Read ज्योतिर्भूतमनेकस्मै.

[6] Read जनाय.

[7] Read स त्वं.

[8] Read मयि.

[9] Read हविर्भिरुक्षितः The letter ह partly worm-eaten.

कारिरा
इति ।

ं अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये ।
नः सदमिद्यातुमावतो विश्वं समत्रिणं दह ॥

षासः । दीप्ता अग्ने बलवन्तो अर्चया[1] भिमा[2] न प्रत्येतुं रक्षस्वनो[3] बलिनालीनस्सदैव[4] यातुनावतो[5] यातुधानात् । ींयः पूरकः । सन्दह तथा विश्वःत्रिणमिति[6] ॥

स्थिर
करण

ासः । दीप्ता अग्ने बलवन्तोऽर्चयो भयंकराः न प्रतिगमनाय । रक्षो- ृभिर्युक्तात् सदैव यातुमावतः यो मत्सदृशस्त्वां उपगच्छति तस्माद्विश्वं इति ॥ (२०)

---

तदा
प्रारब्ध

क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् ।
कण्वा अभि प्र गायत ॥

ीळम् । क्रीळतिः परिगमनार्थे । वो न इति सार्वविभक्तिके क्त्यनुक्रमण्यां[7] उक्तम् । क्रीडमानम् । यूयन्नद्धो[8] मारुतम्[9] ।

वर

ad अर्चयः
ad भीमा.
ad रक्षस्विनो.
ad बलिनस्सदैव.
ad यातुमावतो. Folio 31*b* ends with या.
ad विश्वमत्रिणमिति. Here there is no figure to mark the end cta.
s is the fifth of the 12 Anukramaṇis of the author. Cf. p. 168.
d यूयं शर्धो.
आ mark in मा lost as the edge of the leaf is broken.

शर्धो[1] वेगः शर्धतेराहननार्थात्[2] । अनर्वाणं प्रत्यृमतमन्यस्मिन्नृथेशुभं[3] नोभमानम्[4] । कण्वा अभि प्रायत ॥

क्रीळं वः शर्धः । क्रीळमानं यूयं मरुतां वेगं अप्रत्यृतमन्यस्मिन् । रथे यश्शोभते तं कण्वा अभिप्रगायत ॥ (१)

**ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः ।**
**अजायन्त स्वभानवः ॥**

ये[6] पृषतीहिरश्वाभिः[7] पृद्भिर्युक्ता मृग्यः । ताभिः । ऋषिभिश्वासंस्थितैरायुधैः[8] । ऋष्टयः आयुधविशेषाः । अर्षति[9] प्रेरणार्थः । साकण्वाशीभिरजिभिरलंकरणैः[10] । प्रसाधनमिति[11] । अजायन्त प्रादुरनभवत्[12] । स्वेनैव भासमानाः स्वभूतभानवो वा । ह्यश्च[13] कानिचिदायुधानि वाशेस्तत्क्षणार्थात्[14] । अञ्जयोऽलंकरणानि ॥

[1] र्ध portion in र्धो mostly worm-eaten.

[2] रा is completely lost as the corner of the leaf is broken. There is a small bit remaining, which looks like a part of the आ mark following a consonant. The reading is only a conjecture.

[3] Read प्रत्यृतमन्यस्मिन् । रथेशुभं.

[4] Add रथे before नोभमानम्, which read शोभमानम्.

[5] Read प्रगायत.

[6] The pratika not separately given.

[7] Read पृषतीभिरश्वाभिः

[8] Read ऋष्टिभिश्वांसस्थितैरायुधैः

[9] Read अर्षतिः

[10] Read साकं वाशीभिरञ्जिभिरलंकरणैः

[11] This not wanted. (See note 5 on p. 290.)

[12] Read प्रादुरभवन्.

[13] Read वाश्यः instead of ह्यश्च.

[14] In the Dhātupāṭha there is only वाशृ शब्दे (4. 54). Read वाशेस्तक्षणार्थात्.

ये पृषतीभिः । ये पृषद्वर्णैरश्वैर्ऋष्टिमिश्वांसस्थैः साकं वाशीभिश्च कटहाकारैरायुधैराभरणैश्च अञ्जनसाधनैः सह प्रादुर्भवन्ति स्वदीप्तयः । तेषां शर्ध इति ॥ (२)

इहेवं शृण्व एषां कशा हस्तेषु यद्वदान् ।

नि यामश्चित्रमृञ्जते ॥

इहैव[1] । इहैवेदानीं[2] श्रूयते एषां कशाशब्दाः यदामीषां हस्तेषु स्थिता कशा अश्वाजन्यो वदन्ति । नि यामं चित्रभ्रजते[3] । न्यजनमलंकरणं[4] प्रसाधनमिति[5] ॥

इहेव शृण्वे । यदामी गमनप्रारम्भे हस्तस्था वादयन्त्यश्वाजिनीः तदानीं समीपस्थितानामिव कशानामाहननशब्दः श्रूयते । किं च एते गमनप्रारम्भे प्रसाधनमात्मनः चित्रं कुर्वन्ति ॥ (३)

प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे ।

देवत्तं ब्रह्म गायत ॥

प्रवः । प्रगायत यूयं शर्धाय मारुताय घर्षणनीलाय[6] दीप्तयशसे बलवते देवदत्तं ब्रह्म । देवेभ्यो यद्दीयते तद्देवत्तमिति ॥

[1] इ completely worm-eaten. The first ए mark in है is partly worm-eaten. Read इहेव.

[2] Read इहेवेदानीं.

[3] Read चित्रमृञ्जते.

[4] Read न्यञ्जनमलंकरणं.

[5] Evidently it is this that has unnecessarily crept into the commentary of the previous stanza also. See note 11 on p. 289.

[6] Read घर्षणशीलाय. The letter ला mostly worm-eaten.

प्र वः शर्धाय । प्रगायत यूयं वेगवते वृक्षादीनां धर्षणं कुर्वते दीप्तयशसे बलवते मारुताय देवदत्तं गार्ग्यल्लिब्धम् ॥ (४)

प्र शं॑सा॒ गोष्व॒घ्न्यं॑ क्री॒ळं यच्छर्धो॒ मारु॑तम् ।
जम्भे॒ रस॑स्य वावृधे ॥

प्रशंस । स्तुभि[1] गोषु जातं हन्तुमशक्यं क्रीडं क्रीळं[2] यच्छर्धो मारुतं तद्रसस्य गवां पयसो जंहे[3] वावृधे । जंभमत्रोदकं[4] मन्यत[5] इति ॥

प्र शंस । प्रस्तुहि गोषु स्थितमहन्तव्यं क्रीळमानं यच्छर्धो मारुतं तद्रसस्य पयसोऽन्तर्वावृधे । जम्भशब्द उदरवचनः । पृश्निर्यैर्वै पयसो मरुतो जाताः इति ब्राह्मणम् ॥ (५)

को वो॒ वर्षि॑ष्ठ॒ आ न॑रो दि॒वश्च॒ ग्मश्च॑ धूतयः ।
यत्सी॒मन्तं॒ न धू॑नु॒थ ॥

क्रोधः[6] । आकारः प्रश्नं स्फुटीकरोति । को वो वर्षिमृतमो[7] नेतारो द्यावापृथिव्योः कम्पयितारः । ग्मा भूर्गमनादिति । यदिमे अन्तमभ्रमिव[8] वृक्षादीनामनायासेन धूनुथ ॥

[1] Read स्तुहि.
[2] It ought to be क्रीळं क्रीडमानं.
[3] Read जम्भे.
[4] Read जंभमत्रोदरं.
[5] It looks as if something is missing. May be that the commentator wanted अन्यत्र or some such thing.
[6] Read को वः
[7] Read वर्षितृतमो.
[8] भ्रमि mostly worm-eaten and cannot be deciphered. Only a conjecture.

को वो वर्षिष्ठः। यदा मरुतः समीपमिव सर्वमेव परिगृह्य कम्पयथ तदानीं मरुतो युष्माकं को वर्षितृतमो दिवश्च पृथिव्याश्च कम्पयितारः। आकारः पूरणः॥ (६)

**नि वो यामा॑य॒ मानु॑षो द॒ध्र उ॒ग्राय॑ म॒न्यवे॑।**

**जिही॑त॒ पर्व॑तो गि॒रिः॥**

नि वः। निदध्रे स्थूणादिकं दृढं भूम्यं[1] युष्माकं यामाय भीतो यामाद्भीतो[2] योऽयं उद्गूर्णोऽभिमन्यतेऽवस्थितान्। अपिच[3] यस्मिन् यामनि स्वस्मात् स्थानाच्चलति पर्ववान् गिरः[4]। गिरिशते समुद्गीर्णो भृत्येति[5]॥

नि वो यामाय। निदध्रे स्थूणादिकं युष्माकं गमनाय उद्गूर्णाय अभिमन्त्रे। स्थूणादिकं दृढं निहन्ति मानुषः पर्ववान् गिरिश्च कम्पते॥ (७)

**येषा॒मज्मे॑षु पृथि॒वी जु॑जु॒र्वाँ इ॑व वि॒श्पतिः॑।**

**भि॒या यामे॑षु॒ रेज॑ते॥**

येषाम्। येषामुत्क्षेपकेषु यामेषु पृथिवी स्तीर्णेऽयं[6] जीर्ण इव

[1] Read भूम्यां

[2] भीतो यामाद्भीतो not clear.

[3] First written वस्थिते ननपि च. Then the ए mark in ते crossed and the first न after त converted into आ mark, so that we have वस्थितानपि च.

[4] Read गिरिः

[5] This must be the quotation fron Nirukta गिरिः पर्वतः समुद्गीर्णो भवति (नि. १. २०). Or Perhaps to read गिरिर्गृणातेः समुद्गीर्णो भवति इति.

[6] Read विस्तीर्णेयं.

विश्पतिः नृपतिः[1] चरैरभिभूयमानो[2] भयेन कम्पते । परयान्वयः इति ॥

येषामज्मेषु । येषामुत्क्षेपकेषु गमनेषु पृथिवी ओषधिवनस्पतियुक्ता जीर्णो राजा इव परबलागमने कम्पते भिया । पूर्वत्र संबन्धः ॥ (८)

स्थिरं हि जानमेषां वयो मातुर्निरेतवे ।
यत्सीमनु द्विता शवः ॥

स्थिरम् । यतोऽमी जातस्तन्दन्दानं चस्तत्[3] स्थिरं हि भवति ।

वेद जानमेषाम् (ऋ. वे. ५. ५३. १)

इति । वयः पक्षिणश्चामी मातुरन्तरिक्षाज्जाताः सर्वदा निर्गन्तुः[4] । किञ्च यदिदं सर्वतो[5] भवति अनुव्याप्नोति[6] तदेषां शवश्च द्विधा या[7] वर्तते दिवि च भूम्यां चेति ॥

[1] What is written appears to be विश्पतिन्नृप rather than विश्पतिर्नृप. With this the line ends. The corner of the leaf is broken and one letter in the next line is gone. I conjecture it to be तिः

[2] च is clear. भिभूयमानो is also clear. In between the letters are worm-eaten completely. There is space only for three marks, which may be ए mark, र and र or two ए marks and र. So what is written must be चेररभिभूयमानो or चैरभिभूयमानो. Read परैरभिभूयमानो.

[3] Read जातास्तज्जानम् । तत.

[4] Read निर्गन्तुम्.

[5] Folio 32*a* ends with सर्व. The corner of the page is broken and the beginning of the line is gone. सर्वतो only a conjecture.

[6] After भवति a few letters completely worm-eaten. प्नोति is clear. The ए mark before this can just be made out. The letter before this is a conjunct consonant with य as second member. अनुव्याप्नोति is only a conjecture.

[7] या not wanted.

स्थिरं हि । स्थिरं हि जन्म मरुतां वयश्च मातुर्निर्गमनाय न पुनः जननाय मातरं प्रविशति । यच्चैषां सर्वं जगदनुभवति तद्बलं द्विधा भवति दिवि च पृथिव्यां च इति ॥ (९)

**उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत ।**

**वाश्रा अभिज्ञु यातवे ॥**

उदुत्ये । उदुत्तता मिविदता[1] अकुर्वन् । गिरो माध्यमिका या वाचः पुत्राः । काष्ठा अपो ज्येष्ठ गमनेषु[2] । वाश्रा धेनश्चाहिगतजानुकं[3] तृणोत्पादम् । तेन यातुमकुर्वन्[4] । सञ्चारयन्ति गा इति ॥

उदु त्ये । उदत्नत उन्नता अकुर्वन् विस्तीर्णौषधीरकुर्वन् अमी प्रेरितारः शब्दायन्तो दिशो गमनेषु यदा गच्छन्त्योषधीभिः विस्तारयन्ति दिश इति । तथा धेनूश्च अभिगतजानुकं यातुमकुर्वन् । ओषधीसद्भावादुत्क्षिप्तपादाश्चरन्ति धेनव इति ॥ (१०)

**त्यं चिद्धा दीर्घं पृथुं मिहो नपातममृध्रम् ।**

**प्र च्यावयन्ति यामभिः ॥**

त्यञ्चित् । त्यञ्चिदपि दीर्घं पृथुं मिहो नपातं शुष्णं मेघरूपमहिंसितं परैः प्रच्यावयन्ति यामभिरायुधैः स्वगमनैर्व्या[5] ।

मिहो रनपातं सुप्रथं[6] तमोगाम् (ऋ. वे. ५. ३२. ४)

इति ॥

[1] Read उदत्नत दिवि तता.
[2] Read अपोऽज्मेषु गमनेषु.
[3] Read धेनूश्चाभिगतजानुकं. The letters श्चाहि mostly worm-eaten.
[4] तु mostly worm-eaten.
[5] Read स्वगमनैर्वा.
[6] Read मिहो नपातं सुवृधं.

त्यं चिद्घ । त्यं चित् खलु दीर्घं विस्तीर्णं मेघस्य पुत्रं अमृदुं गमनैः प्रच्याव्यन्ति मरुतः । इदं शिलोच्चयाभिप्रायमिति ॥ (११)

**मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन ।**
**गिरीँरचुच्यवीतन ॥**

मरुतः । मरुतो यद्ध वो[1] बलं भवति तेन जनं[2] तेनैव ते[3] प्रापयथ । तेनैव गिरींश्चाच्युच्यविनतेति[4] ॥

मरुतो यद्ध वः । मरुतो यद्वो बलं तज्जनांश्च्यावयति । तच्छिलोच्चयानपि च्यावयति ॥ (१२)

**यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना ।**
**शृणोति कश्चिदेषाम् ॥**

यद्ध । यदा खलु यान्ति मरुतस्तदानीं स ह[5] ब्रुवतेऽध्वनि सह शब्दं कुर्वन्ति । शृणोति कश्चिदप्येतेषाम् । तं शब्दं सर्वो जन[6] शृणोतीत्यर्थ इति ॥

यद्ध यान्ति । यदा खलु यान्ति मरुतः तदानीं मार्गेऽमी सह शब्दं कुर्वन्ति । तं शब्दमेषां कश्चिदपि शृणोति । सर्वो जन आगोपालं शृणोति ॥ (१३)

[1] द्ध missing in the MS. Between य and वो there is space left blank for a letter.
[2] Read जनान्.
[3] तेन not wanted twice. The word ते too seems unwanted.
[4] Read गिरींश्चाचुच्यवीतनेति.
[5] Read सं ह. Or was सह his reading?
[6] Read जनः

प्र या॑त॒ शीभ॑मा॒शुभिः॒ सन्ति॒ कण्वे॑षु वो॒ दुवः॑ ।
तत्रो॒ षु मा॑दयाध्वै ॥

प्र यात । प्रयात शीघ्रमश्वैः । सन्ति कण्वेषु युष्माकं परिचर्याः । तत्रैव कण्वेषु शदु[1] मदत ॥

प्र यात । उद्युक्ता भवत क्षिप्रं शीघ्रैरश्वैः । सन्ति कण्वेषु वः परिचर्याः । तत्र सुष्ठु मदत ॥ (१४)

अस्ति॒ हि ष्मा॒ मदा॑य वः॒ स्मसि॑ ष्मा व॒यमे॑षाम् ।
विश्वं॑ चि॒दायु॑र्जी॒वसे॑ ॥

अस्ति हि । अस्ति हि सुमदाय युष्माकमिदं सूक्तम् । अपि वा स्मसि स्म सो[2] वयं[3] चैषां भवतामश्विमप्यायुः[4] जीवितुमिति[5] ॥

अस्ति हि ष्म । अस्ति हि मदाय वः अस्मासु स्तोत्रम् । तथैषां स्तोतारो वयं परिपूर्णमायुर्जीवितुं भवामः ॥ (१५)

---

[1] Read सुष्ठु.

[2] सो seems not wanted.

[3] व partly worm-eaten.

[4] Read भवतां विश्वमप्यायुः

[5] Here there is the figure 5 to mark the end of the Sūkta.

**कद्धं नूनं कधप्रियः पिता पुत्रं न हस्तयोः ।**
**दधिध्वे वृक्तबर्हिषः ॥**

कर्ध[1] । कदा खलु स्तोत्रंप्रीताः[2] पिता पुत्रमिव हस्तयोरस्मान् दधिध्वे यज्ञाय वृक्तबर्हिषो यष्टव्या इति ॥

कद्ध नूनम् । सुखं पुरा स्तोत्रप्रीताः पिता पुत्रमिव हस्तयोरस्मान् दधिध्वे यज्ञार्थं छिन्नबर्हिषो मरुतः ॥ (१)

**क्व नूनं कद्वो अर्थं गन्ता दिवो न पृथिव्याः ।**
**क्व वो गावो न रण्यन्ति ॥**

क्व नूनम् । क्व संप्रति यूयं स्थ । कदा च वोऽर्थं गमनम् । अर्थोऽर्तेः । गन्ता दिवोऽस्मान् प्रति । पृथिव्या गताश्च[3] न पृथिव्या गच्छत । क्व च युष्मान् गा इव रमन्ति ॥

क्व नूनम् । क्व सम्प्रति यूयं स्थ । क्व वो गमनं भवति । गच्छत द्युलोकात् । इहागताश्च न गच्छत पृथिव्याः । क्व युष्मान् पशूनिव रमयन्ति ॥ (२)

**क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता ।**
**क्वो३ विश्वानि सौभगा ॥**

[1] Read कद्ध.

[2] Read स्तोत्रप्रीताः

[3] Perhaps to read पृथिव्यां आगताश्च.

क्व वः । क्व वस्सुम्नानि नवतराणि । सुम्नं सुमे सुम्नाते[1] । प्रजा वै पशवः सुम्नम् (तै. ब्रा. ३. ३. ९९) इति ब्राह्मणम् । मरुतः क्व सुविता सुविता[2] शोभनानि प्राप्यानि । सुवितं स्वेतेः ।

पुरस्मभ्यं[3] सुविताय देव (ऋ. वे. १. १८०. ९. ३)

अथापि सौतेः सुवितो भवति[4] ॥

सुवित स्तोमं सुवितो दिवं गाः (ऋ. वे. १०. ५६. ३)

इति । अत्र निरुक्तम् । सुविते सूते सुगते[5] प्रजायामिति वा । सुपिते[6] मा या[7] इत्यपि निगमो[8] भवति इति[9] । क्व च वो विश्वानि[10] सौभगानि ॥

क्व वः सुम्ना । क्व वः सुखानि नवतराणि मरुतः । क्व वा शोभनगमनानि कल्याणानि । अत्र यास्कः—सुविते सु इते सूते सुगते प्रजायां इति वा इति । क्व वा वः सर्वाण्येव सौभगानि ॥ (३)

[1] Perhaps to read सुम्नं सुखं सुम्नाते:

[2] Repetition not wanted.

[3] Read पुनरस्मभ्यं.

[4] Under व there is an anusvāra. Perhaps the scribe भवंति. The passage not quite clear.

[5] Written सूगते. Then the tail of the ऊ mark struck off and सु remains.

[6] Read सुविते.

[7] Read धा: The letter या slightly worm-eaten. But it is decidedly या and not धा.

[8] T. S. 1. 2. 10. 2.

[9] The passage in nirukta is: सुविते सु इते सूते सुगते प्रजायामिति वा। सुविते मा धा: इत्यपि निगमो भवति. (नि. ४. १७). The expression अत्र निरुक्तम् suggests that this Nirukta passage is on सुवित स्तोमं etc. But that mantra does not occur in the Nirukta.

[10] नि slightly worm-eaten.

यद्यूयं पृश्निमातरो मर्तासः स्यातन ।
स्तोता वो अमृतः स्यात् ॥

यद्यूयम् । यद्यपि यूयं[1] पृश्निमान्तरो[2] मर्ता भवथ । मर्तत्वं मरुतां कदाचित् प्रादुर्भवन्ति कदाचित्तिरोभवन्तीति[3] । यदि वा मरुतामपि मर्त्यत्वभ्रभृणामिवास्तीति[4] चेदादवगन्तव्यम्[5] । अथापि वः स्तोतामृत एव स्यादिति[6] ॥

यद्यूयम् । यद्यपि यूयं पृश्निमातरो मर्ता भवथ तथापि युष्माकं स्तोता भवति अमृत इति ॥ (४)

मा वो मृगो न यवसे जरिता भूदजोष्यः ।
पथा यमस्य गादुप ॥

मा वः[7] । भृगो भृगयतेः । भर्गे[8] मार्गेष्टर्गतिकर्मण इति यास्कः[9] ।

[1] यं completely worm-eaten.

[2] Read पृश्निमातरो.

[3] What is usually found is that the Maruts, once mortals, became immortal. This is the first time that their occasional mortality and immortality in turns is met with. Read प्रादुर्भवति and तिरोभवति instead of the plural.

[4] After पि some letter written and completely scored off. Then मर्त्यत्व begins. Read मर्त्यत्वमभ्रूणामिवास्तीति.

[5] Read वेदादवगन्तव्यम्.

[6] Folio *32b* ends with स्या.

[7] Pratika not separately given.

[8] This word mostly worm-eaten. Only a conjecture from what remains.

[9] Cf. मृगो मार्ष्टेर्गतिकर्मणः (नि. १. २०). I have copied the passage exactly as it is in the MS. from भृगो.

यथा भृगो[1] यवसे सस्ये निरोधाय[2] कर्षकैरेवं माभूज्जरिता युष्टानसेवनीय:[3] । मा च यमस्य पथोपगात् मा गा मृत्युमिति[4] ॥

मा वो मृगः । मा भूद्युष्माकं मृग इव यवसे स्तोता असेव्यः । मा चोपगमद्यमस्य पथा मोपगच्छतु मृतो वैवस्वतस्य पथा इति ॥ (९)

मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् ।
पदीष्ट तृष्णया सह ॥

मो षु णः । मैवास्मान् परा[5] । निऋतिरवत्ति निवर्तेन्निरमयतीति यास्क:[6] । दुर्हृणा हन्तुमसुशका[7] । वधीत् । पतनु[8] सा तृष्णया सहा[9] । तृष्णा चास्माकं पततु । पदिः पतिना समानार्थ इति ॥

मो षु णः । मैवास्मान् अधोधो दुःखेन हन्तव्यं दारिद्र्यं वधीत् । सा निर्ऋतिर्मदीयया तृष्णया सह पततु । धनसद्भावे हि तृष्णा विनश्यति ॥ (६)

[1] Read मृगो.

[2] आ mark in धा worm-eaten.

[3] Read युष्मानसेवनीय:

[4] It looks as though what is written is मागान्मृत्युमिति or मागाम्मृत्यु मिति.

[5] The leaf is badly worm-eaten from मो षु. But the letters can be made out. After प the corner is broken. I guess that रा must have been broken off. In the text there is परापरा. Here there is no space for that. The next line begins निऋति.

[6] Passage not clear. What Yāska says is निर्ऋतिर्निरमणात् (नि. २.७).

[7] Perhaps to read हन्तुमशक्या.

[8] Read पततु.

[9] Read सह.

**सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः ।**
**मिहं कृण्वन्त्यवाताम् ॥**

सत्यम् । सत्यं दीप्ता बलवन्तो निरुदके देशे रुद्रपुत्रा वृष्टिं कुर्वन्ति वातवर्जिताम् । महतीमनिवाते त्वभिवर्षतु इति यजुः[1] ।

न भृष्यन्ते[2] युवतयोऽवाताः (ऋ. वे. ६. ६७. ७)

इति तत्पुरुष इति ॥

सत्यं त्वेषाः । सत्यं दीप्ता बलवन्तो निरुदकेऽपि देशे रुद्रपुत्रा वृष्टिं कुर्वन्ति निरन्तरम् ॥ (७)

**वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति ॥**
**यदेषां वृष्टिरसर्जि ॥**

वाश्रेव । धेनुरिव विद्योतमाना माध्यमिका गौः शब्दं कुरुते । वत्समिव माता धेनुः विद्युन्मरुतः सैवते[3] । यदैभिर्वृष्टिः सृज्यत इति ॥

वाश्रेव । अभिनवप्रसूता धेनुरिव विद्युत् गर्जितशब्दं करोति । वत्समिव माता सचते लोकम् । यदैभिर्मरुद्भिर्वृष्टिः सृज्यते ॥ (८)

**दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन ।**
**यत्पृथिवीं व्युन्दन्ति ॥**

[1] Not traced.
[2] Read मृष्यन्ते.
[3] Perhaps to read सेवते.

दिवा चित् । अवहि[1] चान्धकारं कुर्वन्ति पर्जन्येनोदवाहेन यदा पृथिवीं केधन्ति[2] ॥

दिवा चित् । अह्न्यप्यन्धकारं कुर्वन्ति पर्जन्येनोदकवाहेन । यथा पृथिवीं क्लेदयन्ति ॥ (९)

**अधं स्वनान्मरुतां विश्वमा सद्म पार्थिवम् ।**
**अरेजन्त प्र मानुषाः ॥**

अध । अधाथौ समानार्थौ निर्दिष्टाया पा[3] निर्दिश्यमानाया वा क्रियाया आनन्तर्यं ब्रूतः । ततश्च स्विनादनन्तरं[4] इत्यर्थो भवति[5] । स्वेन-र्द्दानदनन्तरं[6] मरुतां विश्व ग्रहं[7] भूमिषुकं[8] प्रकंपते । तथा नुषाश्चेति[9] ॥

अध स्वनात् । अनन्तरं मरुतां स्वनात् पार्थिवं विश्वं सद्म अरेजत अकम्पत । सीदन्त्यस्मिन्निति सद्म गृहम् । प्रकर्षेण मानुषाश्च अरेजन्त ॥ (१०)

**मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु ।**
**यातेमखिद्रयामभिः ॥**

[1] Read अह्नि.
[2] Read क्लेदयन्ति.
[3] Read वा.
[4] Read स्वनादनन्तरं.
[5] भ completely worm-eaten.
[6] Perhaps to read only स्वनादनन्तरं.
[7] Read विश्वं गृहं.
[8] भू completely worm-eaten. Only a conjecture. Read भूमिष्ठं.
[9] Read तथा मानुषाश्चेति.

मरुतः । मरुतो दृढैः पाणिभिः सहिताः ।

रक्षोहणा संभृता वीळुपाणी (ऋ. वे. ७. ७३. ४)

इति बहुव्रीहिः । चित्रा नदीरनु । तत्समीप इत्यर्थः । यात यूपमिवेः रभि-रखिद्रयामभिरच्छिन्नैर्गमनैः[1] । खिदिश्च छदीकरणार्थः ।

समित्तान् वृत्रहाखिदत् (ऋ. वे. ८. ७७. ३)

इति ॥

मरुतो वीळुपाणिभिः । मरुतो दृढैः पाणिभिः सह चित्रा नदीर्लक्षीकृत्य ताः पूरयितुं यात अच्छिद्रैर्गमनैः ॥ (११)

**स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् ।**
**सुसंस्कृता अभीशवः ॥**

स्थिता वरा[2] । स्थिरा वः सन्तु रथनेमयः । अथ परोक्ष[3] । रथा अश्वास एषाम् । सुसंस्कृतता[4] भवन्त्वभीशवश्च । अभीशवो यैनश्वान-भिशते[5] । अपि वा शयतेर्गतिकर्मणः । यैरश्वानहिनयन्तीति[6] । यास्कस्तु अभीशवोऽह्यश्नोतेः[7] इति ॥

[1] Read यात यूयमेभिरखिद्रयामभिर[च्छि]न्नैर्गमनैः
[2] Read स्थिरा वः
[3] Read परोक्षः
[4] Read सुसंस्कृता.
[5] Read यैरश्वानभीशते.
[6] Read यैरश्वानभिनयन्तीति.
[7] Read अभीशवोऽभ्यश्नोतेः Cf. अभीशवोऽभ्यश्नुवते कर्माणि. (नि. ३. ९).

स्थिरा वः सन्तु । आगच्छतां भवतां रथनेमयः स्थिराः सन्तु । अथ परोक्षः । रथा अश्वाश्चैषां स्थिराः सन्तु । सुसंस्कृताश्च अश्वप्रग्रहा भवन्तु ॥ (१२)

**अच्छा वद तना गिरा जरायै ब्रह्मणस्पतिम् ।**
**अग्निं मित्रं न दर्शतम् ॥**

अच्छ । वद तया गिरा । दुहिता चाद्युदात्ता[1] भवति ।

दक्षस्य पितरन्नना[2] (ऋ. वे. ३. २७. ९)

इति । रश्मिश्चेदन्तोदात्तो भवति ।

एतं मे स्तोमं तना (ऋ. वे. १०. ९३. १२)

इति । स्तोतुं ब्रह्मणोऽन्नस्य पतिम् । मरुतद्गणः[3] । तेन सहितमग्निं मित्रं च[4] दर्शनीयमिति ॥

अच्छा वद । अभिवद तया गिरा स्तोतुं ब्रह्मणस्पतिं अग्निं मित्रमिव च दर्शनीयं मारुतं गणम् ॥ (१३)

**मिमीहि श्लोकमास्ये पर्जन्य इव ततनः ।**
**गाय गायत्रमुक्थ्यम् ॥**

[1] Read चेदाद्युदात्तो.
[2] Read पितरन्तना.
[3] Perhaps to read मरुतां गणम् .
[4] The text has मित्रं न.

मिमीहि। कुरु प्रथमं श्लोकमास्ये। श्लोकयतिः स्तुत्यर्थः। शृणातेः[1] श्लोक इति यास्कः[2]। निम्मितं[3] च श्लोकं पर्जन्य इव वृष्टिं ततनः। तथा गाय गायत्रमुक्थार्हमिति ॥

मिमीहि श्लोकम्। निर्मिमीहि पूर्वं श्लोकमास्ये। अथ तं पर्जन्य इव वृष्टिं विस्तारय। गाय गायत्रं च साम उक्थार्हं स्तोतः ॥ (१४)

**वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम्।**
**अस्मे वृद्धा असन्निह ॥**

वन्दस्व। स्तुहि मारुतं गण[4]। दीप्तं शब्दवन्तं[5] अर्किणं स्तुतिमन्नं[6] अस्माकमिह वृद्धा मरुत इति[7] ॥

वन्दस्व मारुतम्। स्तुहि मारुतं गणं दीप्तं स्तुतिकामं शब्दवन्तम्। अस्मासु भवन्तु प्रवृद्धा इह मरुतः ॥ (१५)

---

[1] Read शृणोतेः

[2] N. 9. 9.

[3] Read निर्मितं. In the MS. there are only two म letters without a dot between.

[4] Read गणम्.

[5] Folio 33*a* ends with शब्द.

[6] Read स्तुतिमन्तं.

[7] Here there is the figure 6 to mark the end of the Sūkta.

**प्र यदि॒त्था प॑रा॒वतः॑ शो॒चिर्न मान॒मस्य॑थ ।**
**कस्य॒ क्रत्वा॑ मरुतः॒ कस्य॒ वर्प॑सा॒ कं या॑थ॒ कं ह॑ धूतयः ॥**

प्र यन्[1] । प्रास्यथामुतोऽन्तरिक्षात् तेज इव यदा मननीयं शर्धः तदानीं कस्य कर्मणा संगच्छथेति शेषः । कस्य वर्पसा[2] । वर्पः[3] स्तोत्रम् । वृणोतेः । कं च जनं[4] याथ । कं च जनं प्राप्नुतेति शेषः । कं याथ कं भ गच्छथ[5] इति च अष्टम्[6] । धूतय इत्यामन्त्रणं स्थिराणां कंपयितार इति ॥

प्र यदित्था । प्रास्यथ इत्थं मरुतो दूरात् यत्तेज इवात्मीयं शब्दम् । तत् कस्य कर्मणा मरुतः । केन वा वेष्टिताः । कं च देशं यूयं याथ । कं वा तत्र पुरुषं हे कम्पयितारः ॥ (१)

**स्थि॒रा वः॑ स॒न्त्वायु॑धा परा॒णुदे॑ वी॒ळू उ॒त प्र॑ति॒ष्कभे॑ ।**
**यु॒ष्माक॑मस्तु॒ तवि॑षी॒ पनी॑यसी॒ मा मर्त्य॑स्य मा॒यिनः॑ ॥**

[1] Read प्र यत्.

[2] र्प is written प with a small crescent mark above.

[3] Here र्प is written प with a dot above.

[4] स्तोत्रं वृ is in tact. After that, जनं is quite clear, though slightly worm-eaten. The ए mark and ण in णो completely worm-eaten; also त in ते and कं च. Reading only a conjecture.

[5] After याथ कं and before भ गच्छथ the scribe has by mistake written the following, which should really come after उत प्रतिष्कं in the commentary of the next verse: भे किञ्च तानि वीळूनि सपत्नानां प्रतिष्कंभनाय भवन्तु युष्माकं बलमस्तु स्तोतव्यमुपबृंहकर्मा मर्त्यस्य मायावत इति पराभयत् । Read कं ह गच्छथ instead of कं भ गच्छथ. See note 4 on p. 307.

[6] Read स्पष्टम्.

स्थिरा । स्थाणि[1] युष्माकं सन्त्वायुधानि शत्रून्[2] प्रति पराणुदे निरसनाय । विन्द्रे[3] उत प्रतिष्कंभे[4] । किं च तानि वीळूति सपत्नानां प्रतिष्कंभनाय भवन्तु । युष्माकं बलमस्तु स्तोतव्यम् । उपबृंहकर्मा[5] मर्त्यस्य मायावत इति ॥

स्थिराः । स्थिराणि युष्माकं सन्त्वायुधानि शत्रूणां प्रेरणाय । अपि च दृढं च प्रतिष्कम्भितुं युष्माकमस्तु बलमपि अतिशयेन स्तोतव्यम् । मा मायावतो मर्त्यस्य अयजमानस्य ॥ (२)

**परा ह यत्स्थिरं हथ नरो वर्तयथा गुरु ।**
**वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम् ॥**

परा भ[6] यत्[7] । पराहथ यथा[8] स्थिरं नरो वर्तयथ प्रेरयथ च गुरु । तदानीं विधथन[9] मध्येन्न[10] गच्छतथ[11] वनवतो वृक्षान् पृथिव्याः स्वभूतान् ।

[1] Read स्थिराणि.

[2] The ऊ mark and न् in त्रून् and प्रति mostly worm-eaten; very difficult to decipher.

[3] Read वीळु.

[4] The portion from भे written by mistake between कं याथ कं and भ गच्छथ in the commentary on the previous verse. See note 5 on p. 306. Read प्रतिष्कभे.

[5] Evidently something left out. Or perhaps this is in the etymology of पनीयसी and read स्तोतव्यं उपबृंहकम् । मा मर्त्यस्य etc.

[6] Read ह.

[7] Here ends the portion written by mistake in the commentary on a previous verse. See note 4 above.

[8] Read यदा.

[9] Read वियाथन.

[10] Read मध्येन.

[11] Read गच्छथ.

पि[1] याथन चाशाः पर्वतानाम्। आशाः शाखाः आशेरथाते[2]। पर्वताः वृक्षाः[3] पर्ववन्त इति। यद्वा शिलोच्चयानां पर्यन्ता आशाः।

प्र वेपयन्ति पर्वतान् (ऋ. वे. १. ३९. ५)[4]

इति॥

परा ह। पराहथ यदा स्थिरं पर्वतादिकं वा नरो गुरुभारमपि शिलादिकं तृणमिव चलयथ तदा पृथिव्या वृक्षान् मध्येन गच्छथ। तथोपरि च पर्वतानां दिशो मध्येन गच्छथ विविश्चन्तः॥ (३)

नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः।
युष्माकमस्तु तविषी तना युजा रुद्रासो नू चिदाधृषे॥

नहि[5] वश्शत्रुर्ज्ञायतेऽन्तरिक्षे न च भूम्यां रिशादसः। युष्माकमस्तु तविषी तना। तनेवितता[6]। युजा योगेन रुद्रपुत्राः शीघ्रमेव शत्रूणामाधर्षणाय॥

न हि वः। न हि वश्शत्रुर्ज्ञायते स्वर्गे न च भूम्यां रिशतामसितारः। युष्माकमस्तु बलं हविर्लक्षणेन धनेन सहायेन रुद्रपुत्राः क्षिप्रं शत्रूणामाधर्षणाय॥ (४)

प्र वेपयन्ति पर्वतान्वि विञ्चन्ति वनस्पतीन्।
प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा॥

[1] Read वि.
[2] Perhaps to read आशेरते इति.
[3] क्षा: completely worm-eaten.
[4] Also R. V. 3. 26. 4 and 8. 7. 4.
[5] Pratika not separately given.
[6] Perhaps to read तना। तनोतेः। वितता.

प्र वेपयन्ति । स्पष्टः पूर्वार्धः । पर्वताः शिलोच्चयाः ।

वपन्ति मरुतो मिहम् (ऋ. वे. ८. ७. ४)

इत्यत्र पर्वता मेधाः[1] । ते[2] तेन सृष्टः । प्रैवाममध्वं[3] मरुतो दुर्मादा[4] इव । सुरया मत्ता दुर्मदाः । देवासः सर्वधा[5] विशा सहिताः । विशो मनुष्या इति ॥

प्र वेपयन्ति । प्रकम्पयन्ति शिलोच्चयान् । पृथक्कुर्वन्ति वनस्पतीन् । इत्थं मधुमत्ता इव प्रगच्छथ देवा मरुतः सर्वैरनुचरैः सह ॥ (५)

**उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।**
**आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ॥**

उपो । उपयुङ्ध्वं[6] रथेषु पृषतीः । प्रष्टिभूत्वा[7] वहति रोहितः । प्रष्टिः प्राश्नुतेः । द्वयोर्योगो युज्यते । युष्माकं यामाय पृथिवी चिदाश्रोत् अनुजानाति गमनमन्तरिक्षे । अबीभयन्त मानुषा इति ॥

उपो रथेषु । यूयं रथेषु पृषद्वर्णा अश्वा उपायुङ्ध्वम् । प्रष्टिर्भूत्वा वहति रोहितवर्णोऽश्वः । तं चोपायुङ्ध्वम् । आश्रृणोति भवतां गमनाय पृथिवी किं मरुत आगच्छन्तीति । भयेन बिभ्यन्ति च मानुषाः ॥ (६)

[1] In the second pāda.

[2] This word not necessary. Or perhaps to read न तेन सृष्टः or तेन न सृष्टः

[3] Reading uncertain. प्रैवागमध्वं is perhaps the reading.

[4] Read दुर्मदा.

[5] Read सर्वया.

[6] Perhaps to read उपायुङ्ध्वं.

[7] Read प्रष्टिर्भूत्वा.

**आ वो॑ म॒क्षू तना॑य॒ कं रुद्रा॒ अवो॑ वृणीमहे ।**
**गन्ता॑ नू॒नं नोऽव॑सा॒ यथा॑ पु॒रेत्था कण्वा॑य बि॒भ्युषे॑ ॥**

आ वः । आवृणीमहे वः शीघ्रं तनाय । कुकं कनस्तनय[1] इत्यपत्यनामनि[2] । तनोतेस्सन्तम्यर्थात्[3] । कमिति चतुर्थ्या[4] परो निपात उद्गूहणार्थीयस्सर्वत्र । रुद्रपुत्राः । रक्षणं गच्छत शीघ्रमस्मानवसा यथा पुरा अस्मान् गतवन्तः कण्वायेत्थं बिभ्युषे यन्त[5] मद्रक्षणार्थमागच्छथेति ॥

आ वो मक्षु । आवृणीमहे युष्माकं रुद्रपुत्रा रक्षणं पुत्राय । तथा सति गच्छत सम्प्रत्यस्मात् रक्षणेन । यथा पुरान्येषां आह्वानं एवं त्रिभ्युषे कण्वाय गच्छत इति ॥ (७)

**यु॒ष्मेषि॑तो मरुतो॒ मर्त्ये॑षित॒ आ यो नो॒ अभ्व॒ ईष॑ते ।**
**वि तं यु॑योत॒ शव॑सा॒ व्योज॑सा॒ वि यु॒ष्माका॑भिरू॒तिभि॑: ॥**

युष्मेषितः । युष्माभिः प्रेषितो यदि वान्यैर्मारकैः प्रेषितो योऽस्मानह्व[6] आगच्छति[7] । सपत्नोह्व[8] आभवतीति । तमस्मत्तः[9] पृथक्कुरु[10] शवसा ओजसा धौष्ठाकीणैश्चावनैः[11] ॥

[1] Read तुक् तोकं तनय instead of कुकं कनस्तनय.
[2] Read इत्यपत्यनामानि. Nigh. 2. 2.
[3] Read तनोतेस्सन्तत्यर्थात्.
[4] च and थ्या partly worm-eaten. Read चतुर्थ्याः
[5] Perhaps to read गन्त.
[6] Read योऽस्मानभ्व.
[7] Folio 33*b* ends with आग.
[8] Read सपत्नोऽभ्व.
[9] The initial त completely worm-eaten. Only a conjecture.
[10] Read पृथक्कुरुत.
[11] Read यौष्माकीनैश्चावनैः

युष्मेषितः । युष्माभिः प्रेषितो मरुतो मर्त्यैर्वा प्रेषितः यो महानस्मानाहिनस्ति तं यूयं शवसा अस्मत्तः पृथक्कुरुत ओजसा च । तथा यौष्माकीनैः परिरक्षणैश्च अस्मान् अवत इति ॥ (८)

**असामि हि प्रयज्यवः कण्वं दद प्रचेतसः ।**
**असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न विद्युतः ॥**

असामि । असाधारणं यूयमेव प्रयष्टव्याः । कण्वं दद धारयत प्रचेतसः । असामिभिर्मरुत आगच्छतास्मानूतिभिश्शीघ्रं वृष्टिमिव विद्युत इति[1] ॥

असामि हि । प्रकर्षेण यष्टव्याः प्रकृष्टज्ञानाः कण्वं हि मां असाधारणं मनुष्येभ्यः पतिं विदत्त । असाधारणैश्च पालनैः अस्मानागच्छत वृष्टिमिव विद्युतः शीघ्रम् ॥ (९)

**असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः ।**
**ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ॥**

असामि[2] । अनिरुक्तम्[3] । असाम्योजो बिभृथा सुसमासं[4] बलं बिभृथ कल्याणदाना इति[5] । किञ्च असामि सवश्च[6] बिभृथ । तथा

[1] After असामिभिर्मरुत अ the line is completely worm-eaten. ष्टिमिव विद्युत इति is sufficiently clear though mostly worm-eaten. In between it is only a conjecture from the small bits that remain.

[2] अ, at the end of the line, completely gone.

[3] Read अत्र निरुक्तम्.

[4] Read बिभृता सुदानवः । असुसमासं.

[5] N. 6. 23.

[6] Read शवश्च.

सति य ऋषिद्विट् परिवीतो मन्युना तस्मै इषुमिव सृजत मता द्वेषमिति[1] ॥

असाम्योजः । असाधारणं बलं बिभ्रथ शोभनदाना असाधारणं वेगं च कम्पयितारः । कण्वं मां यो द्वेष्टि तस्मै परितो मन्यमानाय शरमिव द्वेषं विसृजत इति ॥ (१०)

---

**उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।**
**उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥**

उत्तिष्ठ । ब्राह्मणस्पत्यं सूक्तम् । तस्मिन्नन्ये चान्वाभक्तत:[2] । तथा च कौषीतकम् । प्रहरेति हैनं ब्रह्मोवाच प्रहर्षयन् सोऽब्रवीद्धत्वा वृत्रं विजित्य त्वथा[3] मेऽयं सह सोमपीथ इति । स एष ब्रह्मण एव सोमपीथः । तस्मिन् देवा अन्वाभजन्तः[4] । यस्मिन्निन्द्रो[5] वरुणो मित्रो अर्यमा देवा निदेकांसि[6] चकिर[7] इति[8] । उत्तिष्ठ ब्रह्मणस्पते देवकामास्त्वामीमहे ।

[1] Not clear. Perhaps to read हत द्वेषमिति. Here there is no figure to mark the end of the sūkta.

[2] Not clear. Perhaps to read तस्मिन्नन्ये चान्वाभक्तिः

[3] Read त्वया.

[4] न्वा completely worm-eaten. The printed edition has अन्वाभजत इति. Read अन्वाभजतेति.

[5] The printed edition has ह स्माह कौषीतकिः between अन्वाभजतेति and यस्मिन्निन्द्रो.

[6] Read ओकांसि.

[7] Read चक्रिर.

[8] कौ. ब्रा. 15. 2.

उपप्रयन्तु मरुत[1] सुदानवः। त्वं चेन्द्र प्राशूर्भावा[2] सचा ब्रह्मणस्पतिना सह सोमस्य प्राशको भव। यद्वा प्रश्नृणीभि[3] वृत्रं तेन सहेति ॥

उत्तिष्ठ। उत्तिष्ठ ब्रह्मणस्पते देवानिच्छन्तः त्वां याचामहे। त्वत्सहाया मरुतश्चोपगच्छन्तु सुदानाः। इन्द्र त्वं च क्षिप्रकारी भव सहायः ॥ (१)

त्वामिद्धि स॑हसस्पुत्र॒ मर्त्य॑ उपब्रू॒ते धने॑ हि॒ते।
सु॒वीर्य॑ मरु॒त आ स्वश्व्यं॒ दधी॑त॒ यो व॑ आच॒के ॥

त्वामिद्धि। त्वामेव हि सहसस्पुत्र मर्त्य उपस्तौति शत्रुषुन्निर्मिते[4] धने। तदा जिहीर्षत्[5] सुवीर्यं मरुतोऽपिचि[6] स्वश्व्यं धारयेद्यो वः कामयेत ब्रह्मणस्पतिना सहितानिति ॥

त्वामिद्धि। त्वामेव सहसः सूनो मर्त्य उपस्तौति निहिते धने। तद्रक्षार्थं हे मरुतः यो युष्मान् कामयते मर्त्यः स सुवीर्यं स्वश्व्यं च धारयेत् ॥ (२)

प्रैतु॒ ब्रह्म॑ण॒स्पति॒ः प्र दे॒व्ये॑तु सू॒नृता॑।
अच्छा॑ वी॒रं नर्यं॑ प॒ङ्क्तिरा॑धसं दे॒वा य॒ज्ञं न॑यन्तु नः ॥

[1] Read मरुतः

[2] Read प्राशूर्भव.

[3] Read प्रशृणीहि.

[4] Perhaps to read शत्रुषु निहिते or शत्रुभिर्निर्मिते. The scribe seems to have confused these two.

[5] This word seems unwanted.

[6] Perhaps to read मरुतः। अपि च.

प्रैतु । प्रैत्वस्मान्[1] ब्रह्मणस्पतिः[2] । प्रैतु च दैवी[3] वाहनयतु[4] । अभिनयन्तु नो वीरममित्र + + + + प्रेरकं[5] त्रिहितं[6] ब्राह्मणोक्ताभिः हविष्पङ्क्त्यादिभिरार्धं[7] देवा यज्ञमिति ॥

प्रैतु । प्रगच्छतु ब्रह्मणस्पतिः । प्रैतु देवी वाक् । अभिनयन्तु अस्माकं बलयुक्तं नृभ्यो हितं हविष्पङ्क्त्यादिभिर्ब्राह्मणविहिताभिः पङ्क्तिभिः समृद्धं यज्ञं देवाः ॥ (३)

**यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।**
**तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ॥**

यः । य ऋत्विजे ददाति सूनरं शोभनं वसु । सूनरं सूपसृष्टादत्तेः[8] यथा सूनृतेति । अपि वा नरिर्नयनार्थः । स धत्तेऽक्षीणमन्नम्[9] । तस्मै

[1] The आ mark and न् in स्मान् completely worm-eaten.

[2] ति mostly worm-eaten.

[3] Read देवी.

[4] Read only वाक्. The portion हनयतु must be an unnecessary repetition of the following अभिनयन्तु.

[5] After वीरममित्र the leaf is worm-eaten and about four or five syllables completely gone. An आ mark is retained, which may belong to the syllable following त्र. Perhaps to read वीरममित्राणां प्रेरकं. Since there is a hole in the leaf for the string, perhaps a littte space is left blank and no letters are missing. प्र is what is seen after त्र.

[6] Read नृहितं or नृभ्यो हितं.

[7] Perhaps to read हविष्पङ्क्त्यादिभिः समृद्धं.

[8] Read सूपसृष्टादर्तेः The र mark above त्त missing.

[9] After ध the leaf is worm-eaten. Some bits of त्ते remain and the syllable could be made out. The end of ण is also preserved क्षी is only a conjecture. The letter is completely gone.

वयं चेळाजानवीं[1] सुवीरामायजामहे सुप्रतरणामनेहसं उपरद्रवरहिताम्[2] । ऋत्विगधिष्ठानो ब्रह्मणस्पतिरिति यजमानस्तुतिरिति[3] ॥

योवाघते । य ऋत्विजे ददाति शोभननरोपेतं शोभननयनं वा धनं स धारयति अक्षीणमन्नम् । वयं च तस्मै मानवीमिळां सुपुत्रां आयजामहे शोभनप्रतरणां उपद्रवरहिताम् ॥ (४)

**प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।**
**यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥**

प्र नूनम् । होतारमधितिष्ठन् ब्रह्मणस्पतिर्मन्त्रं[4] प्रवदति उक्थार्हम् । यस्मिन्निन्द्रादयः[5] स्थानानि चक्रिरे इति ॥

प्र नूनम् । प्रवदति इदानीं ब्रह्मणस्पतिर्मन्त्रं प्रशस्तम् । यस्मिन् मन्त्रे इन्द्रादयः स्थानानि चक्रिरे । श्रवणार्थं यं मन्त्रमुपासते इति ॥ (५)

**तमिद्वोचेम विदथेषु शंभुवं मन्त्रं देवा अनेहसम् ।**
**इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ॥**

तमित् । तमेव वोचेम यज्ञेषु सुखस्य भावयितारं मन्त्रं देवाः प्रशस्तम् । इमां चेद्वाचं यूयं कामयध्वे[6] ततोऽयं स्तोता विश्वानि[7] वामा-

[1] Read चेळाम्मानवीं.
[2] Read उपद्रवरहिताम्.
[3] Not clear. This seems to be related to the next stanza.
[4] What is written is only ब्रह्मणस्पतिम्मन्त्रं. The dot between the two म letters to indicate र missing.
[5] न्द्रा mostly worm-eaten; only a conjecture.
[6] ध्वे mostly worm-eaten; only a conjecture.
[7] Folio 34*a* ends with विश्वा.

न्यश्नुवीतेति । षडर्थश्चकारो भवति । समुच्चयेतरेतरयोगसमाहारान्वाचयति-विकल्पचेदर्थत्वात्[1] । तत्र चेदर्थयोगे[2] आख्यातमुदात्तं भवति ॥

तमिद्वोचेम । तमेव वोचेम वयं यज्ञेषु सुखस्य भावयितारं मन्त्रं देवा अपापम् । तां चेमां वाचं देवा नरो यूयं कामयध्वम् । अयं च स्तोता युष्माकं स्वभूतानि सर्वाणि धनानि अश्नोतु ॥ (६)

**को दे॑व॒यन्त॑मश्नव॒ज्जनं॒ को वृ॒क्तब॑र्हिषम् ।**
**प्रप्र॑ दा॒श्वान्प॒स्त्या॑भिरस्थितान्त॒र्वाव॒त्क्षयं॑ दधे ॥**

को देवयन्तम् । को देवकाममश्नोति जनम् । को वा यज्ञाय[3] वृक्तबर्हिषम् । प्रास्थित दाश्वान् यजमानः पश्याभिः[4] पस्त्याभ्यो गृहेभ्यः । अपि वा पिशः[5] पस्त्याः । मनुष्यैस्सहितं[6] ऋत्विग्भिः । सोऽन्तर्वावत् क्षयं दधे । वावदिति मत्वर्थीयम् । धनयुक्तं गृह्यानयति ।

अन्तर्वादकृणोज्ज्योतिषा मः[7] (ऋ. वे. ६. ८. ३)

इति[8] । देवकामं ब्रह्मणस्पतिः फलेन योजयतीति ॥

[1] ति not wanted between समाहारान्वाचय and विकल्प.

[2] यो mostly worm-eaten.

[3] After जन the leaf is worm-eaten very badly. Reading as far as यज्ञाय only a conjecture.

[4] Read पस्त्याभिः

[5] Read विशः

[6] Read सहितः

[7] Read अन्तर्वावदकृणोज्ज्योतिषा तमः

[8] इति completely worm-eaten.

को देवयन्तम्। को यजमानमश्नोति जनः। को वा छिन्नबर्हिषं प्रास्थित यजमानो विड्भिर्ऋत्विग्भिः। तेषां मध्ये ब्रह्मणस्पतिरागच्छन् निवासं करोतीति पूर्वार्धर्चस्योत्तरम् ॥ (७)

**उप॑ क्ष॒त्रं पृ॑ञ्ची॒त हन्ति॒ राज॑भिर्भ॒ये चि॑त्सुक्षि॒तिं द॑धे।**
**नास्य॑ व॒र्ता न त॑रु॒ता म॑हाध॒ने नार्भे॑ अस्ति व॒ज्रिण॑ः ॥**

उप। आत्मनि बलमुपवर्चयति। हन्ति च[1] राजभिर्वरुणादिभिर्युक्तः[2] सोऽयं भवे[3] युद्धे सुक्षितिं करोति। न हितः[4] पलायते। नास्य वर्ता प्रेरकोऽस्ति। नापि तरुता य एनं बलेन तरति महति क्षुद्रे वा सङ्ग्रामे आयुधवत इति[5] ॥

उप क्षत्रम्। ब्रह्मणस्पतिर्धनं स्तोतॄणामुपपृञ्चति। भयमपि वरुणादिभिः सहागत्य हन्ति। तथा भये सति शोभननिवासं गृहं प्रयच्छति। ब्रह्मणस्पतेरस्यायुधवतो महत्यल्पे वा सङ्ग्रामे नास्त्यभिगन्ता न च तारकः ॥ (८)

---

[1] After बलमु the leaf is worm-eaten as far as हन्ति. This is the nearest approximation that can be re-constructed from the bits that remain. Not clear.

[2] The आ mark in the initial रा completely worm-eaten.

[3] Read **भये.**

[4] Read भीतः

[5] Here there is the figure 8 to mark the end of the Sūkta.

क्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा ।
चेत्स दभ्यते जनः ॥

ह्यादि
उपक्षय

रक्षिति[1] । तृचेन मुख्येन वरुणादीनां स्तवो[2] । द्वितीयेऽपि
एवादित्या उच्यन्त इत्येकम् । सर्व एवादित्या इत्यपरम्[3] ।
त्र[4] स्तुताः । अष्टमी च तद्विषयैव । सर्वविषययोपोत्तमया
निन्दैव[5] । यं रक्षन्ति सुमतयोर्मी[6] वरुणादयः । क्षिप्रं हिनस्ति
ते ॥

जितोऽ
भक्ष्यम

क्षन्ति । यं वरुणादयः प्रचेतसो रक्षन्ति क्षिप्रमेव स जनः शत्रून्
यते वा याचितृभिः ॥ (१)

बाहुतेव पिप्रति पान्ति मर्त्यं रिषः ।
रिष्टः सर्व एधते ॥

पन्था
धनमेव

र । बाहू एव बाहुता ।

ता बाहुता[7] न दंसना (ऋ. वे. ८. १०१. २)

भवता

हू[8] इव मर्त्यं वरुणादयः पारयन्ति । यं च पान्ति मर्त्यं शत्रोः ।
तो भवति ।

ad रक्षन्ति.
ad स्तवः
or त... rst written इत्यपरा. Then the आ mark in र deleted with two
e and the anusvara is then written.
rhaps to read येऽत्र.
ad सर्वविषययोत्तमया प्रसङ्गाद्दुरुक्तनिन्दैत्र.
ad सुमतयोऽमी.
ad ता बाहुता.
.

मरुत्सु वो दधीमहि (ऋ. वे. ५. ५२. ४)

इत्यत्र पान्ति मर्त्यं रिषः[1] इति सृष्टः[2] समुच्चयाभावात् ।

विश्वे हि विश्ववेदसः (ऋ. वे. ५. ६७. ३)

इत्यत्र च संसृष्टः । तत्र भि[3] विधेयं चोद्देश्यमिति ॥

यं बाहुतेव । यं धनादीनां बहुतेव वरुणादयः पूरयन्ति । पान्ति च मर्त्यं शत्रोः स सर्वोऽहिंसितो वर्धते ॥ (२)

**वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम् ।**
**नयन्ति दुरिता तिरः ॥**

वि दुर्गा । अमी वरुणादयो वान्[4] परिरक्षन्ति तेषामेषां दुर्गानि घ्नन्ति द्वेष्टृंश्च पुरस्तात् गच्छन्तो राजानो दुरितानि च तिरोनयन्त्येषामिति ॥

वि दुर्गा । अमी वरुणादयो यान् परिरक्षन्ति तेषां दुर्गाणि शत्रून् शत्रुपुराणि च विघ्नन्ति । दुरितानि च तिरोनयन्ति ॥ (३)

**सुगः पन्था अनृक्षर आदित्यास ऋतं यते ।**
**नात्रावखादो अस्ति वः ॥**

[1] The last pāda in R. V. 5. 52. 4.

[2] Perhaps to read न सृष्टः

[3] Read हि.

[4] Read यान्.

सुगः । शोभनं गमनः[1] पन्थाः । आदित्या यज्ञं गच्छते । यज्ञो ह्यादित्यानां[2] धारकः । अनृक्षरः कन्धकवर्जितः[3] । तत्रा च[4] पुरुषेऽवखाद उपक्षयो त्यागोऽस्ति व इति ॥

सुगः पन्थाः । शोभनगमनः पन्था आदित्या यज्ञं गच्छते कण्टकवर्जितोऽस्तु । अस्मिन् भवतां अवखादो नास्ति । पुरोडाशादिकं सर्वमेव भवतां भक्ष्यम् । न किंचित् त्याज्यमिति ॥ (४)

यं य॒ज्ञं नय॑था नर॒ आदि॑त्या ऋ॒जुना॑ प॒था ।
प्र व॒: स धी॒तये॑ नशत् ॥

यं यज्ञम् । यं यज्ञं यजमानं नयथ नरो नेतार इत्या[5] ऋजुनां पन्था[6] प्राश्नोतु स युष्मान् धारणार्थमात्मनः पुत्रादेश्च धारणम्[7] । अपि वा धनमेव धीति[8] ॥

यं यज्ञम् । यं मनुष्यं यज्ञं नयथ नरः आदित्या ऋजुना पथा प्रत्याप्नोतु स भवतां कर्मणे ॥ (५)

[1] शोभनगमनः

[2] ह्या mostly worm-eaten.

[3] Read कण्टकवर्जितः It is not certain if what is written is कण्डक or कन्धक. Writing is very illegible. it is not कण्टक.

[4] Perhaps to read नात्र च.

[5] Read आदित्या.

[6] Read ऋजुना पथा.

[7] Folio 34*b* ends धार. Perhaps to read धारणार्थम्.

[8] Read धीतिः or धीतिरिति.

**स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना ।**
**अच्छा गच्छत्यस्तृतः ॥**

स रत्नम् । स रत्नं मर्त्यो वासकम् । अपि च व्याप्तं पुत्रमात्मनैवाभिगच्छति । अहिंसितोऽयं यज्ञं नयथेति ॥

स रत्नम् । यो भवतां कर्मण्युद्युक्तः स रत्नं मर्त्यो वासयितृ व्याप्तं पुत्रं च आत्मनैवाभिगच्छति अहिंसितः ॥ (६)

**कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः ।**
**महि प्सरो वरुणस्य ॥**

कथा । कथं कुर्मः सखायः स्तोम[1] मित्रस्यार्यम्णश्च । महि मंहनीयं प्सरो रूपं भवति । वरुणस्य[2] ॥

कथा राधाम । कथं राधयामः सखायः स्तोमं मित्रस्य अर्यम्णश्च । कथं वा महद्रूपं वरुणस्य स्तुमः ॥ (७)

**मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् ।**
**सुम्नैरिद्व आ विवासे ॥**

मा वः । यो युष्माकं देवयन् यजमानो भवति तं घ्नन्तं शसं[3] च माहं प्रतिवोचे । धनैरेव तं वः स्वभूतं परिचरामीति ॥

[1] Read स्तोमं.

[2] य mark in स्य completely worm-eaten.

[3] Better to read शपन्तं.

मा वो घ्नन्तम् । यो युष्मान् देवान् कामयमानो भवति तं घ्नन्तं शपन्तं वा नाहं प्रतिहन्मि । न च प्रतिशपामि । सुखादि उद्दिश्य युष्मान् परिचराम्येव ॥ (८)

**चतुर॑श्चि॒द्दद॑मानाद्बिभी॒यादा निधा॑तोः ।**
**न दु॑रु॒क्ताय॑ स्पृहयेत् ॥**

चतुरश्चित् । प्रसंगाद्दुरुक्तनिन्दा क्रियते । तत्र यदा न्युप्ता अक्षाश्चतुष्कशो विभज्यमाना एकाधिका भवन्ति तदा कलिस्या[1] नाम भवति । यद[2] द्व्यधिकास्तदानी[3] द्व्यापारः[4] । यदा त्रधिकास्तदा[5] त्रेता । यदा चत्वार एव तदा कृतम् । तेन च जयः । तत्रैतदावा[6] । चतुरश्चि-दिति । निरुक्तम् । चतुरश्चाक्षान्ददमानान्धारयतः क[7] कितवातः प्रतिकि-तव आनीयातो य्यथा[8] बिभीयात् किमयं क्षिपेदिति तत्कृतमिति[9] । एवमेव दुरुक्तात्[10] यः स्पृहेदिति[11] ॥

प्रसङ्गात् दुरुक्तनिन्दां करोति चतुरश्चिदिति । चतुरश्चिदक्षान् धारयतः प्रतिकितवात् कितवो यथा बिभीयात् आ निधानात् किमयं चतुरोऽक्षान् पातयति

[1] Read कलिरस्य.

[2] Read यदा.

[3] Read द्व्यधिकास्तदानीं.

[4] Read द्वापरः

[5] Read त्र्यधिकास्तदा.

[6] Not clear. Perhaps to read तदेतदाह.

[7] क not wanted.

[8] Read यथा.

[9] This is not what is found in the Nirukta 3. 16.

[10] The negative particle is not found in the commentary. Perhaps something is missing.

[11] There is no figure here to mark the end of the Sūkta.

जयाय अन्यूनान् इति । इह अक्षेषु निहितेषु चतुरश्चतुरस्तान् विभजन्ति । तत्र यदा विभक्तेभ्योऽधिकास्त्रयो भवन्ति द्वावेको वा न तदा जयो भवति । यदा चत्वारो भवन्ति तदा जयः । तस्मात् कितवात् यथा बिभीयात् एवं दुरुक्ताय बिभीयात् । न दुरुक्ताय स्पृहयेत इति ॥ (९)

---

**सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् ।**
**सक्ष्वा देव प्र णस्पुरः ॥**

सं पूषन् । संतिरतिः पारणार्थः । संतिर पूषन्नस्मा[1] मार्गात् । वितिर चांहः स्तेनादिकम् । विमुचो नपात् मेघस्य पुत्र । अद्भ्यः पृथिव्यजायत । पृथिवी च पूषा भवन्ति[2] । प्रसक्तो हव[3] चास्माकं पुरतो गच्छाग्रत इति ॥

सं पूषन् । हे पूषन् दुर्गान् मार्गान् संतारय । पापं च विनाशय । मेघादापो जायन्ते । अद्भ्यः पृथिवी । इति विमुचो नपात् । तदधिपतिः पूषा । प्रसक्तो भव जिगमिषूणामस्माकमग्रतः ॥ (१)

**यो नः पूषन्नघो वृको दुःशेव आदिदेशति ।**
**अप स्म तं पथो जहि ॥**

[1] Read पूषन्नस्मात्.
[2] Read भवति.
[3] Read भव.

योनः पूषन्[1] । अघो हन्ता । वृको मोपकः । वृकतिरादानार्थः । पुश्शेवः[2] पापक्तृतदादिदेशेति[3] न गन्तव्यं मागच्छत[4] इति वदति । तं पथोऽपजहि ॥

यो नः । योऽस्माकं पूषन् आहन्ता स्तेनो दुस्सुख इहागन्तव्यं इति वदति तं पथोऽपजहि इति ॥ (२)

**अप॒ त्यं प॑रिप॒न्थिनं॑ मुषी॒वाणं॑ हुर॒श्चित॑म् ।**
**दू॒रमधि॑ स्रु॒तेर॑ज ॥**

अप । अपाजतम्[5] । परपन्थिनं[6] यः पथः परिबध्नाति[7] तम् । मुषीवाणं हुरचितम्[8] । भारं भरतो[9] नरस्य योजनार्थम्[10] । ततं[11] स्रुधेरधि मार्गाद्दूरम् स्रुतेरधिमार्गाद्दूरम्[12] । स्रुतिस्सरणादिति ॥

अस्योत्तरा[13] भूयसे निर्वचनाय । अप त्यम् । अपगमय तं गमनप्रतिबन्धकरं परोक्षं हर्तारं प्रत्यक्षेण च धनानां चेतारं मार्गादधि अज दूरमिति ॥ (३)

[1] Pratika not separately given.
[2] Read दुश्शेवः
[3] Read पापकृत । आदिदेशति.
[4] Perhaps to read आगच्छत.
[5] पा looks more like वा.
[6] Read परिपन्थिनम्.
[7] रि mostly worm-eaten.
[8] Read हुरश्चितम्.
[9] First written भारतो. Then आ mark in भा deleted with a dot above.
[10] र्थ not at all legible. This is the nearest approximation.
[11] Written योजनार्थन्ततं. Read योजनार्थम् । तं.
[12] Repetition of स्रुतेरधि मार्गाद्दूरम् unnecessary.
[13] The verse no. 3.

त्वं तस्यं द्वयाविनोऽघशंसस्य कस्यं चित् ।
पुदाभि तिंष्ठ तपुंषिम् ॥

त्वम् । सत्यानृतयुक्तो द्वयापी[1] । यो वा प्रत्यक्षं च हरन्ति[2] परोक्षं च । त्वं तस्य द्वयाविनो[3] व्ययंसस्य[4] । अघशंस इति स्तोननाम[5] अघं कामयत इति । तस्य कस्यचिदपि पादेनाभितिष्ठ तापकं बलं शरीरमया[6] ॥

त्वं तस्य। प्रत्यक्षपरोक्षहरणयुक्तस्य स्तेनस्य अन्यतरस्यापि पादेन अभितिष्ठ बलम् ॥ (४)

आ तत्ते दस्र मन्तुमः पूषन्नवों वृणीमहे ।
येनं पितॄनचोंदयः ॥

आ तत् । आवृणीमहे तव रक्षणं दर्शनीय[7] ज्ञानवत्[8] । येनावनेन पणिभिरपहृतासु गोष्वङ्गिरसोऽचोदयः इति ॥

आ तत्ते । आ वृणीमहे तद्रक्षणं तव दर्शनीय ज्ञानवन् येन पितॄनङ्गिरसः पणिभिरपहृतासु गोष्वचोदयः ॥ (५)

[1] Read द्वयावी.

[2] Read हरति.

[3] द्व is completely and वि partly worm-eaten.

[4] Perhaps to read व्यंसस्य. The relevancy of this word here not clear.

[5] Read स्तेननाम.

[6] Read शरीरमयम् or शारीरम्.

[7] र्श mostly worm-eaten. Difficult to decipher.

[8] Read ज्ञानवन्.

अधा नो विश्वसौभग हिरण्यवाशीमत्तम ।
धनानि सुषणा कृधि ॥

अथा नः[1] । अथास्माकं व्यासधन हिरण्मय्या वश्यायुधेन[2] युक्तानां वरिष्ठ धनानि सुदानानि कुरु ॥

अधा नः । अथास्माकं विश्वकल्याण अतिशयेन हिरण्यवाशीयुक्त धनानि सुदानानि कुरु ॥ (६)

अति नः सश्चतो नय सुगा नः सुपथा कृणु ।
पूषन्निह क्रतुं विदः ॥

अति नः । ये च[3] सचन्ते अभिद्रोभाय[4]ताननतिनय[5] संगमनान्यस्माकं सुपथानि कुरु ।

विश्वानि कृण्वन् सुपथानि यज्यवे (ऋ. वे. ९. ८६. २६) पूषन्निहाध्वनि[6] प्रज्ञानं लंभय ॥

अति नः । चोरैस्सक्तानस्मान् अतिशयेन नय । सुगमनेन शोभनेन पथा चास्मान् कृणु । पूषन् अध्वनि प्रज्ञानं लम्भय इति ॥ (७)

अभि सूयवसं नय न नवज्वारो अध्वने ।
पूषन्निह क्रतुं विदः ॥

[1] Read अधा नः
[2] Read वाश्यायुधेन.
[3] च not necessary.
[4] Read अभिद्रोहाय.
[5] Folio 35*a* ends here.
[6] Perhaps it is necessary to add इति । before this.

अभि । अभिनयास्मान् सुवसं[1] देशम् । यवसो ययवतेः सवनार्थाद्ग्रत्[2] । न वा नवज्वारो भवाध्वने[3] । + + + + + + + + सिः[4] । नव नवतेः । ज्वारे ज्वरोस्सान्तौपार्थादिति[5] ॥

अभि सूयवसम् । अभिनयास्मान् सुयवसं देशं प्रापय । न च नवज्वालो दवाग्निरध्वने भवतु ॥ (८)

शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरम् ।
पूषन्निह क्रतुं विदः ॥

शक्ति[6] पू + इत[7] । इमे दानार्थाः[8] । प्रेरय पूरय प्रयच्छ चेति । शिशीह्यस्मास्तीक्ष्णीकुरु[9] । पूरय चोदरं सोमेन ॥

[1] Read सुयवसं.

[2] Perhaps to read सेवनार्थात्.

[3] ध्व completely worm-eaten.

[4] After भवाध्वने the corner of the leaf is completely worm-eaten. It is impossible to reconstruct the missing portion, about eight syllables. सिः is in the next line. The first letter is न; the third letter has an आ mark which is clear; fifth letter has a र or ऋ mark following; sixth letter is त्य; the seventh letter has a र or ऋ mark following. The eighth letter gone. Perhaps नवज्वार: प्रत्यग्रदीप्तिः

[5] Read ज्वारो ज्वरेस्सन्तापार्थादिति.

[6] Read शग्धि. Pratika not separately given.

[7] After पू some space left blank. Read पूर्धि इत. Even then not clear.

[8] There must be more than two verbs. Perhaps to read शग्धि पूर्धि । प्रयंसि । दानार्थः ।

[9] Read शिशीह्यस्मांस्तीक्ष्णीकुरु.

शग्धि पूर्धि । शक्तो भव । पूरय कामान् । प्रयच्छ धनानि । संस्कुरु चास्मान् । पूरय च उदरम् ॥ (९)

न पूषणं मेथामसि सूक्तैरभि गृणीमसि ।
वसूनि दस्ममीमहे ॥

न पूषणम् । न वयं पूषणं आक्रोशामः । किन्तु धूक्तैरभिष्टुमः[1] । वसूनि दर्शनीयं धाचहै[2] ॥

न पूषणम् । न वयं पूषणमाक्रोशामः । किन्तु सूक्तैरभिष्टुमः । धनानि दर्शनीयं याचामहे ॥ (१०)

---

कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे ।
वोचेम शंतमं हृदे ॥

कद्रुद्राय । रुद्रो रोदितीति[3] । यदि वा रोरूयमाणो द्रवत्यन्तरिक्ष इति[4] । कदा वयं रुद्राःय[5] सुमतये सेक्केतमाय[6] प्रवृद्धाय वोचेम सुखकरं स्तोत्राम[7] हृदे ॥

[1] Read सूक्तैरभिष्टुमः

[2] Read याचामहे. Here there is the figure 10 to mark the end of the Sūkta.

[3] रो mostly and दि partly worm-eaten.

[4] Cf. रुद्रो रौतीति सतः । रोरूयमाणो द्रवतीति वा । रोदयतेर्वा (नि. १०. ५).

[5] Read रुद्राय.

[6] Read सेक्तृतमाय. Evidently the scribe wanted to write सेक्ते and then continued तमाय.

[7] Read स्तोत्रम्.

कद्रुद्राय। कदा वयं रुद्राय प्रचेतसे सेक्तृतमाय वृद्धाय हृदयस्य शंतमं स्तोत्रं वोचेम इति स्तोतुकामस्य वचनम् ॥ (१)

**यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे ।**
**यथा तोकाय रुद्रियम् ॥**

यथा नः[1] । यथास्माकमियं[2] पृथिवी पश्वादिभ्यो रुद्रह्मं[3] भेषजं कुर्यात् प्रेषते रुद्रेन्नासाराः[4] सोऽपि तथा कुर्यादिति ॥

यथा नः । यथास्माकमियं पृथिवी भेषजं पश्वादिभ्यः कुर्यादिति ॥ (२)

**यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति ।**
**यथा विश्वे सजोषसः ॥**

यथा नः । यथास्मामक्रादयो[5] जानीयुः । यथा वा स्वयं च रुद्रः । तथा कदा वोचेमेति पूर्वस्यामस्यां च वाक्यसमाप्तिरिति । सैषेका[6] लिङ्गो-त्तरदेवतेति[7] शौनकः ॥

यथा नः । यथास्मान् मित्रावरुणौ जानीतः स्तुतिप्रवृत्तान् यथा वा स्वयं रुद्रः यथा वा सर्व एव देवा एकीभूताः तथा कदा वोचेमेति ॥ (३)

[1] नः mostly worm-eaten.

[2] यं mostly worm-eaten. Scarcely decipherable.

[3] Read रुद्रियं.

[4] Not clear.

[5] Read यथास्माकं मित्रादयो.

[6] Read सैषैका.

[7] Read लिङ्गोक्तदेवतेति.

गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् ।
तच्छंयोः सुम्नमीमहे ॥

गाथपतिम् । गाथा स्तुतिः । गाथवतिं[1] यज्ञपतिं यज्ञपतिं[2] रुद्रञ्जषालभेषजम्[3] । जलाषमिति सुखनाम । सुखकरभेषजम् । गजलिर्गतिकर्मा[4] । जङ्गमैः सर्वैरभिलषितं जलाषम् ।

काबस्य[5] ते रुद्र मृळयाकुः (ऋ. वे. २. ३३. ७)

यदिवा उदकनामैवातत[6] । उदकं ह्यस्य कीर्तने भेषजं भवति । बार्हस्पत्यस्य शंयोर्यत् प्रजाविषयं सुखं तत याचामहे इति ।

गाथपतिम् । स्तोत्रपतिं यज्ञपतिं रुद्रं सुखकरभेषजं बार्हस्पत्यस्य शंयोर्यत् प्रज्ञाविषयं सुखं तद्याचामहे ॥ (४)

यः शुक्र इव सूर्यो हिरण्यमिव रोचते ।
श्रेष्ठो देवानां वसुः ॥
शं नः करत्यर्वते सुगं मेषाय मेष्ये ।
नृभ्यो नारिभ्यो गवे ॥

[1] Read गाथपतिं.

[2] Repetition of यज्ञपतिं not wanted.

[3] Read रुद्रं जलाषभेषजम्.

[4] Perhaps to read जलिर्गतिकर्मा. In the Dhātupātha there is जल घातने (1. 886) and जल अपवारणे (10. 10).

[5] Read क स्य. It is not certain if the letter between क and स्य is ब or स.

[6] Read उदकनामैवैतत्.

यः शुक्रः । द्रूद्रूध[1] एकार्थः । स्पष्टः । सुगमिति सुखनाम । नन्वसावेव रुद्रः । यथा वाजसनेवयकम्[2] । तमब्रह्ममीशानोऽसि[3] इति । तद्यदस्य तन्नामाकारोदादित्यस्तद्रूपमभवदादित्यो वा ईशानः । आदिन्यो[4] ह्यस्येष्टे[5] इति[6] । मन्त्रश्च भवति ।

असौ योऽवसर्पतीति[7]
नीलग्रीवो विलोहितः (वा. स. १६. ७)

इति । तत्र वदन्ति । रुद्रोऽयमष्टया[8] विभक्तोऽष्टमूर्तिरभूत्[9] । ततश्च तथा तथा स्तुतयो भवन्ति । माध्यमिक एव रुद्र इति ॥

यः शुक्र इव । यो ज्वलन्निव सूर्यो हिरण्यमिव रोचते श्रेष्ठो देवानां वासयिता । उत्तरत्र संबन्धः ॥ (५)

शं नः करति । सोऽस्माकं अश्वादीनां शोभनागमनं सुखं करोतु ॥ (६)

**अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् ।**
**महि श्रवस्तुविनृम्णम् ॥**

[1] Read द्रूच.

[2] Read वाजसनेयकम्.

[3] Read तमब्रवीदीशानो.

[4] Read आदित्यो.

[5] Printed Edition has ह्यस्य सर्वस्येष्टे.

[6] S'. B. 6. 1. 3. 17. Readings slightly different.

[7] Read योऽवसर्पति or perhaps the two pādas are given as separate quotations and there is an इति here also.

[8] Read रुद्रोऽयमष्टधा.

[9] After र्ति some letter, perhaps न begun and completely scored off. Then र begun.

अस्मे । सौम्यस्तृचः । अस्मास्वधिनिधेहि । श्रियन्नृणां[1] शतस्य पर्याप्ताम् । तदेवाह । महदन्नं बहुधनयुक्तं देहीति ॥

अस्मे सोम । सौम्यस्तृचः । अस्मासु सोम श्रियमधिनिधेहि मनुष्याणां शतस्य पर्याप्तं महच्च अन्नं बहुबलम् ॥ (७)

**मा नः॑ सोमपरि॒बाधो॒ मारा॑तयो जुहुरन्त ।**
**आ न॑ इन्दो॒ वाजे॑ भज ॥**

मानः । ये सोम[2] वर्जयन्त्ययजमानाः । यदि वा हिंसन्ति सोमं वृथापानेन । ते मस्मान्[3] हिंसन्तु वोऽरातयः । आभजास्मान् बलेनैवेति ॥

मा नः सोम । मास्मानपहर्तारो हिंसन्तु सोम[4] । मा च शत्रवः । त्वं अस्मानिन्दो सङ्ग्रामे सेवस्व ॥ (८)

**यास्ते॑ प्र॒जा अ॒मृत॑स्य॒ पर॑स्मि॒न्धाम॑न्नृ॒तस्य॑ ।**
**मू॒र्धा नाभा॑ सोम वेन आ॒भूष॑न्तीः सोम वेदः ॥**

यास्ते । यास्ते सोम प्रजा अहृतस्य[5] परस्मिन् धामन्नवस्थितस्य कुर्वन्ति । ताः स्वंमूर्चा[6] धारको मूर्तानाम्[7] । नाभा वेनो वेनो[8] गृहं

[1] Folio 35*b* ends श्रिय. The anusvāra completely worm-eaten.
[2] Read सोमं.
[3] Read मास्मान्.
[4] The commentatre seems to take this as a separate word.
[5] Read अमृतस्य.
[6] Read स्वमूर्ध्ना.
[7] Not clear. Perhaps to read स्वमूध्ना । मूर्धा धारको मूर्तानाम्.
[8] Repetition not wanted.

प्रापयन्[1] । नाभिन्नहनात्[2] । बध्नाति पुरुषम् । वेनतिर्गमनार्थश्च । अस्माद्वा । ऊर्ध्वा अन्यो[3] प्राणा वेनन्ति इत्युक्तम्[4] । अभूषन्ती:[5] भवितुमिच्छन्तीस्ता जानीहि सोम ।

आभूषन्तस्ते सुमतौ नवायाम् (ऋ. वे. १०. १६०. ५)
इति[6] ॥

यास्ते प्रजाः । यास्ते सोम प्रजा अमृतस्य तृतीये लोके स्थितस्य परिचरन्ति ताः तद्भविः सर्वेषामुच्छ्रितस्त्वं उत्तरवेदीनाभौ कामयस्व । त्वां परिचरन्तीश्च ता जानीहि ॥ (९)

---

अग्ने विवस्वदुषसंश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥

अग्ने । ऋषिं वक्ष्यति[7]

प्रियमेधचदत्रिवत्[8] (ऋ. वे. १. ४५. ३)

[1] Perhaps to read only प्रापय.

[2] Read नाभिस्सन्नहनात. After न्न some letter just begun and scored off. It looks like an anusvāra now. Then space for a letter left blank and ह begins after that. Cf. N. 4. 21.

[3] Read अन्ये.

[4] A. B. 1. 20.

[5] Read आभूषन्तीः

[6] Here there is the figure 11 to mark the end of the sūkta.

[7] In the last pāda.

[8] Read प्रियमेधवदत्रिवत्.

इति । अग्ने विवस्वत् । यत् पुरुषं वासयति तद्विवस्वत् । तच्चित्रं राध उषसः सकाशादावह मर्त्य[1] । यत् पुरुषं राधयति तद्राधः । तच्च[2] देवानामनीकं[3] तदावह दाशुषे जातवेदः । यदि वा यनश्च[4] देवांश्चोभयमुषसः सकाशादावह ।

तच्चित्रं राध आ हरोषो[5] यद्दीर्घश्रुत्तमम् (ऋ. वे. ७. ८१. ५) इति ॥

अग्ने विवस्वत् । प्रस्कण्वः काण्वः । अग्ने परिचरणवदुषसः पूज्यं धनममर्त्य यजमानाय आवह जातधन । त्वं तथोषर्बुधश्च अद्य देवानावह ॥ (१)

**जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।**
**सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥**

जुष्टः । जुष्ट इति पर्याप्तं ब्रुवते[6] । जुष्टो हि दूतोऽसि[7] हविषां वोढा अग्ने रथीरिव चाध्वराणाम् । रथीरध्वराणामिति शंसति इत्युक्तम्[8] । रथ एव रथीः इति । तैत्तिरीयकम् । रथीरध्वराणामित्याह । एष हि देवरथः इति[9] । वाजसनेयकं च । रथीरध्वराणामित्याह । रथो ह वा

[1] Read अमर्त्य.

[2] Perhaps to read यच्च.

[3] It is not certain for which word this is the explanation. There is देवाँ उषर्बुधः

[4] Read धनञ्च.

[5] Read आ भरोषो.

[6] Better to read ब्रूते.

[7] The letter looks more like मृ than दू.

[8] A. B. 2. 34.

[9] Not traced.

एष भूतो[1] देवेभ्यो हव्यं[2] वहति इति[3] । स त्वमश्विभ्यामुषसा च सजूः संगतश्शोभनसीधम्[4] । अस्मे धेहीति गतमिति ॥

जुष्टो हि । पर्याप्तो हि दूतस्त्वमसि हविषां वोढा अग्ने रथीरध्वराणाम् । रथो ह वा एष भूतो देवेभ्यो हव्यं वहति इति ब्राह्मणम् । स त्वं अश्विभ्यामुषसा च सहितः शोभनवीर्यं महदन्नमस्मासु धेहि ॥ (२)

अ॒द्या दू॒तं वृ॑णीमहे॒ वसु॑म॒ग्निं पु॑रुप्रि॒यम् ।
धू॒मके॑तुं॒ भाऋ॑जीकं॒ व्यु॑ष्टिषु य॒ज्ञाना॑मध्व॒र॒श्रिय॑म् ॥

अद्य । अद्य दूतं वृणीमहे वासयितारमग्निम् । पुरुप्रियम् । यस्मिन् पुरूणि प्रियाणि सन्ति । बहूनां प्रथमित्यन्ये[5] । धूमो यस्य ध्वज इति स[6] धूमकेकेतुरिति[7] ब्राह्मणमाह[8] । भाजीकं[9] भासालंकृतम् । ऋजीक ऋञ्जते साश्लेषार्थात्[10] । यथेमाभिवाङ्गो ऋजीकेति[11] । यास्कस्त्वाहा[12] । भाऋजीक-

[1] The printed edition has भूत्वा.

[2] Printed edition has यज्ञं.

[3] S'. B. 1. 4. 2. 10.

[4] Read शोभनवीर्यम्.

[5] Read प्रियमित्यन्ये. The anusvāra in बहूनां is mostly worm-eaten and can scarcely be deciphered.

[6] Read धूमो यस्य ध्वजः स omitting इति.

[7] Read धूमकेतुरिति.

[8] Reference not identified.

[9] Read भाऋजीकं.

[10] Read ऋञ्जतेः संश्लेषार्थात्.

[11] Not clear.

[12] Read यास्कस्त्वाह.

ऋजुभास्क इति[1]। व्युष्टिष्ठुस्सुयज्ञानां[2] अध्वरश्रियम्। यज्ञा यजमानाः। तेषाम्। यो अध्वरं श्रयति ॥

अद्या दूतम्। अद्य दूतं वृणीमहे वासयितारमग्निं बहुप्रियं धूमप्रज्ञानं प्रसिद्धभासं उषसो व्युष्टिषु यज्ञानां योऽध्वरं श्रयति ॥ (३)

श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे।
देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥

श्रेष्ठम्। प्रशस्यं युवतममतिथिं जनानाम्। अतिथिरतेर्गत्यार्थात्[3]। अभ्यतीतितो भवतीति यास्कः[4]। स्वाहुतमध्वरेषु[5] पर्याप्तम्। जनाय यजमानाय। देवानभिधातुं[6] अग्निं स्तौमि[7] ॥

श्रेष्ठं यविष्ठम्। प्रशस्यतमं युवतमं यजमानानामतिथिं सुष्ठ्वाहुतं पर्याप्तं जनाय यजमानाय देवान् प्रति गन्तुं जातप्रज्ञमग्निं स्तौमि प्रातःकालेषु ॥ (४)

स्तविष्यामि त्वामहं विश्वस्यामृत भोजन।
अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥

[1] What is found in the Nirukta is भाऋजीकः प्रसिद्धभाः (नि. ६. ४).

[2] व्यु mostly worm-eaten; from the bit that remains it looks as if what was written is only वु. Read व्युष्टिषु यज्ञानां

[3] Read अतिथिरतेर्गत्यर्थात्.

[4] Cf. अतिथिरभ्यतितो गृहान् भवति (नि. ४. ५).

[5] The र in रे completely worm-eaten. Folio 36*a* ends with ध्वरे.

[6] Read देवानभियातुं.

[7] Some words omitted.

स्तविष्ठामि[1] । स्तोष्यामि त्वामहं विश्वस्य भोजन । पालनमशनं वा भोजनः[2] । अमृताग्ने[3] तातारमभृतं[4] यज्ञियं[5] यजिष्ठं हव्यवाहन ॥

स्तविष्यामि । स्तोष्यामि त्वामहं अमृत सर्वस्य पुरुषस्य भोजयितारम् । अग्ने रक्षितारममृतं यज्ञार्ह यष्टृतमं हविषां वोढः ॥ (५)

**सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः ।**
**प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनम् ॥**

सुशंसः । सुशंसो भव[6] गृणते[7] युवतम । मादयितृज्वाल[8] स्वाहुतः । प्रस्कण्वस्य । कण्वपुत्रः प्रस्कण्वः । स चायं घोरस्य[9] कण्वस्य पुत्रः प्रकरणात् । न त्वाजमीळ्हस्य[10] । तस्य वर्धन्तायुजदीवनार्थं[11] स्तुहि परिचर वा दैव्यं जनमिति ॥

[1] Read स्तविष्यामि.

[2] Perhaps to read भोजनम्.

[3] Read अमृत । अग्ने. First written अमृतान्न. Then ए mark written below आ mark of ता with a cross above the line between ता and न.

[4] Read त्रातारममृतं.

[5] This is the meaning of मियेध्य in the vocative case and so must be यज्ञिय.

[6] All the letters till भव badly injured, the leaf being worm-eaten. From the context and from the bits that remain, the letters are deciphered. Note the etymology from the root भू.

[7] त in ते completely gone, as the corner of the leaf is broken.

[8] यि looks more like धि than यि.

[9] Read घौरस्य.

[10] ळ्ह written ळ्ह.

[11] Read वर्धयन्नायुर्जीवनार्थं.

सुशंसो बोधि । सुस्तवो बुध्यस्व स्तुवते युवतम मादयितृजिह्व स्वाहुतः । प्रस्कण्वस्य मम जीवनाय आयुर्वर्धयन् नमस्कुरु सर्वान् देवान् ॥ (६)

होतारं विश्ववेदसं सं हि त्वा विश इन्धते ।
स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥
सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः ।
कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर ॥

होरसि[1] । द्रूच एकार्थः । त्वां कण्वपुत्राः समिन्धते । स त्वं तेषां एतानावह[2] । द्विरूपोऽग्निर्यष्टा यष्टव्यश्च ॥

होतारं विश्ववेदसम । होतारं सर्वधनं समिन्धते हि त्वां विशः । स त्वमावह पुरुहूत प्रचेतसोऽग्ने देवानिह क्षिप्रम् ॥ (७)

सवितारम् । सवितृप्रभृतीनग्निं च यष्टव्यं रात्र्या व्युष्टिषु त्वमावह । कण्वपुत्रा अभिषुतसोमास्त्वां दीपयन्ति हव्यवाहं स्वध्वर ॥ (८)

पतिर्ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ।

स्पष्टोत्तरा[3] । स्वत्रशः[4] सूर्यदृशः । स्वरादित्यो भवति स्वरेर्गत्यर्थात् । सूपसृष्टादत्तेरिति[5] यास्क[6] इति ॥

[1] Read होतारम् ।

[2] Read एतानावह.

[3] The verse number 9.

[4] Read स्वर्दृशः

[5] Read सूपसृष्टादर्तेरिति.

[6] Cf. स्वरादित्यो भवति । सु अरणः । सु ईरणः । स्वृतो रसान् । स्वृतो भासं ज्योतिषाम् । स्वृतो भासेति वा (नि. २. १४).

पतिर्हि। पतिर्हि यज्ञानां अग्ने दूतो विशामसि। स उषसि प्रबुद्धानावह सोमपानाय देवानद्य सर्वस्य द्रष्टॄन् ॥ (९)

**अग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः।**
**असि ग्रामेष्ववि॒ता पुरोहितोऽसि यज्ञेषु मानुषः॥**

अग्ने। अग्ने पूर्वा अनूषसो विभावसो गतासूषस्स्वपि दीडे[1]। विश्वस्य दर्शनीय[2]। त्वमसि ग्रामेषु[3] विता[4]। पुरोहितो हविर्यज्ञेष्वपि चारण्येष्वसि यज्ञेषु सौमिकेषु। मानुषो मनुष्यहित इति॥

अग्ने पूर्वा। अग्ने गतास्वप्युषस्सु विभावसो प्राज्वलः सर्वस्य दर्शनीयः। स त्वं ग्रामेष्वसि गृहेषु पुरोनिहितो रक्षिता। आरण्येषु च यज्ञेषु पुरोनिहितो मनुष्यहितः॥ (१०)

**नि त्वा यज्ञस्य साधनमग्ने होतारमृत्विजम्।**
**मनुष्वद्देव धीमहि प्रचेतसं जीरं दूतममर्त्यम्॥**

नि त्वा। यथा त्वां मनुन्निदधे[5] तथा निधीमहि त्वां जीरम्। जीरः क्षिप्रो जरतेः। कात्यायस्वाह[6] रकिन्त्यः[7] प्रसारणे जीर इति[8]॥

[1] I am not sure what is written. The second letter looks like डे. Perhaps the scribe was writing दीदेथ.

[2] Read दर्शनीयः

[3] Read यामेषु or सङ्ग्रामेषु.

[4] Read अविता.

[5] Read मनुर्निदधे.

[6] Reading uncertain.

[7] The first letter is mostly worm-eaten. It may be र or न. The word not intelligible.

[8] The explanation not clear.

नि त्वा यज्ञस्य । निधीमहि त्वां यथा मनुर्निदधे क्षिप्रं तद्वदिति[1] ॥ (११)

**यद्देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम् ।**
**सिन्धोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजन्ते अर्चयः ॥**

यद्देवानाम् । यदा देवानां मित्रमहस्संहतदीप्ते । मित्रो देद्यतेः[2] । मन्त्रैर्वा[3] मंहनीय । यदि वा मित्राणां पूजयितः । अन्तरो यासि दूत्यं दूत्यं कर्तुं देवं प्रति मध्येन गच्छंस्तथोक्तः । परोक्षश्शेषः । सिन्धोरिव प्रस्वनितास्सञ्जन्त[4] इवोर्मयः । अग्नेर्भ्राजन्ते दीप्तयः ॥

यद्देवानाम् । यदा देवानां मित्राणां पूजयितः मनुष्यैः पुरोहितो देवानां मनुष्याणां मध्ये वर्तमानो यासि दूत्यम् । तदानीं समुद्रस्येव प्रकृष्टशब्दा वीचयः तवाग्ने भ्राजन्ते दीप्तयः ॥ (१२)

**श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।**
**आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥**

श्रुधि । श्रुत्कर्ण इत्युदारं ब्रुवते[5] । श्रुधि श्रुत्कर्ण । वह्निभिरन्यैरग्निभिर्देवैश्चाग्ने सयावभिः । आसीदञ्चिति[6] स्पष्टम् । येऽध्वरं प्रातरागच्छन्ति ते प्रातर्यावाण इति ॥

[1] This is all that is found in the MS. in the Adyar Library.
[2] Read मेद्यतेः
[3] Perhaps to read मित्रैर्वा.
[4] Perhaps to read प्रस्वनिताश्शब्दायन्त.
[5] Perhaps to read ब्रूते.
[6] Read आसीदन्त्विति.

श्रुधि श्रुत्कर्ण । शृणु श्रवणपरकर्ण हविषां वोढृभिरन्यैः त्वया सहैकगमनैर्देवैः यज्ञं च प्रातर्गच्छद्भिः अस्मिन् बर्हिषि आसीदन्तु मित्रोऽर्यमा चेति ॥ (१३)

शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।
पिबतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥

शृण्वन्तु । शृण्वन्त्विमं मरुतः शोभनदानाः अग्निजिह्वाः सत्यस्य यज्ञस्य वा वर्धयितारम्[1] । पिबत्विति स्पष्टम् ।

अश्विभ्यामुषसा[2] सजूः (ऋ. वे. ५. ५१. ८)

इति चतुर्थेष्टेके[3] न स्पृष्टः देवताभेदात् । तद्धि वैश्वदेवं सूक्तम् । अग्नेर्जिह्वया ये पिबन्ति सोमं तेऽग्निजिह्वा इति[4] ॥

शृण्वन्तु स्तोमम् । त्वया हूयमानाः शृण्वन्तु स्तोमं मरुतः शोभनदानाः अग्न्यास्या यज्ञस्य वर्धयितारः । पिबतु च सोमं वरुणो धृतकर्मा अश्विभ्यामुषसा च सहितः ॥ (१४)

---

[1] Read वर्धयितारः

[2] अश्विभ्या ends the line. The next is the last line. Since the end of the leaf is narrow, it begins only one inch away from the margin.

[3] Read चतुर्थेऽष्टके.

[4] Here there is the figure 12 to mark the end of the sūkta.

त्वम॑ग्ने॒ वसूँ॑रि॒ह रु॒द्राँ आ॑दि॒त्याँ उ॒त ।
यजा॑ स्वध्व॒रं जन॒ं मनु॑जातं घृत॒प्रुष॑म् ॥

त्वमग्ने । त्वमग्ने वस्वादीनिह यज । तदेवैकवदाह[1] । यजा स्वध्वरमिति । मनुजातो मनुष्येषु यो जज्ञे प्रादुर्भवति । घृतमुदकं च यः प्रेरयति ॥

त्वमग्ने वसून् । त्वमग्ने अस्मिन् यज्ञे वस्वादीन् यज । तद्व्यतिरिक्तमपि दैव्यं जनं सुयज्ञं मनुष्येषु प्रादुर्भवन्तं घृतं प्रति गन्तारम् ॥ (१)

श्रु॒ष्टी॒वानो॒ हि दा॒शुषे॑ दे॒वा अ॑ग्ने॒ विचे॑तसः ।
तान् रो॑हिदश्व गिर्वण॒स्त्रय॑स्त्रिंशत॒मा व॑ह ॥

स्पष्टोत्तरा[2] । श्रुष्टीवान उदाराः । श्रुष्टिर्दानम् । श्रुषिः प्रेरणार्थः ।

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः (ऋ. वे. २. ३८. २)

इति । शाठ्यायनकं तु वाते वा + स्य[3] श्रुष्टयो यदच्चय[4] इति । विचेतसः सुमतयः ॥

श्रुष्टीवानो हि । क्षिप्रसंभक्तारो हि दाशुषे देवा अग्ने सुमतयः । तान् रोहिदश्व गीर्भिर्वननीय इहावह त्रयस्त्रिंशत्संख्याकान् ॥ (२)

[1] After तदेवैक the letter ह written and scored off. Then व written. Folio 36*b* ends with तदेवैकव. The letter द in the next leaf partly worm-eaten.

[2] The verse No. 2.

[3] After वाते वा a letter completely worm-eaten. Perhaps वाते वाग्रस्य ; not clear.

[4] Read यदर्चय.

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥
महिकेरव ऊतये प्रियमेधा अहूषत ।
राजन्तमध्वराणामग्निं शुक्रेण शोचिषा ॥
घृताहवन सन्त्येमा उ षु श्रुधी गिरः ।
याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वा ॥

स्पष्ट एवोत्तरस्तृचः[1] । महिप्रतो[2] महाकर्माः[3] । महिकेरवश्च । केरुः कर्म करोतेः । प्रियमेधा[4] नाम ऋषिः । तत्कुलीनः कण्व इत्येकम् । अन्यकुलेन[5] इत्यपरम् । प्रिययज्ञाः[6] स एव नरं प्रियमेधा[7] इति तृतीयमिति ॥

प्रियमेधवत् । प्रियमेधादिचतुष्कस्येव महाकर्मन् प्रस्कण्वस्यापि श्रृणु ह्वानमिति ॥ (३)

महिकेरव । महाकर्माण ऊतये प्रियमेधः त्वामहूषत । ईशानं यज्ञानां अग्निं शुक्रेण तेजसा ॥ (४)

घृताहवन । प्रियघृतहविष्क भजनशील इमाः स्तुतीः श्रृणु । याभिः कण्वपुत्रा रक्षणाय त्वां हवन्ते ॥ (५)

[1] Read एवोत्तरस्तृचः The verses 3-5.

[2] Read महिव्रतो.

[3] Read महाकर्मा

[4] Read प्रियमेधो.

[5] Read अन्यकुलीन.

[6] Perhaps to read प्रिययज्ञः

[7] धा mostly worm-eaten. Not clear. Perhaps something missing. Perhaps to read नरः प्रियमेध.

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः ।
शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥

त्वाम् । त्वां चित्रश्रवस्तम ते सर्वै[1] भवन्ते[2] ये मनुष्येषु जाताः । शोचन्त इव ह्येतस्य समिद्धस्य रश्मयः केशा इवेति वाजसनेयकम्[3] ।

इळायास्त्वा पदे वयम् (ऋ. वे. ३. २९. ४)

इत्यत्र अग्ने हव्याय वोळ्हवे इति[4] न विस्रति[5] । तत्र जातवेदःप्रकृतत्वादग्निरप्रधान[6] इति ॥

त्वां चित्रश्रवस्तम । चित्रेण श्रवसा श्रुतेन योऽतिशेते तं त्वां स्तुतिभिर्मनुष्येषु जाता हवन्ते ज्वालाकेशं बहुप्रिय अग्ने हविषो वहनाय ॥ (६)

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् ।
श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ॥

[1] Read सर्वे.

[2] Read हवन्ते.

[3] The printed edition of S'. B. has शोचन्तीव ह्येतस्य केशाः समिद्धस्य (श. ब्रा. १. ४. १. ३८)

[4] The last pāda in R. V. 3. 29. 4.

[5] Read विसृजति.

[6] जा is completely gone. Only a conjecture. तवेद is in tact. Then a few syllables completely lost. A few bits alone remain. The visarga and प्रकृतत्वादग्नि only a conjecture from the bits that remain. रप्रधान is in tact.

नि त्वा । स्पष्टा । यस्सर्वत एवात्यन्तं पृथुस्सप्रथस्तमः[1] । दिविष्टष्व-ध्वरेषु[2] । दिवसा वा दिष्टयो[3] दिवादित्येन प्रेरिताः[4] ॥

कुरुःगस्य[5] दिविष्टिषु (ऋ. वे. ८. ४. १९)

इति ॥

नि त्वा होतारम् । निदधिरे त्वां होतारं ऋत्विजं अतिशयेन धनानां लम्भयितारं श्रुत्कर्णं सर्वतः पृथुतमं मेधाविनोऽग्ने दिवसागमनेषु अहर्मुखेषु ॥ (७)

**आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः ।**
**बृहद्भा बिभ्रतो हविरग्ने मर्ताय दाशुषे ॥**

आ त्वा । आच्यावयन्ति त्वा[6] सुतसोमा विप्रा अन्नं प्रति । बृहन्तं भासमानां[7] बृहन्तो भासमाना इति वा । धारन्ते[8] हविरम्नय इति[9] स्पष्टम् ॥

आ त्वा विप्राः । आगमयन्ति त्वामभिषुतसोमा मेधाविनः सोमलक्षण-मन्नमभि । बृहतीर्दीप्तीर्हविश्च धारयन्तोऽग्ने मर्त्याय यजमानाय होतारः ॥ (८)

[1] Read पृथुस्स सप्रथस्तमः

[2] Read दिविष्टिष्वध्वरेषु.

[3] Read दिविष्टयो.

[4] There are only two small vertical strokes after ता and not a visarga.

[5] Read कुरुङ्गस्य.

[6] Better read त्वां.

[7] Read भासमानं.

[8] Read धारयन्तो.

[9] Read हविरग्ने इति.

प्रा॒त॒र्याव्ण॑ः सहस्कृत सोम॒पेया॑य सन्त्य ।
इ॒हाद्य दैव्यं॒ जनं॑ ब॒र्हिरा सा॑दया वसो ॥

उत्तरा च[1] । प्रातरागच्छतो देवान् बलेन मधीतस्सहस्तुतः[2] । इहाद्य दैव्यं जनमित्येकवद्वाक्यस्योपसंहार इति ॥

प्रातर्याव्णः । प्रातर्याव्णो देवान् मथनबलेन कृत सोमपानार्थं भजनीय अस्मिन् यज्ञे बर्हिरासादय दैव्यं जनं वासयितः । पूर्वार्धस्य संग्रह उत्तरः ॥ (९)

अ॒र्वाञ्चं॒ दैव्यं॒ जन॒मग्ने॒ यक्ष्व॒ सहू॑तिभिः ।
अ॒यं सोम॑ः सुदानव॒स्तं पा॑त ति॒रोअ॑ह्न्यम् ॥

अर्वाञ्चम् । इतोमुखं दैव्यं जनं अग्ने यज समानाह्वानैस्सह । तांश्च प्रत्याह अयं सोम इति । यस्सोमं[3] पूर्वेद्युभिषितो[4] परेद्युः प्रातर्भूयते[5] तं तिरोअह्न्यं ब्रुवते । अह्नि तिरोहितेऽप्यास्त इति[6] ॥

अर्वाञ्चं दैव्यम् । अस्मदभिमुख दैव्यं जनं अग्ने यज समानाह्वानैः तत्तदनुचरैः । सहायदेवानाह । अयं सोमोऽभिषुतः शोभनदानाः । तं पिबत पूर्वस्मिन्नहनि तिरोभूते जातम् । अथवा प्राप्तेऽहनि प्रादुर्भूतं इति ॥ (१०)

---

[1] स्पष्ट to be taken from the commentary on the previous verse. उत्तरा is verse No. 9.

[2] Read मथितस्सहस्कृतः

[3] Read यस्सोमः

[4] Read पूर्वेद्युरभिषुतः

[5] Read प्रातर्हूयते.

[6] A few words omitted. Here there is the figure 13 to mark the end of the sūkta.

**एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥**

एषो उषाः । एषो उषा अपूव्या[1] मुख्या । देवानां व्युच्छति प्रिया सर्वेषां दिवः सकाशात् । स्तौमि वामहं तत्राश्विनौ बृहत् बृहता स्तोत्रेण ॥

एषो उषाः । यतः पूर्वमन्यो न प्रादुर्भवति सैषा अपूर्व्या प्रादुर्भवति दिवो दुहितृत्वात् प्रिया । तत्राहं बृहता स्तोत्रेण वामश्विनौ स्तौमि भवतोः काले ॥ (१)

**या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धिया देवा वसुविदा ॥**

या । यौ दर्शनीयौ सिन्धुमातृकौ । सूर्याचन्द्रमसौ हि तौ । तौ चाद्भ्य उदेतः । मनोतरा मनुमत्तरौ रधीणाम्[2] । धिया कर्मणा । देवौ वसूनां लम्भकौ । तौ स्तुष इति ॥

या दस्रा । यौ दर्शनीयौ नदीनां निर्मातारौ धनानामनुमन्तारौ कर्मणा देवौ वसूनां लम्भयितारौ स्तौमि ॥ (२)

**वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि । यद्वां रथो विभिष्पतात् ॥**

वच्यन्ते । उच्यन्ते युवयोः स्तुतयो जूर्णायां जीर्णायाम् । अधि लिष्टपि[3] । विष्टपो विष्टभ्नाति भूतानीति । यस्मिन् काले युवयोः[4] रथोऽश्वैः पततीति ॥

[1] Read अपूर्व्या.

[2] Read रयीणाम्.

[3] Read अधि विष्टपि. The letter ष्टि is completely worm-eaten.

[4] Folio 37*a* ends with युव. From भूतानीति, the corner of the leaf is very much damaged, being worm-eaten. The letters can scarcely be made out.

वक्ष्यन्ते वाम् । उच्यन्ते युवयोः स्तोत्राणि जीर्णायां रात्रौ अपररात्रे । विष्टब् रात्रिः । विष्टभनाय । अस्मिन् काले युवयोः रथोऽश्वैः पतति ॥ (३)

**हविषा जारो अपां पिपर्ति पपुरिर्नरा । पिता कुटस्य चर्षणिः ॥**

हविषा[1] । हविषाग्नो[2] हुतोनात्मनिस्संक्रान्तेन[3] । अपामुषसामपामेव वा जरयिता आदित्यः पूरयति देवान् नरा । पपुरिः[4] पूरकः । पिता सर्वस्य । कूटं[5] करोतेः कर्मेति + +[6] । कर्मणो + +[7] ॥

हविषा जारो । हविषा वां जरयिता तेजसां नेतारौ पूरयति पूरयिता कृतस्य कर्मणः पालयिता द्रष्टा आदित्यः । तत्र वां स्तौमीति ॥ (४)

**आदारो वां मतीनां नासत्या मतवचसा । पातं सोमस्य धृष्णुया ॥**

[1] ह mostly worm-eaten.

[2] Read हविषाग्नौ.

[3] Read हुतेनात्मनि संक्रान्तेन.

[4] प completely and the other two letters mostly worm-eaten.

[5] Read कुटं.

[6] कर्मेति mostly worm-eaten. Then two syllables completely gone. It must be यास्कः Cf. N. 5. 24.

[7] कर्मणो very much injured; can scarcely be made out. Then two letters completely gone. They are द्रष्टा. Here there is आदाराः प्रेरको यः which is the beginning of the commentary on the next verse and then from the end of the commentary on the third verse there is repetition up to आदाराः । आदाराः प्रेरको यः I give the entire passage here This repetition is not injured. आदाराः प्रेरको यः युवयो रथोऽश्वैः पततीति भविषा । हविषाग्नौ हुतेनात्मनि संक्रान्तेन अपामुपसामपामे वा जरयिता आदित्यः पूरयति देवान् नरौ । पपुरिः पूकरः । पिता सर्वस्य । कूटं करोतेः कर्मेति यास्कः । कर्मणो द्रष्टा ।

आदारः । आदारः प्रेरको धः[1] युवयोः सुमतीनाम् । नासत्यौ प्रियः-स्तोत्रो[2] । तं पिबतं सोमं धर्षकं तीव्रत्वादिति ॥

आदारो वाम् । तीव्रत्वादादारको युवयोर्बुद्धीनां सोमो नासत्यौ प्रिय-स्तोत्रौ । तं सोमं पिबतं मनसो धर्षणम् ॥ (५)

**या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः । तामस्मे रासाथामिषम् ॥**

या नः । यदन्नमस्मान् पारयेत् अश्विनान्द्योतिष्मूत्तमो[3] दारिद्र्यं तिरः तदन्नमस्मभ्यन्दत्तमिति[4] ॥

या नः पीपरत् । यदन्नमस्मानुज्वलमश्विनौ दारिद्र्यलक्षणात्तमसोऽन्यत्र पारयति तदन्नमस्मभ्यं दत्तम् ॥ (६)

**आ नो नावा मतीनां यातं पाराय गन्तवे । युञ्जाथामश्विना रथम् ॥**

आ नः । आयातमस्मात्[5] स्तुतीनां पारं गन्तुं नावा । अस्त्यश्विनोर्नौः यिया[6] सिन्धुमति तरतः । युञ्जाथामश्विना रथम् ।

उदीथामृतायते[7] (ऋ. वे. ८. ७३. १)

[1] Read यः

[2] Read प्रियस्तोत्रौ.

[3] Read अश्विनौ ज्योतिष्मत्तमौ.

[4] तद and स्मभ्य partly and न्द mostly worm-eaten.

[5] आया mostly and त completely worm-eaten. Read आयातमस्मान्.

[6] Read यया.

[7] Read उदीराथामृतायते.

इत्यत्र युञ्जाताथां[1] पादो[2] न स्पृष्टः। तत्राख्यातस्यर्थप्रकारे[3] भिन्नः। स हि पूर्वपादस्य पञ्च[4] इति ॥

आ नो नावा। आयातमस्माकं भवतोर्नावा स्तोत्राणां पारं गन्तुम्। तत ऊर्ध्वं गमनार्थं रथं च युञ्जाथामिति ॥ (७)

**अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः। धिया युयुज्र इन्दवः ॥**

अरित्रम्। अर्तेररित्रं[5] नौरे[6] नौरिव। तमन्तरिक्षादपि[7] पृथु भवती[8]। तिर्थे[9] सिन्धूनां रथश्चोपतिष्ठते स्थलगमनाय। कर्मणा च युज्यन्ते भवद्भ्यं[10] सोमाः ॥

अरित्रं वाम्। समुद्रगमनसाधनं जलपात्रं वां दिवोऽपि पृथु भवति। अथ जलानामुत्तरणदेशे रथ उपतिष्ठति। कर्मणा नानाविधेन यज्ञे सोमाश्च भवद्भ्यां युज्यन्ते ॥ (८)

[1] युञ्जाथां.

[2] Add इति before पादो. Read युञ्जाथां. This is the second pāda in R. V. 8. 73. 1.

[3] ख्या mostly worm-eaten. Read तत्राख्यातस्यार्थप्रकारो.

[4] Read प्रपञ्च.

[5] रि partly worm-eaten.

[6] Not wanted.

[7] There is some mark between म and न्त, which looks like the beginning of न्द. The long mark in क्षा and दपि mostly worm-eaten. Read तदन्तरिक्षादपि.

[8] Read भवति.

[9] Read तीर्थे.

[10] Read भवद्भ्यां.

**दिवस्कण्वास इन्दवो वसु सिन्धूनां पदे । स्वं वव्रिं कुह धित्सथः ॥**

दिवः[1] प्रादुर्भवन्ती[2] दीप्ता रश्मयः । वासकं णषस[3] ज्योतिरपां स्थानेऽन्तरिक्षे प्रादुर्भवति । अस्मिन् काले स्वं रूपं क्व धातुमिच्छथः । वप्रव्रूणोते[4] । तदश्विनौ पृच्छतेति कण्वानां मन्त्रणमिति ॥

दिवस्कण्वासः । दिवः पतन्ति हे कण्वा दीप्ता रश्मयः । वासकमादित्याख्यं तेजः अपां स्थाने प्रादुर्भवति । तत्र युवामश्विनौ स्वं रूपं कस्मिन् निधातुमिच्छथः ॥ (९)

**अभूदु भा उ अंशवे हिरण्यं प्रति सूर्यः । व्यख्यज्जिह्वयासितः ॥**

अभूत् । अभूद्दीप्तिरौषसाय रश्मये । हिरण्यसदृशश्चासि[5] सूर्यः । प्रकाशयति चाग्निज्वालया[6] कृष्णवर्णः उषसमग्निहोत्राय समिद्धः ॥

अभूदु भा । अभूद्दीप्तिः रश्मेरनन्तरमुदयवेलायाम् । हिरण्यं प्रत्यासीत् सूर्यः । तत्सदृशोऽभवदित्यर्थः । तदनन्तरं जिह्वया ज्वालया बद्धः प्रकाशयति सर्वं जगत् ॥ (१०)

**अभूदु पारमेतवे पन्था ऋतस्य साधुया । अदर्शि वि स्रुतिर्दिवः ॥**

[1] Pratika not separately given.

[2] Read प्रादुर्भवन्ति. The letter प्रा mostly worm-eaten.

[3] Read कण्वासः

[4] Read वव्रिर्वृणोतेः Cf. N. 2. 9.

[5] Read हिरण्यसदृशश्चासीत्.

[6] Read चाग्निर्ज्वालया.

अभूत् । अभूदु पारं गन्तुं पन्था आदित्यस्य साधुम्[1] । अप्यदर्शि सूर्यस्य स्रुतिः[2] दीप्तिस्सर्तेरिति ॥

अभूदु पारम् । पारं दिशं प्रति गन्तुं उद्युक्तस्यादित्यस्य साधुरभवत् पन्था दिवो मध्ये कश्चन मार्गः । व्यदर्शि येन सूर्यो गच्छति तत् ॥ (११)

**तत्तदिदश्विनोरवो जरिता प्रति भूषति । मदे सोमस्य पिप्रतोः ॥**

तत्तत् । तत्तदश्विनोरुषसि स्तोत्रं भचति[3] यद्यदाभमं कृतं[4] तत्तद्धोता प्रकाशयति रक्षणम् । सोमस्य मदे नॄन् पूरयतोः ॥

तत्तदित् । तत्तदेवाश्विनोः आश्रितविषयं रक्षणं स्तोतालंकरोति प्रकाशयति यद्रक्षणं सोमस्य मदे पूरयतोरभूदिति ॥ (१२)

**वावसाना विवस्वति सोमस्य पीत्या गिरा । मनुष्वच्छंभू आ गतम् ॥**

ववसाना । वर्तमानौ यजमाने सोमपानार्थं स्तुत्यर्थं च । नराविवागतं सुखस्य भावकौ ॥

वावसाना । वसनशीलौ यजमाने सोमपानेन स्तोत्रेण च हेतुना सुखस्य भावयितारौ नरवदिहागतम् । अपि वा मनोरिव यज्ञे ॥ (१३)

**युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् । ऋता वनथो अक्तुभिः ॥**

[1] Read साधुः

[2] Read स्नुतिः

[3] Read भवति.

[4] Not clear. Perhaps to read यद्यदलंकृतं.

युवोः । युवयोरुषा श्रियमनूपचरति[1] परीतो[2] गन्त्वोः । पश्चात् प्रादुर्भवतीत्यर्थः । यद्विवा युवयोः[3] श्रियमावहती[4] । युवां चाक्तुभ्यो रात्रिभ्यो हवींषि कामयेथे । सुसमासार्थत्वात् पूर्वमाख्यातमुदात्तम् । समस्तमनुदात्तमिति ॥

युवोरुषा । युवयोः श्रियमुषा अनूपाचरत् । पश्चाद्युवयोरागच्छति परितो गन्त्रोः । यज्ञान् युवां रात्रिभिर्गच्छन्तीभिः सह संभजथः ॥ (१४)

**उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः ॥**

उभा । उभौ[5] पिबतमश्विनौ[6] सोममभौ[7] च नः शर्म यच्छतम्[8] । अपिद्रक्षकास्तेषु[9] या ऊतयो भवन्ति ।

यथा तोकाय[10] रुद्रियम् (ऋ. वे. १. ४३. २)

इति[11] । यदि वा न विदारयति यास्ताभिरिति[12] ।

[1] प completely worm-eaten.

[2] Read परितो.

[3] Folio 37*b* ends with युव The ए mark in यो in the next leaf gone, as the corner is broken.

[4] Read श्रियमावहति.

[5] उ mostly worm-eaten.

[6] म mostly worm-eaten.

[7] Read सोममुभौ.

[8] च्छतम mostly worm-eaten.

[9] Not clear. The text has the word अच्छिद्रयाभिः

[10] तो mostly worm-eaten.

[11] I am not sure of the relevancy of this quotation here.

[12] Here there is the figure 14 to mark the end of the sūkta.

इत्थं निरुक्तः प्रथमाष्टकस्य तृतीय आसीदनुचाक[1] एषः ।
पश्यन्तु तं सूक्ष्मदृशो[2] द्विजाग्र्या ये शाब्दिका[3] ये च निरुनिष्ठा[4] ॥

उभा पिबतम् । उभौ सोममश्विनौ पिबतम् । उभौ च अस्मभ्यं सुखं यच्छतं रक्षणपरैर्गमनैरिति ॥ (१९)

इत्थं तृतीयमध्यायं व्याकरोत् प्रथमेऽष्टके ।
विश्वामित्रकुले जातो माधवः सुन्दरीसुतः ॥

---

## तृतीयोऽध्यायः

---

[1] Read आसीदनुवाक.

[2] श in शो completely worm-eaten.

[3] The आ mark in शा and the whole of ब्दि except द worm-eaten.

[4] Read निरुक्तनिष्ठाः Here there is the colophon तृतीयोऽध्यायः and हरिः ओम् .

# चतुर्थोऽध्यायः[1]

अयं वां मधुमत्तमः सुतः सोमं ऋतावृधा ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥

अं वाम्[2] । स्पष्टार्था ।

अयं वां मित्रावरुणा सुतस्सोम ऋतावृधा (ऋ. वे. २. ४१. ४)

इति पादो न स्पृष्टः । तत्र ह्यूतं[3] सत्यम् । इह ऋतं[4] जलमिति ।

अवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे (ऋ. वे. ८. ३५. २२-२४)

इति न स्पृष्टः । तत्र हि रत्नमन्यं[5] जिघृक्षितं वाक्यसंयोगात् । अपिवा दाशुषेऽमभ्यमिति[6] तत्रार्थः । इह तु यजमानोपर्याय[7] इति ॥

अयं वाम् । प्रस्कण्वः । अयं युवयोः सुतः सोमः । तं पिबतमिति[8] ॥ (१)

[1] This is not in the manuscript.
[2] Read अयं वाम्.
[3] Read ह्यृतं.
[4] ऋ not at all legible. Only a conjecture.
[5] Read रत्नमन्यत्.
[6] Read दाशुषेऽस्मभ्यमिति.
[7] Read यजमानपर्याय.
[8] This is all that is found in the Adyar Library MS.

त्रिबन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना ।
कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम् ॥

स्पष्टैवोत्तरा[1] ।

निमिषश्चिज्जपीयसा[2] रथेना धातमश्विना[3] (ऋ. वे. ८.७३.२)

इति न सृष्टः । निमिषश्चिज्जवीयसेति विशेषणे तात्पर्यात् ।

त्रिबन्धुरेण तृवृता[4] रथेन (ऋ. वे. ८. ८५. ८)

इत्यत्रापि न सृष्टा[5] । मध्वस्सोमस्य पीतये इति[6] पानार्थतायां आख्यातार्थस्य[7] पर्यवसानादिति ॥

त्रिबन्धुरेण । त्रयो यस्य बन्धुराः तेन त्रिकोणेन सुरूपेण रथेन आयातमश्विनौ । कण्वासो युवयोः स्तोत्रं कुर्वन्ति यज्ञे । तेषां सुष्ठु शृणुतं ह्वनाम् ॥ (२)

अश्विना मधुमत्तमं पातं सोममृतावृधा ।
अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ॥

[1] The verse No. 2.
[2] Read निमिषश्चिज्जवीयसा.
[3] Read यातमश्विना.
[4] Read त्रिवृता.
[5] Read सृष्टः
[6] The last pāda in R. V. 8. 85. 8.
[7] र्थ completely worm-eaten.

अश्विना । सोमपानानन्तरं दाश्वांसं[1] धनेन सगोपगच्छतं[2] इति । पातं सोममृतावृध इत्ययं पादं[3] पञ्चकृत्वः श्रूयते[4] ।

गृणाना जमदग्निना (ऋ. वे. ३. ६२. १८)

इत्यत्र न स्पृष्टः । तत्र[5] ह्यश्विनोरश्रवणादृतावृधेति पदं न नैघण्टुकम् । किन्त्वश्विनोस्त्वाङ्गाभूतमिति[6] ।

अश्विना मधुमत्तमम् । सोमपानानन्तरं दाश्वांसं धनेन सहोपागच्छत-मिति ॥ (३)

**त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम् ।**
**कण्वासो वां सुतसोमा अभिद्यवो युवां हवन्ते अश्विना ॥**

त्रिषधस्थे । यस्मिन् बर्हिषि त्रीणि सधस्थानि भवन्ति तस्मिन् त्रिधातुनि[7] बर्हिष्यासीनौ । त्रिस्थान + र्थकारो + +[8] ।

त्रिषधस्थस्ततरुषः (ऋ. वे. ६. १२. २)

[1] Read दाश्वांसं.

[2] Read सहोपगच्छतं.

[3] Read पाद:

[4] R. V. 1. 47. 3; 5; 3. 62. 18; 7. 66. 19; 8. 87. 5. श्र in श्रू completely worm-eaten.

[5] त्र mostly worm-eaten.

[6] This stanza too is not fully explained, being clear. Yet there is no statement स्पष्टा.

[7] I am not sure of the relevancy of this word here. Perhaps the scribe wanted to write त्रिषधस्थे. Or perhaps what is wanted is यस्मिन् बर्हिषि त्रीणि सधस्थानि धातूनि भवन्ति तस्मिन् त्रिधातुनि.

[8] After त्रिस्थान a letter is mostly worm-eaten. It looks like शो. Then र्थ follows. After कारो two letters are completely gone. It may be परि. The word not clear.

इति । विश्ववेदसा मधुना यज्ञमिमंस्तंचकम्[1] । कण्वासो बां[2] सोमा[3] अभिगतदीप्तयो भवन्तेऽश्विनौ[4] । पुनर्युवामिति पूरकम् ।

जनासो वृक्तबर्हिषः (ऋ. वे. ८. ५. १७)

इत्यत्र न पूरकम् । अतो न व्यस्तादिति[5] ॥

त्रिषधस्थे । यस्मिन् बर्हिषि त्रयाणां धातूनां सहावस्थानं तत्रासीनौ सर्वज्ञौ मधुना इमं यज्ञं सेक्तुमिच्छतम् । कण्वा वामभिषुतसोमाः स्तोत्रादभिषवाच्च अभिगतदीप्तयोऽश्विनौ हवन्ते । पादान्तरे वामिति प्रयुक्तम् ॥ (४)

**याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।**
**ताभिः ष्व१स्माँ अवतं शुभस्पती पातं सोममृतावृधा ॥**

याभिः । स्पष्टार्था[6] । अभीष्टयोऽभीष्टा[7] ऊतयः । कर्तरि चेदन्तोदात्तम् ।

जिगायोशिविभः[8] पृतना अभिष्टिः (ऋ. वे. ३. ३४. ४)

गत्यर्थश्च तत्रेषिरिति ॥

याभिः कण्वम् । यैः कण्वमभिगमनैः प्रावतं युवमश्विनौ तैरस्मानपि रक्षतमुदकस्य पती । पिबतं च सोमं यज्ञस्य वर्धयितारौ । सुः पूरणः ॥ (५)

[1] Perhaps to read यज्ञं सिमिक्षतम्.
[2] Read वां.
[3] Read सुतसोमा.
[4] Read हवन्ते.
[5] Read व्यसृजदिति.
[6] याभिः । स्पष्टा mostly worm-eaten.
[7] Read अभिष्टयो.
[8] Read जिगायोशिग्भिः

सुदासे॑ दस्रा॒ वसु॒ बिभ्र॑ता॒ रथे॒ पृक्षो॑ वहतमश्विना ।
र॒यिं स॑मु॒द्रादु॒त वा॑ दि॒वस्पर्य॒स्मे ध॑त्तं पुरु॒स्पृह॑म् ॥

सुदासे । सुदानः[1] कल्याणदानः पैजवनो राजा । तस्मै द्रस्रौ वसु बिभ्रतौ रथे पृक्षोभौ वहतमश्विनौ[2] छन्दोन + रायेर्थोऽडभाव[3] इत्युक्तम् । रगिमन्तरिक्षात्[4] उत वा दिवस्परि आहृत्यास्मास्वपि धत्तं पुरुस्पृहं बहूनां स्पृहणीयंमिति[5] । दस्रा वसु बिभ्रता इति चतुष्कपादमध्ये[6] सृष्टः । पातं सोममृतावृधेति सम + + + + पदान्तरितेन[7] योगात्तदर्थत्वाच्च[8] । स चायन्यायः[9] सर्वत्रानुसन्धेय इति ॥

[1] Peahaps better to read सुदासः before सुदानः

[2] श्वि mostly worm-eaten. Read पृक्षोऽन्नं वहतमश्विनौ or पृक्षोऽन्नमवहतमश्विनौ.

[3] छन्दो not at all legible. Only a conjecture. Then there is न. There is space for another letter. But the corner broken and the letter completely lost. Folio 38*a* ends here and राये is what begins the next page. The word not clear. Perhaps there is some reference to छन्दोनुक्रमणी. The point is about the absence of the augment अ in वहतम्. Something is left out.

[4] Read रयिमन्तरिक्षात्.

[5] Read स्पृहणीयमिति.

[6] Not clear.

[7] पातं सोममृत can be made out. The आ mark in त and वृधेति only a conjecture from the context. Then सम is just decipherable. Then there is an ए mark; the consonant may be प. Then about 3 letters completely lost. दा is quite clear. पा before that can just be made out. न्त is completely lost; only a conjecture. रि is clear and the line ends. तेन is in the next line and in tact.

[8] गात्तदर्थ mostly worm-eaten. Passage not clear.

[9] Read चायं न्यायः

सुदासे दत्त्रा। पैजवनाय सुदासे दर्शनीयौ धनं रथे त्रिम्रतावश्विनौ अन्नं च आवहतम्। अस्मभ्यमप्यन्तरिक्षाद्दिवो वा आहृत्य बहुभिः स्पृहणीयं रयिं धत्तम्॥ (६)

**यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे।**
**अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः॥**

यन्नासत्या। यदि नासत्यौ दूरे भवथः। यद्वा भवथोऽन्तिके[1] तुर्वशोऽन्तिकं[2] तूर्णं प्राप्यत इति। स्पष्टः शिष्टः।

उत नो[3] गोमतीच[4] (ऋ. वे. ५. ७९. ८)

इत्यत्र साकं सूर्यस्य[5] रश्मिभिरिति[6] न स्पष्टः। तत्र भि[7] रश्मयोऽभीप्सिताः। इह तु कालोपलक्षणम्।

पतिष्वत्रा[8] उरुचक्षसा (ऋ. वे. ८. १०१. २)

इत्यत्र च न स्पष्टः। तत्रापि तृतीयार्थो विरूप इति॥

यन्नासत्या। यदि नासत्यौ दूरे भवतः यद्वा स्तः अन्तिके ततो रथेन सुवर्तनेन अस्मानागच्छतं सह सूर्यस्य रश्मिभिः उषसि प्रादुर्भूतैः॥ (७)

[1] न्ति mostly worm-eaten.
[2] Pephaps to read तुर्वशे। अन्तिकं.
[3] नो not legible. Partly worm-eaten.
[4] Read गोमतीरिषः
[5] सू mostly worm-eaten. र्यस्य slightly worm-eaten.
[6] भिरि mostly worm-eaten. This is the third pāda of R. V 5. 79. 8.
[7] Read हि.
[8] Read वर्षिष्ठक्षत्रा.

अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप ।
इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥

अर्वाञ्चा । स्पष्टार्था । सप्तिः सपतेः स्पर्शनार्थादिति वैय्याकरणा[1]: । सपणान्दिति[2] नैरुक्ता[3] इति ॥

अर्वाञ्चा वाम् । अभिमुखौ वामश्वौ यज्ञं यैः श्रयन्ति ते सवनानां समीपे वहन्तु अन्नम् । सुष्ठु कुर्वते शोभनदानाय यजमानाय अन्नं संयोजयन्तौ आसीदतं बर्हिर्नेतारौ ॥ (८)

तेन नासत्या गतं रथेन सूर्यत्वचा ।
येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये ॥

तेन । सूर्यत्वक् सूर्यरूपम् । त्वचिः संवरणार्थः ।

अ[4] मे हवं नासत्या (ऋ. वे. ८. ८५. १)

इत्यत्र मध्वः सोमस्य पीतये[5] इति न विष्टः[6] । तत्र हि विधेयं पानं इह त्वनूद्यमिति[7] ॥

[1] The word is dirived in Bhoja's Uṇādi 2. 1. 184 and Kātantra Uṇādi 5. 38.

[2] Read सर्पणादिति.

[3] In Nirukta we have only सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा । सप्त सृप्ता संख्या (नि. ४. २६).

[4] Read आ.

[5] The third pāda in R. V. 8. 85. 1.

[6] Read विसृष्टः or only सृष्टः

[7] मिति partly worm-eaten. The stanza is not actually commented. Perhaps the commentator wanted to say स्पष्टा in the beginning.

तेन नासत्या गतम् । तेन नासत्यावागच्छतं रथेन सूर्यसदृशरूपेण येन बहु धनमूहथुः यजमानाय मधुसदृशं सोमं पातुम् ॥ (९)

उक्थेभिरर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे ।
शश्वत्कण्वानां सदसि प्रिये हि कं सोमं पपथुरश्विना ॥

उक्थेभिः । स्तोत्रशस्त्रैः अर्वाग्ग्रहणार्थं[1] बहुधनौ हन्तिह्वयामहे[2] । सदैव हि कण्वानां सदसि यज्ञे पिधे[3] युवामश्विनौ सोमं पपथः[4] । हिकं सुकं नुकमिति त्रयः क्रमो निहिताः[5] । नुसुहिरेकार्थीभावादि[6] ॥

उक्थेभिरर्वाक् । स्तोत्रशस्त्रैः रक्षणायास्मदभिमुखं बहुधनावश्विनौ निह्वयामहे । नित्यं हि कण्वानां सदसि प्रिये यज्ञेऽश्विनौ युवां खलु सोमं पीतवन्ताविति ॥ (१०)

---

सह वामेन न उषो व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥

[1] Read अर्वाग्रक्षणार्थं.

[2] Not clear. There must be निह्वयामहे. Perhaps to read त्वाम्नि-ह्वयामहे.

[3] Read प्रिये.

[4] Read पपथुः

[5] Not clear. हि mostly worm-eaten. Perhaps to read क्रमे निहिताः

[6] Read नुसुहिभिरेकार्थीभावादिति. There is no figure here to mark the end of the Sūkta.

सह । वामं द्युम्नं रयिरिति धनस्यैव । गुणैर्बहुधा वदः[1] । तत्र वमिः प्रकाशनार्थो[2] द्युम्निद्दीप्त्यर्थो[3] रातिर्दानार्थाः[4] । यद्वा वामन्युम्नं अन्नम्[5] । रयिः पशुरिति वा[6] । दास्वती दानवतीति[7] ॥

सह वामेन । सह वननीयेनास्माकमुषो व्युच्छ दिवो दुहितः । सहानेन महता दीप्तिमता धनेन च देवि दानवती । अन्नं धनं च वाममिति ॥ (१)

अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे ।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥

अश्वावतीः । अश्ववत्यो गोवत्यो[8] विश्व[9] सुष्ठु लंभयित्र्यो भूरि अत्यन्तं च्यवन्त प्रादुर्भूता[10] दिव उषसो निवासाय । अथैकपदाह[11] । उदीरयोष उदीरय[12] प्रति मा सूनृता वाचः । चोदयास्माकं धनं मघोनां धानवतां[13] आढ्यानाम् । इति भिक्षणप्रवृत्तो पदति[14] ॥

[1] Read वादः

[2] ना not legible.

[3] In द्दी, there is no dot between the two द letters to make up र्दी. Read द्युम्निर्दीप्त्यर्थो.

[4] Read रातिर्दानार्थः

[5] I think the reading should be वामं धनम् । द्युम्नं अन्नम् ।

[6] Since the sentence began with यद्वा this इति वा at the end is not necessary.

[7] Here also the verse is not fully commented upon.

[8] Read गोमत्यो.

[9] Read विश्वं. The letter वि mostly worm-eaten.

[10] प्रा mostly worm-eaten.

[11] Read अथैकवदाह.

[12] Repetition of उदीरय not necessary.

[13] Read धनवतां.

[14] Read वदति.

सा नो घोध्यय्यवित्री[1] (ऋ. वे. ७. ९६. २)

इन्यत्र[2] चोद राधो मघानां[3] इति न विसृजति[4]। तत्र दानं चोदनम्। मघवानश्च यजमाना इति ॥

अश्वावतीः। अश्ववत्यो गोमत्यो विश्वस्य धनस्य सुष्ठु वेदयित्र्योऽत्यन्तं दिवश्च्यवन्त दिवसकरणाय। इदानीं मां प्रति सूनृता वाच उदीरयोषः चोदय धनमाढ्यानां तत आहृत्य भिक्षुभ्यः ॥ (२)

उवासोषा उच्छाच्च नु देवी जीरा रथानाम्।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥

उवास। स्युष्टासीत्[5] पूर्वम्। व्युच्छति चेदानीम्। नुः संप्रत्यर्थीयः।

नू च पुरा च दनं रथीराणाम्[6] (ऋ. वे. १. ९६. ७)

इति भूतार्थीयश्च द्या च[7] विदिति[8] देवी प्रेरयित्री[9] रथानाम्। उषसि भि[10]

[1] Read बोध्यवित्री.

[2] Read इत्यत्र. What is found in the MS. is घोध्यय्यवित्रीन्यत्र.

[3] The last pāda in R. V. 7. 96. 2. Read मघोनां.

[4] सृ which begins the last line is completely gone as the corner of the leaf is broken.

[5] Read व्युष्टासीत्. After स्युष्टा there is a small horizontal stroke in the line.

[6] Read सदनं रयीणाम्.

[7] First written श्चा. Then the आ mark deleted with a dot above. Perhaps to read भूतार्थीयः। अद्यापि च.

[8] Word not clear. Perhaps to read व्युच्छति.

[9] वी and प्रे mostly worm-eaten.

[10] Read हि.

रथा[1] प्रेर्यन्ते । ये अष्या[2] उषस आचरणेषु आगतेषु[3] दध्रिरे तिष्ठन्ति । उदात्तागमनार्थम्[4] । समुद्र इव धनकामा यौयायिन[5] इति ॥

उवासोषाः । पुरापि व्युष्टवती सम्प्रति च व्यौच्छत् क्षिप्रमुषाः क्षेप्त्री रथानाम् । ये रथा उषस आगमनेषु तिष्ठन्ति अन्नमाजिहीर्षवः समुद्रे इव नाविकाः ॥ (३)

उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः ।
अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥

उष[6] । प्रातः शयनेश्शयानो[7] भिक्षणार्थं[8] गन्तुमुद्युक्तो भवति कण्वः । उषो[9] ये ते यामेषु गमनेषु मनो दानाय प्रयुञ्जते सूरयः उदाराः । अत्रैव शयने शयानस्तदेषान्तेषान्नाम[10] गृह्णाति । नृणां कण्वानां ककण्वतम[11] इति । भिक्षणसमर्थः कण्वो चित्रो[12] दाता भावगव्यो दादेति[13] ।

[1] Folio 38*b* ends here.

[2] Read अस्या.

[3] Perhaps to read आगमनेषु.

[4] Not clear.

[5] Read नौयायिन.

[6] Read उषः

[7] Read शयने शयानो.

[8] णा mostly worm-eaten.

[9] षो worm-eaten and looks like पो.

[10] First written शयानस्तदोषान्तेषान्नाम. Then the आ mark in दो crossed and there remains दे.

[11] Initial क repeated unnecessarily.

[12] Perhaps to read मित्रो.

[13] Perhaps to read दातेति.

इह मनसा संयुक्ता दानशब्दा अन्तोदात्ताः । केवला आद्युदात्ता देयद्रव्यपरा इति ॥

उषो ये ते । उषसि शयने शयानः प्रस्कण्वः उदाराणां नामानि असावसाविति ब्रूते इति समुदायार्थः । उषस्तवागमनेषु ये प्राज्ञा मनो दानाय प्रयुञ्जते अत्रैव कण्वानां वरिष्ठः कण्वपुत्रः एषां नृणां तन्नामोच्चारयति । (४)

**आ घा योषेव सूनर्युषा याति प्रभुञ्जती ।**

**जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः ॥**

आ घ । आघात्येषा[1] योषेव सूनरी भद्रा । यदि वोषस एव नाम । उषा याति[2] प्रकर्षेण रक्षन्ति[3] । जरयन्ती वृजनम् । यद्वृजति भूतं तद्वृजनं जङ्गमम् । सर्वं जरयन्ती । मध्योदात्तं चेत् बलनाम वृणक्तीति । तस्यामस्यामागतायां[4] पद्वं[5] सर्वं गच्छति । अपि चैषोत्पातयति पक्षिण इति ॥

आ घा योषेव । आयाति उषाः स्त्री इव प्रकर्षेण रक्षन्ती । सूनरीत्यप्युषोनाम शोभननरेति । मनुष्याणां उपद्रवं जरयन्ती । उषस्यागतायां पद्वत् पुरुषादिकं चलति । पक्षिणश्चैयमुद्गमयति ॥ (५)

[1] Read आयात्युषा.

[2] Read उषा आयाति.

[3] Read रक्षन्ती.

[4] After ताया, something written and completely scored off. Then म् written below that letter scored off.

[5] Read पद्वत्.

वि या सृजति समनं व्यर्थिनः पदं न वेत्योदती ।
वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥

वि धा[1] । समनस्संगतः समेः संगत्यर्थात् । योऽध्वनि सममेति । विसृजति यार्थिनो भिक्षमाणान् । शकटं समनमित्यपरम्[2] । ओदनी[3] । काषसो[4] नाम । कामै + नक्ति[5] प्राणिनोऽपि या[6] रश्मिभिः । सा पदं न वेति न कामयते । अस्थिनं[7] धाति[8] शीघ्रम् । प्रत्यक्षश्शेषः । वयः पक्षिणः । पत्तियांसः[9] शिक्षितपतनाः । न कचिदासते तव व्युच्छने । वाजिनीवतीत्युषोनाम[10] । अह्नि हि सर्वे लभन्तेऽन्नमिति । समनं समानादिति यास्कः[11] इति ॥

वि या सृजति । विसृजति या सङ्ग्रामं युयुत्सून् प्रेरयति या च भिक्षून् सा पदमिव निदधाति । शनैः शनैरागच्छति उषः इति रश्म्यभिप्रायम् । पक्षिणो न केचन पतनशीला वृक्षेष्वासते तव व्युच्छने उषः ॥　　(६)

[1] Read वि या.

[2] Perhaps to read समनमित्यनन्यपरम्.

[3] Read ओदती.

[4] का partly worm-eaten. Perhaps to read उषसो.

[5] After कामै there is space for a syllable left blank before नक्ति. Perhaps to read कामैरनक्ति.

[6] Perhaps to read वा.

[7] Read अर्थिनं.

[8] Read याति.

[9] Read पप्तिवांसः

[10] In षो the ए mark completely and ष slightly worm-eaten.

[11] What Yāska says is समनं समननाद्वा संमाननाद्वा (नि. ७. १७).

एषायुक्त परावतः सूर्यस्योदयनादधि ।
शतं रथेभिः सुभगोषा इयं वि यात्यभि मानुषान् ॥

एषा । एषा स्वान् रथानयुक्त दूरात् सूर्यस्योदयनं द्यौः । शतं रथेभिरिति स्पष्टम् । इयं इति पादान्तः । छन्दो हि बृहती ॥

एषायुक्त । एषोद्युक्ता दूरात् सूर्यस्योदयनात् । दिवा शतं रथानधिरुह्य सुधनोषा मानुषानभि विविधं याति ॥ (७)

विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।
अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्निधः ॥

विश्वम् । विश्वं जगदस्याः[1] तेजसे प्रणमति । ज्योतिष्कृणोति सूनरी । सैषा मघोनी धनवती । द्वेषः पापम् । अपि वा यदस्मान्द्वेष्टि तद्यथापगतं भवति तथा व्युच्छति । उतथा[2] स्नयश्चेति[3] ।

अपे महि[4] व्ययति (ऋ. वे. ७. ८१. १)

इत्यत्र ज्योतिष्कृणोति[5] सूनरी[6] इति न सृष्टः । तत्र[7] समुच्चयस्य विद्यमवमानत्वात्[8] इति ॥

[1] द completely worm-eaten.

[2] Read only तथा instead of उतथा. The words दुहिता दिवः उषाः not commented. Perhaps the उ in उतथा is a remnant of उषाः

[3] Read स्निधश्चेति.

[4] Read अपो महि.

[5] ज्यो partly worm-eaten.

[6] The last pāda in R. V. 7. 81. 1.

[7] त्र partly worm-eaten.

[8] Read विद्यमानत्वात्.

विश्वमस्याः । उषसो दर्शनाय सममेव जगच्छिरो नमयति । ज्योतिश्च कृणोति उषाः । सा दिवो दुहिता सर्वान् द्वेष्टॄन् भक्षयितॄंश्च तिरस्कुर्वन्ती प्रादुर्भवतु ॥ (८)

उष॒ आ भा॑हि भा॒नुना॑ च॒न्द्रेण॑ दुहितर्दिवः ।
आ॒वह॑न्ती॒ भूर्य॒स्मभ्यं॒ सौभ॑गं व्यु॒च्छन्ती॒ दिवि॑ष्टिषु ॥

उषः । उष आताहि[1] प्रकाशय भानुना जगत् चन्द्रेण ह्लादकेन । दुहितद्दिवः[2] । आवहन्ती भूर्यस्मभ्यं[3] धनम् । भूरि प्रभनादिति[4] यास्कः[5] । व्युच्छन्ती दिविष्टष्मती[6] । विष्टयो[7] दिवासा[8] इति ॥

उष आ भाहि । उषः अभिमुखं भाहि तेजसा ह्लादकेन दिवो दुहितः । आवहन्ती बहुधनमस्मभ्यं प्रादुर्भवन्ती दिवसानामन्वेषणेषु ॥ (९)

विश्व॑स्य॒ हि प्राण॑नं॒ जीव॑नं॒ त्वे वि यदु॒च्छसि॑ सूनरि ।
सा नो॒ रथे॑न बृह॒ता वि॑भावरि श्रु॒धि चि॑त्रामघे॒ हव॑म् ॥

विश्वस्य । विश्वस्य हि जगतः प्राण[9] जीवनं त्वधि[10] भवति । यदा त्वं

[1] Read आभाहि.

[2] Read दहितर्दिवः In द्दि there is no dot between the two द letters to make up र्द.

[3] स्म mostly worm-eaten.

[4] Read प्रभवनादिति.

[5] See भूरीति बहुनो नामधेयम् । प्रभवतीति सतः (नि. २. ७).

[6] Read दिविष्टिष्विति.

[7] Read दिविष्टयो.

[8] Read दिवसा.

[9] Folio 39*a* ends here. Read प्राणनं.

[10] Read त्वयि.

व्युच्छसि सूनरि । सा अस्माकं रथेन बृहतागच्छन्ती शृणु[1] चित्रधने ह्वानमिति ॥

विश्वस्य हि । विश्वस्य हि प्राणिनः प्राणनं जीवनं च त्वयि भवति यदा त्वं व्युच्छसि उषः । प्रकाशं कुर्वन्ती सास्माकं रथेन बृहता गता दीप्तिमति शृणु चित्रधने ह्वानम् ॥ (१०)

उषो वाजं हि वंस्व यश्चित्रो मानुषे जने ।
तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः ॥

उषः । + न्नियततो[2] वाक्यार्थसस्य[3] परार्थत्वं[4] ब्रुवन् वाक्यार्थमुद्गृह्णाति[5] । लोडन्तेन[6] योगेन प्रत्युद्ग्रहणं[7] + + + + मेव[8] । उषो वाजन्तेहि[9] । यत्[10] पूजनीयो भवति[11] मानुषे जने । तेन च वाजे-

[1] विभावरि not commented.

[2] After उषः a letter mostly worm-eaten. Perhaps it is हि. May be, to read हिर्निपातो.

[3] Read वाक्यार्थस्य.

[4] After परार्थ a letter completely worm-eaten. The anusvāra is in tact. त्वं only a conjecture.

[5] वाक्या completely worm-eaten. Only a conjecture.

[6] न्त in न्ते completely worm-eaten. Only a conjecture.

[7] प्रत्युद्ग्र completely worm-eaten. Only a conjecture.

[8] After हणं four letters completely worm-eaten and the line ends. Cannot be made out. The entire passage not clear. Cf. the openning stanzas of the 5th section in the Nipāta portion of the Kārikas of Mādhava son of Veṅkaṭārya added to his commentary on the Ṛgveda (Aṣṭaka III. Adhyāya V).

[9] Perhaps to read वाजन्देहि.

[10] Read यः

[11] व completely worm-eaten.

नोपावह सुकृतो अध्वरान् । अध्वरेषु तस्य वाजस्य विनियोगोऽस्त्वित्यर्थः । येऽमी त्वां[1] स्तुवन्ति स्तोतार इति ॥

उषो वाजम् । उषो ह्यन्नं देहि यः पूजनीयो मनुष्येषु भवति । अथ तेनान्नेन सुकर्मणो यज्ञानुपावह ये त्वां स्तुवन्ति स्तोतारः ॥ (११)

**विश्वाँ देवाँ आ वह सोमपीतयेऽन्तरिक्षादुषस्त्वम् ।**
**सास्मासु धा गोमदश्वावदुक्थ्य१मुषो वाजं सुवीर्यम् ॥**

विश्वान् । स्पष्टार्था । मरुतोऽत्र[2] विश्वे देवा इत्येकम् । सर्व एवेत्यपरमिति ॥

विश्वान् देवान् । विश्वान् देवानावह सोमपानायान्तरिक्षादुषस्त्वम् । सास्मासु धेहि गोमदश्ववत् प्रशस्यं उषो वाजं शोभनवीर्यम् ॥ (१२)

**यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत ।**
**सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ॥**

यस्याः । स्पष्टैव । रुशन्तो रुशतेद्दीप्त्यर्थत्वात्[3] । श्वेत्य एव सर्वत्र पर्यवसानम्[4] । अर्चिरृचेः[5] शोषणार्थात् । सुखेनोपगन्तव्यं सुम्यमिति[6] केचित् ॥

[1] त्वां mostly worm-eaten.

[2] म completely and रु mostly worm-eaten.

[3] There is no dot between the two द letters in द्दी to make up र्द. Read रुशतेर्दीप्त्यर्थत्वात्.

[4] Not clear.

[5] Read अर्चिरर्चेः

[6] Read सुग्म्यमिति.

यस्या रुशन्तः । यस्या दीप्यमाना अर्चयः प्रत्यदृक्षत कल्याणाः । सा नो रयिं सर्ववरणीयं सुरूपमुषा ददातु सुखकरम् ॥ (१३)

**ये चि॒द्धि त्वामृष॑यः॒ पूर्वं॑ ऊ॒तये॑ जु॒हू॒रेऽव॑से महि ।**
**सा नः॒ स्तोमाँ॑ अ॒भि गृ॑णीहि॒ राध॒सोषः॑ शु॒क्रेण॑ शो॒चिषा॑ ॥**

ये चित् । येचिद्धि त्वामृषयः पूर्वे रक्षणार्थमन्नार्थं च भृतवन्तो[1] महति । तेषामिव सास्माकं स्तोमान् अहिगृणीहि[2] स्तुतमिति[3] राधसा दत्ते-नोषश्शुक्रेण शोचिषा स + तोः[4] ।

आ द्यां तनोषि रश्मिभिः (ऋ. वे. ४. ५२. ७)

इत्यत्र उषः शुक्रेण शोचिषा[5] इति करणे तृतीया । अतो न सृष्ट इति ॥

ये चिद्धि । येचिद्धि त्वां ऋषयः पूर्वे रक्षणाय आहूतवन्तो महति सास्माकं स्तोमानभिगृणीहि धनेनोषः शुक्रेण तेजसा युक्तेति ॥ (१४)

**उषो॒ यद॒द्य भा॒नुना॒ वि द्वारा॑वृ॒णवो॑ दि॒वः ।**
**प्र नो॑ यच्छतादवृ॒कं पृ॒थु छ॒र्दिः प्र दे॑वि॒ गोम॑ती॒रिषः॑ ॥**

[1] Read आहूतवन्तो.

[2] Read अभिगृणीहि.

[3] Not wanted.

[4] After स space for a letter left blank before तोः not clear. Perhaps to read सहिता.

[5] The last pāda in R. V. 4. 52. 7.

उषो यत् । उषो यदद्य भानना[1] व्यूणवो दि + [2]वो द्वारौ तमसा हिरोहिते[3] । द्यौर्नभः । सा त्वमस्मभ्यं प्रयच्छ वृकरहितम् । छदिर्गृहं[4] छदेच्छादनार्थात्[5] । अपिच प्रयच्छ गोमत्यंन्नानि[6] इति[7] ॥

उषो यदद्य । उषो यदद्य तेजसा दिवो द्वारौ पूर्वापरौ सूच्येव विद्धं भवति । तदानीं प्रयच्छास्मभ्यं स्तेनरहितं विस्तीर्णं गृहम् । प्रयच्छ च देवि गोमन्त्यन्नानि ॥ (१९)

**सं नो॑ रा॒या बृ॑ह॒ता वि॒श्वपे॑शसा मिमि॒क्ष्वा समिळा॑भि॒रा ।**
**सं द्यु॒म्नेन॑ विश्व॒तुरो॑षो महि॒ सं वाजै॑र्वाजिनीवति ॥**

सन्नः । संमिमिक्ष्व संयोजयास्मान् राधा[8] धनेन बृहता नानारूपेण । संमिमिक्ष्व चेळाभिर्गोभिः । समुच्चय आकारः । सं च द्युम्नोनान्नेन[9] । विश्वतुरा विश्वस्य[10] तारकेण । उषो वहति । सं च बलैर्वाजिनीवति[11] ॥

[1] Read भानुना.

[2] Space for a letter left blank between दि and वो. But nothing missing.

[3] Perhaps to read तिरोहितौ.

[4] Read छर्दिर्गृहं.

[5] Read छदेश्छादनार्थात्.

[6] Read गोमन्त्यन्नानि.

[7] देवि left out.

[8] Read राया.

[9] Read द्युम्नेनान्नेन.

[10] विश्वस्य mostly worm-eaten.

[11] Here there is no figure to mark the end of the sūkta.

सं नो राया। संयोजयास्मान् धनेन महता सर्वरूपेण। संमिमिक्ष्व च गोभिः। सं यशसा सर्वशत्रूणां हिंसकेन। संयोजय अन्नैश्चान्नवति॥ (१६)

---

उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि।
वहन्त्वरुणप्सव उप त्वा सोमिनो गृहम्॥

उषः। स्मष्टा।

दिवश्चिद्रोचनाद-
ध्या नो गन्तं स्वर्विदा (ऋ. वे. ८. ८. ७)

इत्यत्र द्यौस्तृतीयस्थानमतस्तत्र[1] न सृष्टः। अत्र तु दिवो + रोचमन्तरिक्षम्[2]। तथाचोक्तम्।

अन्तरिक्षमादुषस्त्वम्[3] (ऋ. वे. १. ४८. १२)

इति। ततश्च।

अग्ने शर्धन्तमा गणम्[4] (ऋ. वे. ५. ५६. १)

इत्यत्र[5] दिवश्चित्रोचनादधि[6] इति[7] विसृष्ट इति॥

[1] Read द्यौस्तृतीयस्थाना। अतस्तत्र.

[2] After दिवो space for a syllable left blank. But no letter is missing. Read दिवो रोचनमन्तरिक्षम्.

[3] Read अन्तरिक्षादुषस्त्वम्.

[4] श mostly worm-eaten. Now looks like र.

[5] Written गणमित्यत्र. The letter मि completely gone as the corner of the leaf is broken. This is the first letter in the last line of the page.

[6] Read दिवश्चिद्रोचनादधि.

[7] The last pāda in R. V. 5. 56. 1.

उषो भद्रेभिः । उषो भद्रैरागच्छ दीप्ताल्लोकात् । उपवहन्तु त्वामरुणरूपा अश्वाः सोमिनो गृहम् ॥ (१)

**सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् ।**
**तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ॥**

सुपेशसं[1] यं रथमधि + +[2] तेनाद्य सहविष्कं जनमागच्छेति ॥

सुपेशसम् । सुरूपं सुद्वारं रथं यमध्यस्था उषस्त्वं तेन शोभनान्नं हविष्मन्तं यजमानं अद्य प्ररक्ष दिवो दुहितः ॥ (२)

**वयश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि ।**
**उषः प्रारन्नृतूँरनु दिवोऽन्तेभ्यस्परि ॥**

वयः । पक्षिणः पतत्रवन्तस्तवर्त्रनु[3] तव कलान्[4] प्रति तवागमनेषु[5] प्रारन्[6] प्रगच्छति । अर्जुनीत्युषोनाम[7] ॥

वयश्चित्ते । पक्षिणः पत्रयुक्ता द्विपाच्चतुष्पाच्चोषः शुक्लवर्णे तवागमनकालान् प्रति गच्छन्ति अन्तरिक्षपर्यन्तेभ्यः ॥ (३)

[1] Pratika not separately given.

[2] After अधि space for 2 syllables left blank. This is the explanation of अध्यस्थाः

[3] The latter part not clear. Perhaps it is तव ऋतून् अनु.

[4] Read कालान्.

[5] नेषु mostly worm-eaten.

[6] Read प्रारान्.

[7] Folio 39*b* ends with अर्जुनीत्युषेना.

व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् ।
तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥

स्पष्टोत्त + +[1] ॥

व्युच्छन्ती हि । व्युच्छन्ती हि रश्मिभिः सर्वं लोकं भासयसि । तां त्वां उषर्धनकामा गीर्भिः कण्वा आहूतवन्तः ॥ (४)

---

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥

उदुत्यम् । निरुक्तः । उद्वहस्तुन्तु तज्ञातवेदस[2] देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां सन्दर्शनाय सूर्यमिति ॥

उदुत्यम् । उद्वहन्ति तं जातवेदसं केतवोऽश्वा रश्मयो वा सर्वेषां भूतानां दर्शनाय ॥ (१)

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥

[1] Read स्पष्टोत्तरेति. After त्त there is the ए mark and then space for the rest left blank. उत्तरा is verse No 4. Here there is no figure to mark the end of the sūkta.

[2] The letter between स्तु and त not at all legible. न्तु is the nearest approximation. Perhaps to read उद्वहन्ति तं जातवेदसं.

अप । अपयन्त्यमी तामयवः[1] त + यथा[2] नक्षत्राण्यक्तुभिर्निशाभिस्सह सूरारय[3] विश्वचक्षसे । तं दृष्ट्वा पलायन्ते तस्करा नक्षत्राणि चेति । तासुस्तेनतापतेः[4] । स्तनो माया[5] । नक्षत्र + तेर्गतिकर्मणः[6] । यो वा इह यजतेऽमुं स लोकं नक्षते । तन्नक्षत्राणां नक्षत्रत्वं इति[7] च ब्राह्मणमिति ॥

अप त्ये । अपयन्ति नक्षत्राणि रात्रिभिः सहागच्छन्तीभिः रश्मिभिः स्तेना इव सूर्यं विश्वस्य द्रष्टारं दृष्ट्वा ॥ (२)

**अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥**

अदृश्रम् । अदृश्रमिति प्रथमपुरुषबहुवचने बहुहुशः[8] प्रयोगात् साधुत्वम् । अन्ये तु शाखिनोऽदृश्रन्निति नकारान्तमधीयन्ते[9] । विदृश्यन्तेऽस्य केतवः प्रज्ञापका रश्मयो जनाननु । दीप्यमाना अग्नयो जनाननु[10] दीप्यमाना अग्नयो[11] यथा दृश्यन्ते एवमिति ॥

[1] Read तायवः

[2] After त space for a syllable or two left blank. Then there is an आ mark. यथ in यथा mostly worm-eaten. Can scarcely be made out. Read तस्करा यथा.

[3] Read सूराय.

[4] Read तायुस्तेनः तपतेः This is not the explanation in N. 4. 24.

[5] Not intelligible.

[6] After नक्षत्र space for a syllable left blank. Read नक्षत्रं नक्षतेर्गतिकर्मणः Cf. N. 3. 20.

[7] T. B. 1. 5. 2. 5.

[8] Read बहुशः

[9] M. S., K. S. etc.

[10] नु completely worm-eaten.

[11] Repetition of जनाननु दीप्यमाना अग्नयो not wanted.

अदृश्रमस्य । अदृश्रमहमस्य केतून् । विभवन्ति जनान् प्रति रश्मयो भ्राजन्तोऽग्नय इव दीप्यमाना इति ॥ (३)

**तुरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥**

तरणः[1] । गन्ता विश्वस्य दर्शनीयो ज्योतिषः कर्तासि सूर्य । विश्वं च नभः प्रकाशयसि ॥

तरणिः । क्षिप्रगन्ता विश्वस्य दर्शको ज्योतिषः कर्तासि सूर्य । विश्वं च दिवं प्रकाशयसि ॥ (४)

**प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे ॥**

प्रत्यङ् देवानां विशः[2] । असंख्याना बहुविधा देवाः । सर्वानेव देवान् प्रत्यङ् उदेषि[3] । प्रत्यङेवोदेषि च मानुषाञ्जनान् । प्रत्यङेव विश्वं व्यास्तम्[4] । स्वः सर्वम् । दृशे दृश्यमानम् । अपि वा दर्शनीयः[5] । तस्मात् सर्व एव[6] मन्यते मां प्रत्युदगात् इति[7] ब्राह्मणमिति ॥

प्रत्यङ् देवानाम् । तस्मात् सर्व एवं मन्यते मां प्रत्युदगादिति ब्राह्मणम् । देवानां विशः । देवानित्यर्थः । देवान् मनुष्यांश्च त्वं अभिमुख उदेषि । किं बहुना सर्वं जगदपि प्रत्यङ्ङुदेषि सर्वस्य पदार्थस्य दर्शनाय ॥ (५)

[1] Read तरणिः

[2] Usually only one or two words alone taken as pratika.

[3] षि completely worm-eaten.

[4] Read व्याप्तम्.

[5] Read दर्शनाय ।

[6] Read एवं.

[7] A. Ar. 3. 2. 3.

येनां पावक् चक्षंसा भुरुण्यन्तं जनाँ अनुं । त्वं वंरुण पश्यंसि ॥

येन । निरुक्तम्[1] । येन पावकाख्येन हुरण्यन्तं[2] जनाननु त्वं वरुण पश्यसि । तत्ते वयं स्तुम इति वाक्यशेषः । अपि वोत्तरस्यां[3] अन्वयः । तेन व्येषीति । भुरण्यतिर्गतिकर्मा । जनपदान् प्रति गच्छन्तम् । येन तेजसा + + + वीति[4] । वरुणः सूर्य एव तमसो वारणादिति ॥

येना पावक । येन शोधयितः तेजसा जनान् प्रति अर्थार्थं गच्छन्तं त्वां आच्छादयितः पश्यसि तत्ते वयं स्तुम इति वाक्यशेष इति यास्कः ॥ (६)

वि द्यामेंषि रजंस्पृथ्वहा मिमांनो अक्तुभिंः । पश्यञ्जन्मांनि सूर्य ॥

वि द्यास्तु[5] । निरुक्तम्[6] । वेषि द्यां रजश्च पृथु महान्तं लोकम् । अहानि मिमानो अक्तुभि[7] रात्रिभिः सह । पश्यन् जन्मानि + + +[8] सूर्येति ॥

वि द्यामेषि । पृथु रजः अन्तरिक्षं रात्रिभिः सह अहानि कुर्वाणः अन्तरिक्षं च पश्यन् सर्वाण्येव जातानि व्येषि मध्ये गच्छसि ॥ (७)

[1] N. 12. 22.

[2] Read भुरण्यन्तं.

[3] It is not certain if what is written is वोत्तरस्यां or चोत्तरस्यां.

[4] After तेजसा space for three syllables left blank. Reading uncertain.

[5] The pratika can be only विद्याम्.

[6] N. 12. 23.

[7] Read अक्तुभिः

[8] After जन्मानि space for three syllables left blank. The word must be जातानि.

**स॒प्त त्वा॑ ह॒रितो॒ रथे॒ वह॑न्ति देव सूर्य । शोचिष्केशं विचक्षण ॥**

सप्त त्वा । सप्त त्वां हरितोऽश्वा रथे च स्थितं वहन्ति देव सूर्य । शोचिंषि[1] यस्य ते केशस्थानीयानि विद्रष्टः ।

अदिष्ठ[2] हरितं रथम् (ऋ. वे. ३. ४४. १)

इति रूपवाच्यकारान्त आद्युदात्त[3] इति ॥

सप्त त्वा । सप्त त्वां बडवा रथमारोप्य वहन्ति देव सूर्य ज्वलद्रश्मि विद्रष्टः । केशा रश्मय इति यास्कः । केशसादृश्याद्वा इति ॥ (८)

**अयु॑क्त स॒प्त शु॒न्ध्युवः॒ सूरो॒ रथ॑स्य न॒प्त्यः॑ । ताभि॑र्याति॒ स्वयु॑क्तिभिः ॥**

अयुक्त । युङ्क्ते सप्त शुन्ध्युवोऽश्वाः । शुन्ध्युः[4] शोधनात् । मेध्यात् ब्रश्वनः[5] । सूरो रथस्य नप्त्यः । नप्तीर्याभिर्न[6] पति[7] । ताभिर्यात्यात्मना[8] युक्तिभिरिति ॥

अयुक्त सप्त । युक्तवान् सप्त बडवाः सूरो रथस्य नेत्रीः । ताभिर्याति स्वेन युज्यमानाभिः । शोधनादश्वाः शुन्ध्युवः ॥ (९)

[1] Read शोचींषि.

[2] Read आ तिष्ठ.

[3] In R. V. 1. 50. 8 the accent is on रि in हरितः । In R. V. 3. 44. 1 the accent is on ह in हरितं.

[4] शु completely worm-eaten.

[5] Not clear.

[6] Folio 40*a* ends with नप्तीर्या. The आ mark in र्या completely worm-eaten.

[7] Read पतति.

[8] Read ताभिर्यात्यात्मनो.

उद्वयं तम॑स॒स्परि॒ ज्योति॒ष्पश्य॑न्त॒ उत्त॑रम् ।
दे॒वं दे॑व॒त्रा सूर्य॒मग॑न्म॒ ज्योति॑रुत्त॒मम् ॥

उद्वयम् । उदगम्[1] वयं तमसो यदुपरि स्थितं ज्योतिः पश्यन्त उद्गततरन्देवेषु । सुवीर्यं निरुक्तमिति[2] । वाजसनेयकम्[3] । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति । स्वर्गो वै लोकः[4] सूर्यो ज्योतिरुत्तममिति[5] ॥

उद्वयम् । उदगाम वयं तमो विहायोपरि स्थितं ज्योतिः पश्यन्तः । किं तत् ज्योतिरित्याह—दीप्यमानं देवेषु सूर्यमगन्म ज्योतिरुत्तमं इति ॥ (१०)

उ॒द्यन्न॒द्य मि॑त्रमह आ॒रोह॒न्नुत्त॑रां॒ दिव॑म् ।
हृ॒द्रो॒गं मम॑ सूर्य हरि॒माणं॑ च नाशय ॥

उद्यन् । अन्त्यस्तृचोऽयं रोगघ्नः[6] । दुर्वात्रत्वं प्राप्तं[7] प्रस्कण्वस्तृचमुत्तममपश्यत् । उद्यन्नद्य मित्रमहः आरोहंश्चोद्गततरां दिवम् । मम रुद्रोगं[8] त्वचि भरिमाणं[9] च नाशय ॥

[1] Read उदगन्म.

[2] सुवीर्यं निरुक्तमिति not intelligible. The verse does not occur in N.

[3] स and न in ने completely worm-eaten.

[4] स्वर्गो mostly worm-eaten; difficult to decipher.

[5] S'. B. 12. 9. 2. 8 and 14. 3. 1. 28.

[6] ग completely worm-eaten.

[7] Read दुर्वर्णत्वं प्राप्तः

[8] Read हृद्रोगं. In द्रो the द part mostly worm-eaten.

[9] Read हरिमाणं.

उद्यन्नद्य । उद्यन्नद्य मित्राणां पूजयितः आरोहन् उद्गततरां च द्याम् । मम हृदयरोगं त्वचि हरिमाणं च नाशय । दुर्वर्णत्वं प्राप्तः प्रस्कण्वः तृचमपश्यदिति ॥ (११)

**शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।**
**अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥**

शुकेषु । शुकः[1] पक्षी शोचतेर्दीप्तिकर्मणः[2] । शुकेषु[3] मे हरिमाणम् । अपि च रोपणाकासु दध्मसि । अपिच भारिद्रवेषु[4] पक्षिषु मे हरिमाणं नितिदध्मसि[5] निदधामि । इदन्तो मसिः[6] इत्येकवचनेऽपि दृष्टम् ॥

शुकेषु मे । हरितवर्णेषु शुकेषु विपटिकासु च मदीयमपि हरिमाणं वयं निदध्मः । अपिच हारिद्रवेषु पक्षिषु । सर्वेऽमी मदर्थमपि हरिता भवन्तु इत्यर्थः । सिंहे मे मन्युर्व्याघ्रे मेऽन्तरामयः इति यजुः ॥ (१२)

**उदगादयमादित्यो विश्वेन सहसा सह ।**
**द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥**

उत्तरा[7] स्पष्टार्था । सहस्तेजः[8] । रन्धवनं[9] वशीकरणम् । द्योगे[10] चतुर्थी । अस्माकं भवति ॥

[1] The visarga in कः completely worm-eaten.
[2] In शो all except the ए mark mostly worm-eaten.
[3] Read शुकेषु.
[4] Read हारिद्रवेषु.
[5] Read निदध्मसि.
[6] P. 7. 1. 46. Read इदन्तो मसि. The MS. has मसिरिति.
[7] The verse No. 13.
[8] ह completely worm-eaten.
[9] Read रन्धनं.
[10] Not clear.

द्विषन्तं मम रन्धयन्

इति शाखान्तरे[1] पाठ इति[2] ॥

उदगादयम् । उदितोऽयमादित्यः सर्वेण बलेन सह द्विषन्तं मह्यं वशीकुर्वन् । मैवाहं द्विषतो वशो भवामि इति ॥ (१३)

---

अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।
यस्य द्यावो न विचरन्ति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत ॥

आङ्गिरसस्सव्य ऋषिः[3] । तत्रास्माकं शौनको मूलम् । एवमन्येष्वपि अनुक्तमूलेष्व[4] । अभिवतद स्तुत तं मेषम् । मेषो मिषेः प्रहारार्थात् । अभिपश्यति बलिनं[5] इति । अपि वेद्रो[6] मेधातिथेर्यजमानस्य सोमं मेषो भूत्वा पपौ । तेन मृषिं[7] मेषं ब्रूते । पुरुहूतं बहुभिराभृतम्[8] । ऋग्यं[9]

[1] T. B. 3. 7. 6. 23.

[2] Here there is the figure four to mark the end of the sūkta.

[3] Pratika not separately given.

[4] Read अनुक्तमूलेषु.

[5] ति and ब mostly worm-eaten.

[6] Read वेन्द्रो.

[7] Read तमृषिं instead of मृषिं.

[8] Read बहुभिराहूतम् .

[9] Read ऋग्म्यं.

ऋगण्यं[1] स्तुत्यम् । इन्द्रं स्तुतिभिः । वस्वो अर्णवं वसूनामाकरम्[2] । यस्य[3] द्यावो न दीप्तय इव । विचरन्ति मनुष्यहितानि कर्माणि । तं भुजे धनाय[4] दाम्तृतं[5] मेधावितनं[6] अभ्यर्चत ॥

अभि त्यम् । सव्य आङ्गिरसः । अभिमदत तं मेधातिथेर्मेषं पुरुहूतं ऋगर्ह इन्द्रं स्तुतिभिः धनस्याकरम् । यस्य रश्मय इवेतस्ततः चरन्ति मनुष्यहितानि कर्माणि । भोगाय तमभिष्टुत मेधाविनम् । अत्र शाट्यायनकम्—अथ मैधातिथम । मेधातिथिगृहपतयो वै विभिन्दुकीयाः सत्रमासत । तेषां दृढच्युदागस्तिरुद्गातासीत् । गौरिवीतिः प्रस्तोता । च्युतच्युत प्रतिहर्ता । वसुक्षयो होता । सनकनवकौ काव्यावध्वर्यू । पशुकामो मेधातिथिः । जनिकामौ सनकनवकौ । यत्कामा इतरे तत्कामाः । नानाकामा ह स्म वै पुरा सत्रमासते । ते ह स्म नानैव कामानृध्वाप्त्वोत्तिष्ठन्ति । तेषां ह स्मेन्द्रो मेधातिथेर्मेषस्वरूपं कृत्वा सोमं व्रतयति । तं ह स्म बाधन्ते । मेधातिथेर्नो मेषः सोमं व्रतयति इति । स उ ह स्मैषां स्वमेव रूपं कृत्वा सोमं व्रतयति । ततो ह वा इदमर्वाचीनं मेधातिथेर्मेष इत्याह्वयन्ति इति ॥ (१)

अभीमवन्वन्त्स्वभिष्टिमूतयोऽन्तरिक्षप्रां तविषीभिरावृतम् ।
इन्द्रं दक्षास ऋभवो मदच्युतं शतक्रतुं जवनी सूनृतारुहत् ॥

[1] ण्य is mostly worm-eaten. It may also be स्य. It is decidedly not र्ह. Read ऋगर्हं.

[2] The आ mark in मा completely worm-eaten.

[3] After य somthing begun and completely scored off and then स्य follows.

[4] ध not at all legible. It may as well be य.

[5] Read दान्तृतमं.

[6] Read मेधाविनं.

अभि। अभ्यसेवन्तैनं स्वभिष्टिं सुष्ठु बलिकं[1] योऽगिभवति[2] तमूतयः अन्तरिक्षस्य पूरकं तविषीहि[3] बलैरावृतमिन्द्रं दक्षासः समर्थाः[4]। दक्षतिरुत्साहकर्मा। ऋभवो मरुतः उरु भान्तीति। शत्रमन्दस्य[5] च्यावकम्। तमिमं शक्रतुम्[6]। जवनी जवकरी। प्रहर हगवो[7] जही वीरयस्व इति मरुतां सूनृता वागारुहत्। वृत्रवयोद्युक्तम्[8]॥

अभीममन्वन्। अभ्यसेवन्तैनं सुष्ठु शत्रूणामन्वेष्टारं मरुतोऽन्तरिक्षस्य पूरयितारं बलैरावृतमिन्द्रं वृद्धा ऋभवश्च शत्रुमदस्य च्यावयितारम्। तमिमं शतक्रतुं वेगस्य कारयित्री स्तुतिरारोहति॥ (२)

**त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोतात्रये शतदुरेषु गातुवित्।**
**ससेनं चिद्विमदायावहो वस्वाजावद्रिं वावसानस्य नर्तयन्॥**

त्वं गोत्रम्। त्वमभ्रम्[9]। ग्रथते[10] शब्दकर्मणः। त्वं गवामपिधायकं मेघमङ्गिरसामर्थायापावृणोः। अपि वात्रये शतद्वारेषु यन्त्रेष्वसुरैः प्रक्षिप्ताय गातुवित् ये नोपद्रवं तरति। कचिदुपायः[11]। कचित्पन्थाः। छन्दोगैरुपाये[12]

[1] Not clear. Perhaps to read बाधकं.
[2] Read योऽभिभवति.
[3] The ई mark in षी completely worm-eaten. Read तविषीभिः
[4] The visarga completely worm-eaten.
[5] Read शत्रुमदस्य.
[6] Read शतक्रतुम्.
[7] Read भगवो.
[8] Read वृत्रवधोद्युक्तम्. द्यु mostly worm-eaten.
[9] Perhaps to read गोत्रमभ्रम्.
[10] Not clear. Cf. Un. 4. 177.
[11] Folio 40*b* ends with क. Folio 41 is broken into two pieces completely.
[12] न्दो and ये mostly worm eaten.

बहुशः प्रयुक्तस्य लंभयिता । अपि च सेनान्तेन[1] सह विमादाय[2] ऋषि ++[3] यजमाजौ[4] प्रवृत्तस्य तत्र वसतो[5] जयार्थं[6] । वज्रं नर्तयन् प्रेरयन् ॥

त्वं गोत्रम् । त्वं वलं मेघरूपमङ्गिरसामर्थाय अपावृणोः पशूनाहर्तुम् । अपि च असुरैः शतद्वारेषु यन्त्रगृहेषु प्रक्षिप्तायात्रये मार्गस्य लम्भयिता । तथान्नेन सह विमदाय ऋषये धनं चावहः । युद्धे वर्तमानस्य विमदस्यार्थाय वज्रं भ्रामयन् ॥ (३)

त्वमपामपिधानावृणोरपाधारयः पर्वते दानुमद्वसु ।
वृत्रं यदिन्द्र शवसावधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ॥

त्वमपाम्[7] । त्वमपामपिधानान्यपावृणोः[8] । अपि वाधारयः[9]

[1] Read ससेनान्नेन.

[2] Read विमदाय. The leaf is broken between मा and दा.

[3] After ऋषि space for two letters left blank. Perhaps to read ऋषये. There must be also अवहः

[4] Read धनमाजौ.

[5] त in तो completely worm-eaten. Only a conjecture.

[6] After जय the leaf is broken. Then some bits are seen which may be a long mark and र्थं.

[7] After प्रेरयन् which concludes the commentary on the previous verse there is म before this pratika. The leaf is broken; the व in त्व and the letters till आम् in पाम् lost. The portion broken is only for one letter. It seems the scribe had written मत्वपाम् as the pratika.

[8] णोः completely worm-eaten.

[9] वा mostly worm-eaten; not certain if what was written is वा or चा.

पर्वते[1] दानुमद्दानुमतोऽसुरहस्य[2] धनं आभृत्य[3]। वृत्रं यदेन्द्र शवसावधीरहिं आहन्तारम्। वाजसनेयकं तु—सो + षोमावभिसंबभू[4]। सर्वा विद्यां सर्वशे[5] यशस्सर्वमन्नाद्यं सर्वा श्रियम्। स यत् सर्वमेतत्[6] समभवत्। तस्मादभिरिति[7]। अनन्तरमेव वृत्रेणापिहितं सूर्यं दिव्यारोहयो दर्शनार्थम्। अपि वा दर्शनीयम्॥

त्वमपाम्। त्वं मेघस्थानामपां अपिधानानि अपावृणोः। तथा शिलोच्चये असुरसंबन्धि वसु धृतवान् मेघे वा। वृत्रं यदिन्द्र बलेनावधीः अहिं च। अनन्तरमेव सूर्यं दिव्यारोहयः सर्वेषां दर्शनाय॥　(४)

**त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्तावजुह्वत।**
**त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ॥**

त्वम्। त्वं मायाभिम्मायिनोऽपायमः[8][9] स्वधाभिमस्वधाभिरन्नै-

[1] र्व mostly worm-eaten.

[2] Read सुरस्य.

[3] Read आहृत्य.

[4] After सो one letter is completely worm-eaten. The next is mostly worm-eaten. षो is only a conjecture. Two letters seem missing after बभू. Not clear.

[5] Read सर्व instead of सवशे.

[6] स, र्व and त mostly worm-eaten.

[7] Read तस्मादहिरिति. Quotation not traced.

[8] There is no dot between the two म letters to make them र्म.

[9] Read पाधमः

येऽधिशुम्नावजुह्वत[1] । शुस्तिर्मुखं शोभते[2] । मुखेन हि शोभते । कौषीतकम्—असुरा वा आत्मौ जुहवुरुद्वातेऽग्नौ ते पराभवन् इति[3] । वाजसनेयकं च—देवाश्च ह वा असुरा वास्पर्धन्तमतो + + रातिमानेन[4] कस्मैचन जुहुम इति । स्वेष्वेवास्येषु जुह्वतश्चेरुस्ते ह पुराबभूवुः इति[5] । त्वं पिप्रोरस्यसुरस्य[6] नृमणः प्रारुजः पुराणि । नृषु मनो यस्य स नृमणाः । प्रेरक्षितवान्[7] + स्रजिह्वानश्च[8] संग्रामेषु ।

त्वं पिप्रं[9] मृगयुं[10] शूशुवांसम् (ऋ. वे. ४. १६. १३)

इत्युक्तमिति ॥

[1] After स्वधाभिम there is something written. It is not a complete letter. Then स्वधाभिरन्नैर्ये written. स्वधाभिम not wanted. न्नै closes the line. The ए mark in र्ये lost, as the end of the leaf is broken.

[2] Read शोभते:

[3] The passage in S'āṅkhyāyana is: असुरा वा आत्मन्न जुहुवुरुद्वातेऽनन्नै ते पराभवन् (४. ३).

[4] After मतो one letter is lost at the end of the line and the first letter in the next line also is lost, as the ends of the leaf are broken.

[5] The passage in the S'atapatha is: देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुः । तेऽतिमानेनैव पराबभूवुः (५. १. १. १ and ११. १. ८. १.)

[6] Read पिप्रोरसुरस्य.

[7] Read प्ररक्षितवान्. The final न् half lost, as the end of the leaf is broken.

[8] Read ऋजिश्वानं च. One letter before स्र lost as the end of the leaf is broken.

[9] पिप्रुं.

[10] मृग completely worm-eaten.

त्वं मायाभिः। त्वं कृत्रिमैः कृत्रिमान् अपाधमः ये अन्नैर्देवानपहाय वयमेव देवा इति स्वस्मिन्नास्ये होमं कृतवन्तः। त्वं पिप्रोरसुरस्य हे नृमणो नृषु मनो यस्य। पुराणि प्रारुजः। प्ररक्षितवानसि ऋजिश्वानं च सङ्ग्रामेषु ॥ (९)

**त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम्।**
**महान्तं चिदर्बुदं नि क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ॥**

त्वं कुत्सम्। कुत्स ऋषिरिन्द्रेण शप्तः[1] कुत्सिमो[2] मल्लवृत्तिरभवत् इति[3]। कर्ता स्तोमानां कुत्स इति यास्कः[4]। तं त्वं शुष्णासुसस्यंग्रामे-ष्वरक्षितः[5]। तथा वशमनयोऽतिथिवाय[6] दिवोदासाय शम्बरम्।

अतिधियाय शंभरं[7] गिरेरुग्रो अवाभरत् (ऋ. वे. १. १३०. ७)

+ तिथिग्वोऽतिथीन्[8] अहिगच्छतीति[9]। किञ्च महान्तं अप्यर्बुदमसुरं

[1] After इन्द्रेण a letter completely worm-eaten. Then प is clear and the leaf is broken right across here. But nothing seems lost. शप्तः only a conjecture.

[2] Read कुत्सितो.

[3] Not traced.

[4] The passage in Yāska is: ऋषिः कुत्सो भवति। कर्ता स्तोमानामित्यौ-पमन्यवः (नि. ३. ११).

[5] Read शुष्णासुरस्य संग्रामेष्वरक्षः The आ mark in ग्रा lost as the end of the leaf is broken.

[6] Read तिथिग्वाय.

[7] Read अतिथिग्वाय शम्बरं.

[8] After भरत् there is space for a letter blank. Here the leaf is broken right across. Read अतिथिग्वो. The letter ग्वो looks more like श्वो.

[9] Read अभिगच्छतीति.

पदा न्यक्रमीः । इत्थं सनात् सनादेवारभ्य + + ननायाजायथाः[1] इति । तत्रार्बुदोऽपः प्रेरयतीति । स चायमन्यत्राद्युदात्तः ।

योो अर्बुदमव नीचा (ऋ. वे. २. १४. ४)

न्यर्बुदस्य विष्टपम् (ऋ. वे. ८. ३२. ३)

इति[2] । इह तु संहितानुरोधार्थमन्तोदात्तमभूत् । स्वरेणापि हि . . मा . . . स्य . . . सं . . . इ . . .[3] ॥

त्वं कुत्सम् । त्वं कुत्सं तस्य शत्रोः शुष्णासुरस्य सङ्ग्रामेषु रक्षितवानसि । तथा अतिथिग्वाय दिवोदासाय शम्बरमसुरं वशमनयः । तथा महान्तमर्बुदासुरं पदा न्यक्रमीः । किं बहुना चिरादेवारभ्य दस्युहननायासीः ॥ (६)

[1] पदा न्य in tact. Then a piece in the leaf broken off. Then सना in tact and another small piece broken off. Then there is ना and ए mark. Another very small bit broken off; but a small part of द visible. वारभ्य in tact. The next letter is द; a part alone remains and the end of the line broken. Next line begins ननायाजायथाः. The scribe who had prepared a transcript some years ago has written पदा न्यक्रमीः इत्थ सनातनमेवारभ्य . . . . ननायाजायथाः. Perhaps क्रमीः इत्थं was at that time in tact. What follows must be सनात् सनादेवारभ्य. In writing सनातनमेवारभ्य the scribe must have used his fancy. सना . . ना quite in tact even now. One सनात् unnecessary.

[2] In both these places the accent is on अ in अर्बुद. In विष्टपमिति, the letter मि completely worm-eaten.

[3] After अभूत् the leaf is broken and the passage till the end of the line lost. Nothing now remains. But the scribe who copied some years ago has written these letters. Now only स in स्व and इ remain. The letter before इ may have been यि or धि. Folio 41*a* ends here. About 18 letters must be missing.

त्वे विश्वा तविषी सध्र्यग्घिता तव राधः सोमपीथाय हर्षते ।
तव वज्रश्चिकिते बाह्वोर्हितो वृश्चा शत्रोरव विश्वानि वृष्ण्या ॥

त्वे । त्वधि[1] व्याप्तं बलं सध्रीचीनं पराङ्मुखं[2] हितम् । तव रायो[3] मनस्सोमपानार्थं हृष्यति । तव वज्रः प्रजायते बाह्वोन्निहितः भाहुर्बाधते[4] आभ्यामिति[5] । अपवृश्च[6] शत्रोर्विश्वानि वीर्याणि ॥

त्वे विश्वा । त्वयि सर्वाणि बलानि सह निहितानि । तव धनं सोमपानार्थं हृष्यति बहु भवति । तव वज्रः प्रख्यात आसीत् बाह्वोर्निहितः । स त्वं शत्रोः सर्वाणि वीर्याणि अववृश्च ॥ (७)

वि जानीह्यार्यान्ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान् ।
शाकी भव यजमानस्य चोदिता विश्वेत्ता ते सधमादेषु चाकन ॥

विजानीहि । . . . ये . . . . . दस्युः दारयति[7] याचतः ।

[1] Read त्वयि.

[2] प completely worm-eaten. Only a conjecture.

[3] Read राधः

[4] Read बाह्वोर्निहितः बाहुर्बाधते. After न्निहि a part of the leaf broken. हु partly visible. Only the second half of ब remains. ते mostly worm-eaten. Reading only a conjecture from the bits that remain.

[5] See : बाहुः कस्मात् । प्रबाधत आभ्यां कर्माणि (नि. ३. ८)

[6] Read अववृश्च.

[7] After वीर्यं at the end of the commentary on the previous verse, there is a break in the leaf and the whole line missing. The scribe has written these letters when he made a copy some years ago. The next line begins दारयति. The first letter is दा. The next letter worm-eaten; र only a conjecture. यति in tact. The missing letters in the broken line must be about 18.

ये चार्या ये च दस्यवः तान् विविच्य जानीहि । ज्ञात्वा च बहिष्मते[1] यजमानाय शासत् । इत्थमस्मासु[2] वर्तितव्यमित्यनुशासनं[3] कुर्वन् वशं नयाव्रतात् । शाकी भव सहायो भवसि यजमानस्य चेद . . . स्त्व . . . चेदन्तोदात्तः[4] ।

अर्चा शक्राय शाकिने (ऋ. वे. १. ५४. २)

क्रत्वा गौरिव शाकिनः (ऋ. वे. ८. ३३. ६)

इत्यकारान्तश्चान्तोदात्तः[5] । तान्येतानि विश्वानि कर्माण्यहं कामये यज्ञेषु कीर्त्यमानानि ।

विश्वेत्ता ते हरिवः शचीवः (ऋ. वे. १०. ४९. ११)

इति सूक्तयोः पदसाम्याच्चतुष्को[6] . . . न[7] विसृष्ट इति ॥

[1] Read बर्हिष्मते.

[2] First written अस्मात ; then त deleted with a small vertical stroke above and सु written after that.

[3] मि lost, as at this place the leaf is broken right across.

[4] After सहा there is a break and the whole line is lost. The last letter in the line चे is in tact. द is in the next line and is lost, as the end of the leaf is broken. The ए mark in न्तो too is thus missing. After सहा the ए mark in यो is seen. The scribe who prepared a copy some years ago has written all the letters till चेदन्तोदात्तः. About 16 letters are missing.

[5] In R. V. 1. 54. 2. The accent is on कि; in R. V. 8. 33, 6 the accent is on नः In the latter, शाकिन is the word.

[6] After इति सु there is a break in the leaf. The beginning of क्त is visible. The scribe has copied as सूक्तयोः. The end of प is seen ; also द and स. The आ mark in सा lost, as there is a break in the leaf. च्च is partly worm-eaten. ष्को ends the line.

[7] The first letter in the next line lost, as the end of the leaf is broken. न is the first letter seen ; perhaps पि is the missing letter and the reading should चतुष्कोऽपि. The passage not clear.

विजानीहि। विविच्य जानीह्यार्यान् दस्यूंश्च। ततोऽव्रताननुशास त्वं यजमानाय वशं नय। सहायो भव यजमानस्य धनस्य चोदयिता। सर्वाण्येव तानि यज्ञेषु वक्तुमहं कामितवानस्मि॥ (८)

**अनु॑व्र॒ताय॑ र॒न्धय॒न्नप॑व्रताना॒भूभि॒रिन्द्रः॑ श्न॒थय॒न्नना॑भुवः।**
**वृ॒द्धस्य॑ चि॒द्वर्ध॑तो॒ द्यामिन॑क्षतः॒ स्तवा॑नो व॒म्रो वि ज॑घान सं॒दिहः॑॥**

अनुव्रताय। यजमानाय रन्धयन्नयजमानान् अभृहिः[1] ये देवानाभवन्ति यज्ञैरुपगच्छन्ति तैरिन्द्रः श्नथयन्ननाभुवो[2] मा भूत्[3]। वृद्धस्य चिद्वर्धतः पुनर्वर्धमानस्येन्द्रस्य द्यामिनक्षतो व्याप्नुवत[4] इन्द्रस्य स्तुतिं कुर्वन् वम्र[5] ऋषिः सन्दिहो वल्मीकवपा उपचिता जघान।

वम्रभिः[6] पुत्रमश्रवो[7] अदानम् (ऋ. वे. ४. १९. ९)

वम्रकः पड्भिरुप[8] सर्पदिन्द्रम् (ऋ. वे. १०. ९९. १२)

इति॥

अनुव्रताय। अनुगतकर्मणे यजमानाय वशं नयन् अयजमानान् आभवद्भिर्वर्धमानैः विपरीतान् विश्लथयन् इन्द्रो वृद्धस्य वर्धमानस्य च शत्रोर्दिवं व्याप्नुवतः स्तूयमानो वमितेषूणां विहन्ति समुपचयान्॥ (९)

[1] Read आभूभिः

[2] Between श्नथ and य there is another य written below the line.

[3] मा भूत् not wanted.

[4] इनक्ष ends the line. The first letter in the next line lost as the end of the leaf is broken. Perhaps what was written was तो. The space must be more than what is required for तः

[5] म्र completely worm-eaten.

[6] Read वम्रीभिः

[7] Read पुत्रमग्रुवो.

[8] ड्भि not at all legible.

तक्षद्यत्त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः ।
आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः ॥

तक्षत् । इन्द्रस्य[1] । उशना काव्यः । सचा भवन्ति ससञ्चस्का[2] + येन[3] बलेन यदा तव बलं तदा तव शवो विबबाध रोदसी मज्मना वेगेन संगते पृथक् चकार । यदि वा रोदस्योर्भयं बाधार्थम् । आवहन् त्वा वातस्य मनोयुजः । वातस्याश्वा वेगवन्तः तथोच्यते[4] । नृमणो बलेनापूर्यमाणं श्रवोऽन्नमभीति[5] ॥

तक्षद्यत्ते । यदा तव बलमुशनाः स्तुतिबलेन समस्करोत् तदा महत्तया द्यावापृथिव्यौ अवबाधते । तदानीं त्वामश्वा वातस्य श्रवणमभ्यावहन् बलेनापूर्यमाणं नृमणो मनोवेगाः । शुष्णान्महान् वातो निर्गतस्तमभ्यवहन् इति ॥ (१०)

मन्दिष्ट यदुशने काव्ये सचाँ इन्द्रो वङ्कू वङ्कुतराधि तिष्ठति ।
उग्रो ययिं निरपः स्रोतसासृजद्वि शुष्णस्य दृंहिता ऐरयत्पुरः ॥

मन्दिष्ट[6] । यदा कविपुत्रे उशनसि सोमेन मन्दिष्ट सचा सन् तदानीमिन्द्रो वङ्कू हरि[7] अध्यतिष्ठत् । वङ्कुरश्वो वकेः कुटिलगत्यर्थात् । अत्यन्तं वङ्कुर्वङ्कुतरः । प्रकृत्यर्थप्रकर्षे[8] तरप्रत्ययो यथा ।

[1] The need for this word not clear.

[2] Passage not clear. This must belong to the next verse. This ends the line.

[3] The first letter in the line lost as the end of the leaf is broken. येन is what is seen.

[4] It ought to be तथोच्यन्ते.

[5] भी mostly worm-eaten.

[6] न्दिष्ट mostly worm-eaten.

[7] Perhaps to read वङ्कूं वङ्कुतरा or वङ्कू हरी.

[8] प्र in प्रकर्षे mostly worm-eaten.

अहन् वृत्रं वृत्रतरं (ऋ. वे. १. ३२. ५)

इति[1] । तत्र वंकुतराविति पुनः प्रकृतेर्निर्देशः प्रत्ययप्रत्ययोगार्थः[2] । यदा[3]

दस्रा दंसिष्ठा (ऋ. वे. १. १८२. २)

यथा वा

गवामसि गोपतिरेक इन्द्र[4] (ऋ. वे. ७. ९८. ६)

इति । उग्र इन्द्रो यर्धि[5] मेगमूपम्[6] । कानि[7] । स्रेतसा[8] मार्गेण । निरस्रजदिति द्विकर्मकः[9] । वैरयश्च[10] शुष्णासुरस्य प्रापकारैद्राहिकाः[11] पुरः ॥

मन्दिष्ट यत् । कविपुत्रे उशनसि स्तोत्रेण यदा सहाय इन्द्रोऽमन्दिष्ट तदानीमिन्द्रो वङ्कुं वङ्कुतरं च अश्वौ गमनार्थमध्यतिष्ठत् । अथोद्गूर्ण इन्द्रो मेघरूपं शुष्णासुरं स्रोतसापो निरसृजत् । व्यैरयत् शुष्णासुरस्य शिलासंघटिताः पुरः ॥ (११)

**आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे ।**
**इन्द्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि ॥**

[1] All the letters after यथ up to मि mostly worm-eaten. Reading only a conjecture.

[2] Read प्रत्ययप्रयोगार्थः

[3] Read यथा.

[4] इन्द्र completely lost as a piece of the leaf is broken off.

[5] Read यर्थि.

[6] Read मेघरूपम्.

[7] This word seems unwanted. Folio 41*b* ends here.

[8] Read स्रोतसा.

[9] क and one म in र्म completely worm-eaten.

[10] Read व्यैरयश्च.

[11] Not clear.

आ स्म । आतिष्ठसि स्म रथं वृषपाणेषु सोमेषु । तेषां पानार्थम् । वृषपाणाः सोमाः वृष्णां देवानां पेया इति[1] । शार्यातस्य राजर्षेर्यज्ञे संभृतास्सोमा अभवन् । येषु सोमेषु[2] त्वं मन्दसे । यथेन्द्रस्सुतसोमेष्वन्येषां यज्ञेषु सोमांश्चाकन एवं शातर्यातस्यापि[3] सोमांश्चाकनः । तेनानर्वाणं प्रश्वलितं[4] श्लोकं यशो दिव्यारोहसे प्रापयसि[5] । च्यवनो भ वै[6] भार्गव[7] शार्यातस्य यज्ञेऽश्विनोराश्विनग्रहमगृह्णात् । तत्र क्रुद्धोऽभूदिन्द्रः । पुनश्चानुनीतस्तत्र सोममपिबत् इति शाट्यायनकोक्तः इति ॥

आ स्मा रथम् । आतिष्ठसि रथं सोमपानार्थम । शार्यातस्य इन्द्रं सोममाजिहीर्षतो हविर्धानात् प्रभृताः सोमाः । येषु त्वं मन्दसे । ततो रथमास्थितवानसि । ततो यथान्येषु सुतसोमेषु सोमान् कामितवानसि एवं तत्रापि कामितवानसि । तन्तौ प्रस्खलितं श्लोकं आरोहयः । तत्रापि पानादिति ॥ (१२)

**अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते ।**
**मेनाभवो वृषणश्वस्य सुक्रतो विश्वेत्ता ते सवनेषु प्रवाच्या ॥**

अददाः । अददा अर्भां युवतिम् । महते वृद्धाय । उपस्यवः[8]

[1] इति completely worm-eaten.

[2] सो and ए mark in मे mostly worm-eaten.

[3] Read शार्यातस्यापि.

[4] Read प्रस्खलितं. The nearest approximate of what is written is श्व. Not at all legible.

[5] After प्रा space for two letters left blank. The reading only a conjecture.

[6] Read च्यवनो ह वै.

[7] Read भार्गवः

[8] This word not wanted. Or read वचस्यवे.

स्तोत्रमिच्छते कक्षीवते औशिजाय । वृद्धायां[1] नामेन्द्र सुन्वते । कक्षीवान् कक्ष्यावान् । कक्ष्या रज्जवः याजकानं[2] कक्षं सेवन्ते[3] । सोऽयन्देर्धतमस्यो[4] यद्यपि प्रब्रऋषिः[5] उशिक्प्रसूतत्वात् तस्य कुले वृद्धश्चकाराज्यम्[6] । राजसूयेन चेजे । तत एव राजसूये राजसामसु काक्षीवतं चोपमतः[7] कक्षीवानिति क्षत्र्यनामस्योपपन्नं[8] इति । किञ्च मेनाभवो वृषणश्वस्य राज्ञः सुक्रतो । तत्र शाट्यायकम्[9]—वृषणश्वस्य मेन इति । वृषणश्वस्य भे[10] मेना भूत्वा मघवा कुल उवास इति[11] । तां प्राप्तयौवनां स्वयमेवेन्द्रश्चकमे[12] । तथा च ताण्डकम्—वृषणश्वस्य ह मेनस्य मेनस्य[13] मेनका नाम दुहितांस[14] । तां हेन्द्रश्चकमे इति[15] । मेना मन्य[16] मानयति पुरुषं इति यास्कः[17] । विश्वान्येव तानि ते सवनेषु प्रवाच्यानीति ॥

[1] Read वृचयां.

[2] Read याजकानां.

[3] Read सेवते.

[4] Perhaps to read सोऽयन्दैर्घतमस्यो.

[5] Perhaps to read ब्रह्मऋषिः

[6] Reading corrupt. Perhaps to read वृद्धश्चचार राज्यम्.

[7] Perhaps to read चोक्तम् । अतः

[8] Read क्षत्रियनामास्योपपन्नं.

[9] Read शाट्यायनकम्.

[10] Not clear what the correct reading for भे is. Perhaps to read ह.

[11] इति not wanted here. Or perhaps the quotation ends here and the next is not a part of the quotation.

[12] Perhaps इति to come here. Or this is not a part of this quotation and is not wanted. See previous note.

[13] Repetition of मेनस्य not wanted.

[14] Read दुहितास.

[15] Ṣ. B. 1. 1. 16.

[16] Perhaps to read मान्या. The letter म mostly worm-eaten. Only a conjecture.

[17] What is formed in Yāska is : मेना मानयन्त्येनाः (नि. ३. २१).

अददा अर्भाम् । दत्तवानसि कन्यां महते स्तुतिमते इच्छते कक्षीवते वृचयां नाम भार्यां इन्द्र सुन्वते । तथा मेना चाभवो वृषणश्वस्य सुक्रतो । विश्वानि तानि इमानि ते यज्ञेषु प्रवाच्यानि । अत्र शाट्यायनकम्—वृषणश्वस्य मेन इति । वृषणश्वस्य ह मेना भूत्वा मघवा कुले उवास इति । अथ ताण्डकम्—वृषणश्वस्य मेन इति । वृषणश्वस्य हि मेनस्य मेनका नाम दुहितास । तां हेन्द्रश्चकमे इति । वृषणश्वस्य राज्ञो मेना नाम दुहिता त्वमभवः स्वांशेन । अथ तां चकमे चेन्द्र इत्यर्थः ॥ (१३)

इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः ।
अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता ॥

इन्द्रः । इन्द्रः श्रयति सुकर्मणो यजमानान । निरेके नैर्धन्ये सति । निरेको रितिचेः[1] । अपिवा निरेतः ।

आ निरेकमुत प्रियम् (ऋ. वे. ८. २४. ४)

इति धने च दृश्यते ।

निरेके[2] चिद्यो हरिवो वसुर्ददिः (ऋ. वे. ८. २४. ३)

वज्रा[3] अंङ्गिरसः पज्रकुलजत्वात् । पज्रो वा अङ्गिरसः पशुकामस्तपोऽतप्यतेचे[4] शाट्यायनकम् । तेष्वस्य स्तोमस्तिष्ठति । यथा गृहद्वारि निमितो[5] यूपः स्तोतव्यः[6] । इन्द्रः[7] पज्रेषु तिष्ठति इत्यपरम । मत्वर्थीयो

[1] Read निरिचेः

[2] The first letter looks more like रि than like नि.

[3] Read पज्रा.

[4] Perhaps to read तप्यतेति च.

[5] Perhaps to read निर्मितो. The letters निमि in tact. The next is mostly worm-eaten. May be the ए mark of तो. Then ता in tact. Reading only a conjecture.

[6] Visarga completely worm-eaten.

[7] Folio 42*a* ends with इ.

युः[1] । तथाच निरुक्तम्—इदंयुरिदं कामधानोऽथापि[2] तद्वदर्थे भाष्यन्ते[3] वसूयुरिन्द्रो वसुमानश्वयुर्गव्यू[4] रथयुर्वसूयुरित्यपि निगमो भवति इति[5] । इन्द्र एव राया[6] प्रथन्ता[7] प्रदाता वसति ॥

इन्द्रो अश्रायि । इन्द्रः स्तोतृभिराश्रीयते । सुकर्मणस्तस्य निर्गमने पञ्रकुलजातेष्विन्द्रस्य स्तोमो दुर्यः । यज्ञस्थः । अङ्गिरसः पज्राः । पज्रो वाङ्गिरसः पशुकामस्तपोऽतप्यत—इति शाट्यायनकम् । अश्वादीन् स्तोतृभ्य इच्छन् इन्द्र एव धनस्य प्रदाता निवसति ॥　(१४)

**इदं नमो वृषभाय स्वराजे सत्यशुष्माय तवसेऽवाचि ।**
**अस्मिन्निन्द्र वृजने सर्ववीराः स्मत्सूरिभिस्तव शर्मन्त्स्याम ॥**

इदम् । इदं नमस्तोत्रं वृषभाय स्वराजे समित्यशुष्माय[8] । शुष्मो बलं शोषयतीति । तवसे वृद्धाय । अवाचि । अस्मिन्निन्द्र वृजने युद्धे सर्ववीराः प्रसृतवीराः । स्मदिति निपातः सुपर्यायः[9] । त्वया दत्ते शर्मणि सूरिभिः पुत्रादिभिः ऋत्विग्भिर्वा सहिताः सुखं वसेमेति[10] ॥

[1] In दुर्य.

[2] Read कामयानो.

[3] Read भाष्यते.

[4] सुमान completely worm-eaten. The printed editions have वसुमानित्यत्रार्थः instead of वसुमान्.

[5] N. 6. 31.

[6] व and रा completely worm-eaten. Reading only a conjecture.

[7] Read प्रमन्ता.

[8] Read सत्यशुष्माय.

[9] Read सुखपर्यायः

[10] Here there is the figure four to mark the end of the sūkta.

इदं नमः । इदं नमनसाधनं स्तोत्रं वृषभाय स्वयमेव सर्वेषामीश्वराय सत्यबलाय वृद्धाय अस्माभिः उक्तम् । अस्मिन्निन्द्रोपद्रवे सर्वैर्वीरैर्युक्ता अस्माकं स्तोतृभिश्च सह तव सुखे कल्याणे स्याम ॥ (१९)

---

त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते ।
अत्यं न वाजं हवनस्यदं रथमेन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥

त्यं सु । तमिन्द्रं सुमहय । मेषं सर्वज्ञम् । शतं स्तोतारस्सह यस्य स्तोत्रमीरयन्ति । यदि वा शतमश्वा यस्य रथं प्रेरयन्ति ।

न वायन्ति सह्नो[1] देवयुक्ताः (ऋ. वे. ७. ६७. ८)

इति । अत्यमिव पानजं[2] हवनं प्रतिगन्तारं यागार्थं प्रति[3] इन्द्रमावर्तयामि सुवृक्तैः स्तोत्रैः । अत्योऽततोः[4] । अपिवा वयेतेः[5] । वाजोऽश्व इति ॥

त्यं सु मेषम् । तं सुष्ठु पूजय सर्वज्ञं मेधातिथेर्मेषम् । शतं यस्य प्राज्ञाः सहोत्तिष्ठन्ति । वेगवन्तमिवाश्वं रथं हवनं प्रति गन्तारं आवर्तयामि इन्द्रं रक्षणाय स्तोत्रैः ॥ (१)

[1] Read सुभ्वो.
[2] Read वाजं.
[3] यागं प्रति is enough.
[4] Read अत्योऽततेः
[5] Not clear.

**स पर्वतो न धरुणेष्वच्युतः सहस्रमूतिस्तविषीषु वावृधे ।**
**इन्द्रो यद्वृत्रमवधीन्नदीवृतमुब्जन्नर्णांसि जर्हृषाणो अन्धसा ॥**

स पर्वतः । स शिलोच्चय इवोदकधारासु अक्षीणो बहुरक्षणो बलेषु[1] ववृधे । इन्द्रो यदा वृत्रमवधीन्नदीनां आवारकम् । वृत्रनिरुद्धान्यर्णांसि न्युब्जन् अधः पातयन् । हृष्यन् सोमेन । अन्धस्सोमेत्तेरिति[2] ॥

स पर्वतः । स शिलोच्चय इव उदकधारास्वक्षीणो बहुरक्षणः शत्रुबलेषु प्रविष्टो ववृधे । इन्द्रो यद्वृत्रमवधीन्नदीनां आवरितारं वृत्रनिरुद्धान्युदकानि तेजोभिर्विध्यन् हृष्यन् सोमेन ॥ (२)

**स हि द्वरो द्वरिषु वव्र ऊधनि चन्द्रबुध्नो मदवृद्धो मनीषिभिः ।**
**इन्द्रं तमह्वे स्वपस्यया धिया मंहिष्ठरातिं स हि पप्रिरन्धसः ॥**

स हि । वाचो चारयतेः[3] । स वारको वारयितृष्विति निर्धारणम् । वप्रो[4] व्याप्तः । ऊधनि । नभ ऊधः जलस्योद्धरणात् । चन्द्रबुध्नो ह्लादकमूलः । ह्लादयति प्रजा अन्तरिक्षे । यदस्य बद्धकर्म[5] । मदवृद्धः सोमैः वर्धितो मनीषिभिः । मनीषा निपुणा बुद्धिः । इन्द्रं तमह्वो[6] ॥

[1] ब mostly worm-eaten.

[2] Read अन्धस्सोमोऽत्तेरिति.

[3] Perhaps to read द्वरो वारयतेः The letter चा mostly worm-eaten.

[4] Read वव्रो.

[5] Not clear. Perhaps this has something to do with the words स्वपस्यया धिया which follow.

[6] Read तमह्वे. The rest of the commentary in this verse missing. There is no break in the MS.

स हि दूरः। स हि वारयिता वारयितृणां मध्ये वरणीयः श्रद्धेयोऽप्यर्थे। कमनीयबुध्नः स्तोत्रैर्वृद्धो मनीषिभिः। तमिन्द्रमहं शोभनकर्मेच्छया बुध्या ह्वयामि पूज्यतमदानम्। स ह्यन्नेन मां पूरयति॥ (३)

**आ यं पृणन्ति दिवि सद्मबर्हिषः समुद्रं न सुभ्व१ः स्वा अभिष्टयः।**
**तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इन्द्रमवाता अहुतप्सवः॥**

नद्यं[1] स्वा अभिगन्त्यः[2]। तं वृत्रहनने अनुतस्थुर्मरुतः। शोषका इन्द्रं वातरहिताः। वातः शोषः। अहृतप्सवः[3] भारवहनेऽप्यनन्तरूपा इति॥

आ यं पृणन्ति। आपूरयन्ति यं दिवि स्थितं सोमं उदधिमिव शोभनभवनाः आत्मीया अभिष्टयः। तं वृत्रहननेऽनुतस्थुर्मरुतः शोषकाः इन्द्रं गमनरहिता अपालयितारोऽहिंसितरूपाः॥ (४)

**अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः।**
**इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधीँरिव त्रितः॥**

अभि। अभिसस्त्र[4] स्वभूतवृष्टिं वृत्रं सोममदे युध्यतोऽस्याग्रे ऊतयः। यथा लघ्व[5] आपः प्रवणे स्यन्दन्ते। इन्द्रो यदा वज्री यविधन्नन्धसा[6]

[1] Read नद्यः This is how the commentary on the verse begins. The earlier portion missing. No break in the MS.; see note 6; p. 401.

[2] Read अभिगन्त्र्यः

[3] Read अहुतप्सवः

[4] Read अभिसस्रुः

[5] Read लघ्व्य.

[6] न्नन्ध worm-eaten and can scarcely be deciphered. Perhaps to read धर्षयन् अन्धसा.

पीतेन। यथाप्यस्त्रियमतः[1] परिधीन् कूपस्य द्वारि भ्रातृभ्यां[2] निहितान्। एवं वलमभिनदिति ॥

अभि स्ववृष्टिम्। स्वा वृष्टिर्यस्य तं सेममदे युध्यतः इन्द्रस्यास्य साहाय्यार्थं यथा प्रवणे आपो यन्त्येवं अभिसस्रुर्मरुतः। इन्द्रो यदा वज्री सोमेन धर्षयन् बलमभिनत् पापानीव त्रित आप्त्यः ॥ (९)

**परीं घृणा चरति तित्विषे शवोऽपो वृत्वी रजसो बुध्नमाशयत्।**
**वृत्रस्य यत्प्रवणे दुर्गृभिश्वनो निजघन्थ हन्वोरिन्द्र तन्यतुम् ॥**

वरीम्[3]। घृणा दीप्तिर्जिघर्तेः। अन्तोदात्तः। अश्वश्चेदाद्युदात्तः।

हृणा न ये ध्रूजसा[4] (ऋ. वे. ६. ३. ७)

इति। परिवारत्येन[5] दीप्तिः। दीप्तश्चाभवत्[6] बलम्। अपो वृत्वा उदकस्य बुध्ने आशिश्ये अन्तरिक्षे। वृत्रस्य यदा प्रवणे वर्तमानस्य दुर्गृहिश्वनः। दुर्ग्रहगतिशीघ्रो दुर्गृहिश्वेत्याहुः। तस्य। रिजघन्ध[7] हनोरिन्द्र[8] तन्यतुं शब्दकारिणं वज्रम्। हनुर्हन्तेदिरिति[9] ॥

[1] Read यथाप्यस्त्रित:

[2] First written भ्रातृव्यां. Then भ्य written below व्य.

[3] Read परीं.

[4] Read घृणा न यो ध्रजसा. Here the accent is on घृ. Folio 42*b* ends with ध्रज.

[5] Read परिचरत्येनम्. The letter वा is partly worm-eaten.

[6] त् completely worm-eaten. Read दीप्तश्चाभवत्.

[7] Read निजगन्थ.

[8] Read हन्वोरिन्द्र.

[9] नु and र्ह mostly worm-eaten. Read हनुर्हन्तेरिति.

परीं घृणा। परिचरति वृत्रं दीप्तिः। बलं च तस्य दीप्तम्। अप आवृत्य अन्तरिक्षलोकस्य बुध्नमपां मूलं आवृत्य अशयत्। वृत्रस्य यदा प्रवणे दुर्ग्रहश्वासस्य निहितवान् हन्वोरुपरि इन्द्र वज्रं शब्दकारिणम्॥ (६)

**ह्रदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना।**
**त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम्॥**

हृदम्[1]। ह्रदस्सरो ह्रादेः शब्दार्थात्। यथा ह्रदमर्मयो[2] न्यृषन्ति तथा त्वा न्याषन्ति[3] ब्रह्माणीन्द्र तव यानि वर्धनानि। त्वधि[4] पुनः पुनः प्रेर्यन्त इत्यर्थः। त्वष्टा च तव योग्यं बलमवर्धयत। स ततक्ष वज्रमभिभावुकबलमिति॥

ह्रदं न हि। ह्रदमूर्मय इव त्वां तव वर्धनानि स्तोत्राणि न्यृषन्ति तवोपरि चलन्ति। त्वद्विषये पुनः पुनः प्रवर्तन्ते। त्वष्टा च तव सदृशं बलं वर्धितवान्। अकरोद्वज्रमभिभवितृबलम्॥ (७)

**जघन्वाँ उ हरिभिः संभृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः।**
**अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे॥**

जव्यन्वान्[5]। जघन्वान्[6] खल्वश्वैः संभृतकर्मन्निन्द्र वृत्रं मनुषे

[1] Read ह्रदम्.

[2] Read ह्रदमूर्मयो.

[3] Read त्वां न्यृषन्ति.

[4] Read त्वयि.

[5] Read जघन्वान्. There is only slight difference between घ and व्य. But what is written is definitley व्य and not घ.

[6] न्व completely worm-eaten.

जनाय गातुमिच्छन्नप: प्रावर्तय इति[1] क्रिया[2] । अयच्छथा बाह्वोर्वज्रमयो-मयम् । आथसशब्द:[3] अयेष्वित्यन्तोदात्त:[4] । विस्तृतेष्वाद्युदात्त:[5] ।

हस्तयोर्वज्रमायसम् (ऋ. वे. १. ८१. ४)

वाशीमेको बिभर्ति हस्त आयसीम् (ऋ. वे. ८. २९. ३)

आयसीमतरत् पुरम् (ऋ. वे. ८. १००. ८)

विस्तृदेतादाहरणम्[6] —

शतं पूर्भिरायसहीभि:[7] (ऋ. वे. ७. ३. ७)

ऊजो पात्[8] पूर्भिरायसीभिः (ऋ. वे. १. ५८. ८)

इति । अधारयश्च सूर्यं दिवि दर्शनीयमिति[9] ॥

जघन्वान् । जघन्वानश्वैः संभृतप्रज्ञ वृत्रं मनुष्यार्थमपो गमयितुमिच्छन् अग्रहीः बाह्वोरायसं आयुधम् । अथ तं हत्वा सर्वेषां दर्शनाय दिवि सूर्यमधारयः ॥ (८)

**बृहत्स्वश्चन्द्रममवद्यदुक्थ्य१मकृण्वत भियसा रोहणं दिवः ।**
**यन्मानुषप्रधना इन्द्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ॥**

[1] इ looks more like ड.
[2] Perhaps to read क्रियाध्याहार:
[3] Read आयसशब्द:
[4] Perhaps to read अयोमयेष्वन्तोदात्त:
[5] व part in ष्वा completely worm-eaten.
[6] Read विस्तृते तूदाहरणम्.
[7] Read पूर्भिरायसीभिः
[8] Read नपात्.
[9] In the first three cases the accent is on स and सी. In the last two cases the accent is on आ.

बृहत् । बृहत साम । स्वश्चन्द्रश्चन्द्रं[1] ह्लादकं तेजः स्वभृतं यस्य । अमवद्बलवत । यदोर्थार्हं[2] अकण्वत[3] वृत्रहयेन[4] दिवो रोहणनिमित्तम् । द्युभक्ति हि बृहत तज्जयार्थं प्रयोज्यम् । यदा च मानुषप्रधना मनुष्यहितसङ्ग्रामा इन्द्रं मरुतः स्वः सर्व एव नृषाचः प्राणा भूत्वा नृत्त[5] सेवमानास्त्वामन्वमदन् । उत्तरत्र सम्बन्ध इति ॥

बृहत्स्वश्चन्द्रम् । बृहत्साम स्वयमेव कान्तं बलवद्यदा प्रशस्यमकुर्वत भयेन स्तोतुर्दिवो रोहणनिमित्तम् । यदा वां मनुष्यहितसङ्ग्रामा इन्द्रं मरुतः स्वर्दिवि स्थितं देवाः सन्तो मनुष्यान् सेवमाना अन्वमदन् । उत्तरत्र संबन्धः ॥ (९)

**द्यौश्चिद॒स्याम॑वाँ अहे॑ः स्व॒नादयो॑यवीद्भि॒यसा॒ वज्र॑ इन्द्र ते ।**
**वृ॒त्रस्य॒ यद्ब॑द्बधा॒नस्य॑ रोद॒सी मदे॑ सु॒तस्य॒ शव॒साभि॑न॒च्छिरः॑ ॥**

द्यौश्चित् । द्यौरपि बलवानस्य हेः[6] स्वनात् हिसहायेन[7] तदानीमकम्पत । यदा च तव वज्रो वृत्रस्य सर्वं जगत बाधमानस्य शिरश्शवसा तव सोमस्य मदेऽभिनदितिन्द्रम्[8] । तदिदं कर्म रोदस्योर्निवेदयति रोदसी इति ॥

द्यौश्चिदस्य । द्यौरपि बलवान् अस्य अहेः स्वनात् तदानीं भयेन अयोयवीत् अकम्पत । यदा द्यावापृथिवी बाधमानस्य सोमस्य मदे तव वज्रो

[1] Read स्वश्चन्द्रं चन्द्रं.
[2] Read यदोक्थार्हं.
[3] Read अकृण्वत.
[4] Read वृत्रभयेन.
[5] Read नॄन्.
[6] Read अहेः
[7] Perhaps to read अहिसहायेन or better अहिभयेन.
[8] Read only मदेऽभिनत. The part इतिन्द्रम् not wanted.

बलेन वृत्रस्य शिरोऽभिनत् तदा अयोयवीदिति । वृत्र एव आहननात् अहि-रुच्यते ॥ (१०)

**यदि॒न्न्वि॑न्द्र पृथि॒वी दश॑भुजि॒रहा॑नि॒ विश्वा॑ त॒तन॑न्त कृ॒ष्टय॑: ।**
**अत्राह॑ ते मघव॒न्विश्रु॑तं॒ सहो॒ द्यामनु॒ शव॑सा ब॒र्हणा॑ भुवत् ॥**

यदित् । यत्खल्विन्द्रेयं पृथिवी दशभुजिर्दशगुणो भवेत् । यदि चाहानि सर्वाण्येव विस्तारयेयुः मनुष्याः । अत्रैव ते मघवन् विश्रुतं सहो बलं वृत्रवधादिकारणम्[1] । न शत्रूणां बलेन कृतावरिबर्हणा[2] द्यामनुभवति । यथा महती द्यौरेवं[3] महती बहुभिर्महता च कालेन तव बलकृतयः शक्याः प्रकाशयितुमित्यर्थः[4] ॥

यदिन्न्विन्द्र । यद्येवेयमिन्द्र पृथिवी दशगुणा भवति यदि चाहानि सर्वाण्येव विस्तारयेयुः मनुष्याः सर्वदा ब्रुवाणाश्चरेयुरत्रैव ते मघवन् बलकृतं सर्वं कर्म विश्रुतं भवति तव बलेनागतं शत्रुहिंसनं द्युसदृशं भवति महत्तया इति ॥ (११)

**त्वम॒स्य पा॒रे रज॑सो॒ व्यो॑मनः॒ स्वभू॑त्योजा॒ अव॑से धृषन्मनः ।**
**च॒कृ॒षे भूमिं॑ प्रति॒मान॒मोज॑सो॒ऽपः स्व॑: परि॒भूरे॒ष्या दिव॑म् ॥**

त्वम् । व्योमान्तरिक्षं व्यवेः व्याप्तं हि । त्वमस्य व्योमनो रजसोऽन्तरिक्षस्य पारे स्वभूत्योजाः स्वभूतबलोऽवसे[5] सर्वेषां च रक्षणाय सपत्नानां

[1] The आ mark in धा and the letter दि completely worm-eaten.
[2] Perhaps to read कृता अरिबर्हणा.
[3] औ mark in द्यौ completely worm-eaten.
[4] Passage not clear.
[5] Folio 43*a* ends with स्वमू.

धर्षणशीलमनः । कृतवानसीमां भूमिं यस्त्वं बलवतां बलस्य[1] प्रतिमानमसि । तथापस्त्वमपः[2] स्वः सर्वम् । अन्तरिक्षम् । आ दिवश्च[3] दिवश्चैष[4] व्याप्तोषि त्वम् ॥

त्वमस्य पारे । त्वमस्यान्तरिक्षलोकस्यान्ते स्थितः सन् स्वभूतबलो रक्षणार्थं शत्रूणामभिभवनशीलचित्त तिष्ठसि । चकृषे कृतवानसि च भूमिम् । बलवतां बलस्य प्रतिद्वन्द्वि त्वमन्तरिक्षं सर्वं परिभवन् आगच्छसि दिवमिति ॥

**त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः ।**
**विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् ॥**

त्वम् । त्वं भुवः[5] प्रतिमानं[6] पृथिव्या दर्शनीयवीयस्य[7] । देवा वीराः । बृहतः स्वर्गस्य पतिरभवः । विश्वं त्वमाप्रा अन्तरिक्षं महत्वेन । सत्यमर्धा[8] सत्यं तथा सोऽयमर्थः । नास्त्यन्यस्त्वत्सदृश इति ॥

त्वं भुवः । त्वं भुवः प्रतिमानं पृथिव्या दर्शनीयवीरस्य स्वर्गस्य पतिरभवः । विश्वमापूरितवानसि अन्तरिक्षं महत्तया । सत्यं अद्धा इति सत्यनामनी । सत्यं तथैव न त्वत्सदृशः कश्चिदस्तीति ॥ (१३)

[1] ब completely worm-eaten.

[2] Read तथा त्वमपः

[3] श्च not at all legible. Only a conjecture as the nearest approximation.

[4] Repetition of दिवश्च not wanted. Read दिवं चैषि.

[5] भुवः completely worm-eaten.

[6] मानं completely worm-eaten.

[7] व्या and द completely and the top portion of र्शनी lost as the corner of the leaf is broken. Read दर्शनीयवीर्यस्य.

[8] Read सत्यमद्धा.

**न यस्य द्यावापृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः ।**
**नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक् ॥**

धनयस्य[1] । धस्येन्द्रस्य[2] द्यावापृथिव्यौ व्यचो व्याप्तिं नान्वानशाते । न चान्तरिक्षे[3] स्यन्दमाना आपः[4] यस्य तेजसान्तमानाशुः[5] । अस्यैव वाक्यस्य शेषो नोतेति । किं च सोममदे वृत्रं युध्यतोऽस्य रजसे[6] नानशुरिति । प्रत्यक्ष उत्तरः पादः ॥

न यस्य । यस्येन्द्रस्य द्यावापृथिव्यावपि व्याप्तिं नान्वानशाते । न नद्योऽपि तेजसोऽन्तमापुः । नापि च वृत्रं सोममदे युध्यतोऽस्य तेजसोऽन्तं आनशुः । किं बहुना एक एव त्वं अन्यत्सर्वमनुस्यूतं कृतवानसि ॥　　(१४)

**आर्चन्नत्र मरुतः सस्मिन्नाजौ विश्वे देवासो अमदन्ननु त्वा ।**
**वृत्रस्य यद्भृष्टिमता वधेन नि त्वमिन्द्र प्रत्यानं जघन्थ ॥**

एन्वमदन्[7] ।

अनु त्वा पत्नीहृषीतं[8] वयश्च[9] (ऋ. वे. १. १०३. ७)

[1] Read only न यस्य.

[2] Read यस्येन्द्रस्य.

[3] च in चा completely worm-eaten. It may as well be न वान्तरिक्षे.

[4] आ mostly worm-eaten.

[5] Read तेजसोऽन्तमानशुः The आ mark in मा completely worm-eaten.

[6] Read रजसोऽन्तं.

[7] The beginning of the commentary on this verse missing. There is no break in the MS. Read अन्वमदन् .

[8] Read पत्नीर्हृषितं.

[9] व य mostly worm-eaten.

इत्यत्र विश्वे देवा न मरुत एव । ततो न सृष्टः । वृत्रस्य यदा भृष्टिमता युद्धेन । भृष्टिरश्रिश्रींशयतीति । जनिजघन्थ[1] त्वमानं[2] प्रति । मुखमानम् । अपि वा घ्राणमिति[3] ॥

आर्चन्नत्र । प्रहर भगवो जहि वीरयस्व इति सर्वस्मिन्नस्मिन् सङ्ग्रामे मरुत इन्द्रमार्चन् व्याप्ता मरुतो देवास्त्वां अन्वमदन् । मदिः सकर्मकश्च भवति । वृत्रस्य यदा अश्रिमता वज्रेण निजघन्थ त्वमिन्द्राननसाधनं मुखं प्रति ॥ (१९)

---

न्यू३ षु वाचं प्र महे भरामहे गिर इन्द्राय सदने विवस्वतः ।
नू चिद्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते ॥

न्यू षु । सुनिप्रहराममो[4] वाच[5] महते इन्द्राय । वाग्वचेः । स्तुतय इन्द्राय भवंति[6] यजमानस्य सदने । स हि क्षिप्रमेव रत्नं स्वपतामिव चोरोऽसुराणां विन्दति । न च दुष्टुतिर्धनप्रदेषु[7] शनस्यते[8] । तस्मात् स्तुतिं सुनिप्रभरामह इति ॥

[1] The initial ज not wanted.

[2] The anusvāra not legible.

[3] Here there is the figure six to mark the end of the sūkta.

[4] Read सुनिप्रभरामो or सुनिप्रभरामहे.

[5] Read वाचं.

[6] First written भवति. Than an anusvāra added after व just below the line. Read भवन्ति.

[7] दु looks more like पु.

[8] Read शस्यते.

न्यू षु वाचम् । सुनिप्रभरामहे स्तोत्रं महते इन्द्राय यजमानस्य गृहे स्तुतय इन्द्राय भवन्ति । क्षिप्रमेव हि शत्रूणां रत्नं स्वपतामिव धनं चोरः इन्द्रो विन्दति । ततः प्रभरामहे । तत्र च धनप्रदेषु दुष्टुतिर्न प्रशस्यते । तस्मात् सुष्टु प्रभरामहे ॥ (१)

दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः ।
शिक्षानरः प्रदिवो अकामकर्शनः सखा सखिभ्यस्तमिदं गृणीमसि ॥

दुरम्[1] । दुरो ददातेः दाता । द्वारवचन आद्युदात्तः[2] ।

अपावृणोद्दुरो अश्मप्रजानाम्[3] (ऋ. वे. १०. १३९. ६)

वसुन[4] इनः स्वामी । इन इनतः[5] प्रेरणार्थात् । पति[6] पालयिता । शिक्षाना[7] उदारः शिक्षां दानं नयतीति । प्रदिवः पुराणः प्रगता बहवोऽस्य दिवसा इति । यः स्तोतॄणां न कर्शयति कामान् सोऽकाम-शर्शनः[8] । सखा सखिभ्यां[9] । तमिमं[10] स्तुमः ॥

[1] Read दुरः

[2] त्त looks more like र्त.

[3] Read अश्मव्रजानाम्.

[4] A few words left uncommented.

[5] Read इनते:

[6] Read पतिः

[7] Read शिक्षानरः. The आ mark in न worm-eaten. But it is ना and not न र.

[8] Read सोऽकामकर्शनः

[9] Read सखिभ्यः

[10] Read तमिदं.

दुरो अश्वस्य । दाता अश्वस्य दाता इन्द्र गोश्च असि । दुरो यवस्य धनस्य ईश्वरः पालयिता । शिक्षाया नेता शासिता सर्वेषां पुराणः कामानामकशिता सखा सखिभ्यः । तं वयमिदं स्तुमः ॥ (२)

**शचीव इन्द्र पुरुकृद्द्युमत्तम तवेदिदमभितश्चिकिते वसु ।**
**अतः संगृभ्याभिभूत आ भर मा त्वायतो जरितुः काममूनयीः ॥**

शचीवः । प्रज्ञावन् इन्द्र बहवोः[1] कर्ता रतिशयेन[2] दीप्त तवैवेदं संभृतं अपिभीतो[3] दृश्यमानं ज्ञायते धनम् । अतः संगृह्याभिभवितः शत्रूणामह्य[4] देहि । मा त्वामिच्छतः स्तोतुः काममूनीकार्षीः ॥

शचीव इन्द्र । प्रज्ञावन् इन्द्र बहूनां कर्तः अतिशयेन दीप्तिमन् तवैवेदमभितो वसु ज्ञायते । अतो वसु नः संगृह्य अभिभवितः शत्रूणां मह्यं देहि । मा त्वामिच्छतः स्तोतुः काममूनीकार्षीः ॥ (३)

**एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना ।**
**इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ॥**

एभिः । एभिर्दीप्तैस्सुमनाः[5] । एभिः सोमैः । पुनरेभिरिति पूरणप्रायम् । निरुन्धानोऽस्माकं दारिद्र्यं गोभिर्दत्ताभिरश्विना । अश्ववता च धनेन दत्तेन

[1] Read बहोः

[2] Read अतिशयेन.

[3] Read अभितो.

[4] Perhaps to read शत्रूणामह्य.

[5] Read एभिर्दीप्तैस्सुमनाः

सुमना भवेति समाप्तिः। इन्द्रेण दस्युं दरयन्तः पृक्तैरिन्दुभिः प्रीतेन[1]। पृथक्कृतद्वेष्टारो[2]ऽन्नेन संरब्धा भवे[3] संगच्छामहे ॥

एभिर्द्युभिः। एभिर्यागदिवसैः एभिश्च सोमैः प्रीयमाणः स्तोतॄणामर्थाभावजनिताममतिं गोभिरश्ववता च धनेन निरुन्धान इन्द्रो भवति। वयं तेनेन्द्रेण उपक्षपयितारं दस्युं दरयन्तः प्रत्नैः सोमैः पृथक्कृतद्वेष्टारोऽन्नेन संरब्धा भवेम ॥ (४)

**समिन्द्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चन्द्रैरभिद्युभिः।**
**सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि ॥**

समिन्द्र। संरभेमहि धनेनेन्द्र। समन्नेन। सं बलैर्बहुदीप्तिभिरभिद्योतमानैः। सञ्च देव्यान्त्वदीयया[4] प्रमत्या वीरबलया[5] गोमुखयाश्ववत्या रभेमहि ॥

समिन्द्र राया। इन्द्र धनेन संरब्धा भवेम अन्नेन च। सं बलैः बहूनां स्पृहणीयैः अभिगतदीप्तिभिः। सं च देव्या प्रमत्या यस्या वीरा बलं भवन्ति गोमुखया अश्वयुक्तया ॥ (५)

**ते त्वा मदा अमदन्तानि वृष्ण्या ते सोमासो वृत्रहत्येषु सत्पते।**
**यत्कारवे दश वृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः ॥**

[1] Folio 33*b* ends here.

[2] Read पृथक्द्वेष्टारो or पृथक्कृतद्वेष्टारो.

[3] Read भवेम.

[4] Read देव्या त्वदीयया.

[5] First written वीरबलाया. Then आ in ला deleted with a dot above.

ते त्वा । ते त्वा मादका अमदन् । ते[1] त इत्युक्तं तानि वृष्ण्येति । वृष्ण्यसामानाधिकरण्याल्लिङ्गभेदः । वर्षणनिमित्तं वृष्ण्यम् । सोमा एव तयोक्ताः[2] । ते सोमासो वृत्रंहननेषु[3] सतां पालयितः । यदा त्वं कारवे स्तोत्रे दश सहस्राण्युपद्रवाणा[4] न्युबर्हयसि[5] यजमानाय शत्रुभिः प्रतिगत[6] इति ॥

ते त्वा मदा । ते त्वां सोमा अमदन् । तानि वर्षणनिमित्तानि । के ते इत्याह—ते सोमासो वृत्रहननेषु सतां पते । यदा त्वं दशसहस्राण्युपद्रवाणां निबर्हयसि यजमानाय शत्रुभिरप्रतिगतः ॥ (६)

**युधा युधमुप घेदेषि धृष्णुया पुरा पुरं समिदं हंस्योजसा ।**
**नम्या यदिन्द्र सख्या परावति निबर्हयो नमुचिं नाम मायिनम् ॥**

युवा[7] । युद्धेनानुसूतं[8] अन्यद्युद्धमुपगच्छसि धृष्णुस्त्वम् । पुरं[9] शत्रुगुणां समेदं[10] विनाशयसि बलेन । भूतार्थे लवूत्तरवाक्यार्थसमभिव्याहारात्[11] ।

[1] Read के.
[2] Read तथोक्ताः
[3] Read वृत्रहननेषु.
[4] Read सहस्राण्युपद्रवाणां.
[5] Read निबर्हयसि. The letter सि slightly worm-eaten.
[6] Read अप्रतिगत.
[7] Read युधा.
[8] Read युद्धेनानुस्यूतं.
[9] Add पुरा before पुरं.
[10] Read शत्रूणां सहेदं.
[11] Read लडुत्तरवाक्यार्थसमभिव्याहारात्.

अयं च श्यायस्सर्वत्रानुसन्धेयः[1]। प्रपञ्चितश्च[2] विभक्त्यनुक्रमण्याम्[3]। नम्या नमिना सख्या सहायभूतेन यदा दूरे स्थितं निबर्हयो नमुचिं नाम मायिनमसुरमिति ॥

युधा युधम्। युद्धेनानुस्यूतमन्यद्युद्धमुपगच्छसि धृष्णुम्। पुरेण च पुरं शत्रूणां सहेदं विनाशयसि बलेन। अनुगुणेन हन्द्र मरुद्गणेन दूरे नमुचिं नम असुरं मायाविनं निबर्हयः तदानीमिति ॥ (७)

**त्वं कर॑ञ्जमु॒त प॒र्णयं॑ वधी॒स्तेजि॑ष्ठयातिथि॒ग्वस्य॑ वर्त॒नी ।**

**त्वं श॒ता वङ्गृ॑दस्याभिन॒त्पुरो॑ऽनानु॒दः परि॑षूता ऋ॒जिश्व॑ना ॥**

त्वं करञ्जम्। त्वं करञ्जमपि[4] पर्णयं अवसीस्तेजिष्ठया[5] अतिथियस्य[6] कृत्वे कर्तरी[7]। वर्तन्या शक्या[8]। त्वं शतानि वङ्गृदस्य स्वभूता[9] अहिनत्[10]। अनानुदो बली। स ह्यग्रे युद्धे दीयते। यदि वैकवीरः। यस्य युध्यतोऽनुदीयमानोऽन्यस्सहायो न विद्यते। परिषूताः परिगताः। ऋजिश्वना

[1] Read न्यायस्सर्वत्रानुसन्धेयः

[2] Better read प्रपञ्चितश्च. The letter ञ्च partly worm-eaten. But it is ञ्च and not श्च.

[3] This is the fifth of the 12 Anukramaṇis. Cf. n. 3 on p. 168.

[4] Better read करञ्जमपिच.

[5] Read अवधीस्तेजिष्ठया.

[6] Read अतिथिग्वस्य.

[7] Not clear.

[8] Read शक्त्या.

[9] Better read स्वभूतानि. The word पुरः not commented.

[10] Read अभिनत्.

राज्ञा । ऋजिश्वनावष्टस्य[1] वंग्रदसह्य[2] + ग्रस्य[3] पुराण्यभिनदिति ॥

त्वं करञ्जम् । त्वं करञ्जमपिच पर्णयमवधीः तेजिष्ठया शक्त्या दिवोदासस्य रक्षार्थम् । तथा त्वमृजिश्वनः शत्रोः वङ्गृदस्य वह्वीः पुरः अभिनः या ऋजिश्वना राज्ञा परिगताः । ऋजिश्वनः शत्रुपुराण्यवष्टभ्य अवस्थितस्य साहाय्यं कृतवान् । अस्य अनानुदोऽपश्चाद्धावस्य दातेति ॥ (८)

**त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः ।**
**षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥**

त्वम् । त्वमेतान् जनराज्ञो द्विर्दश्य[4] जनपदानां राज्ञो विंशतिं बन्धुवर्जितेन सुश्रवसा रज्ञा[5] उपजग्मुषो[6] युद्धार्थम् । तदनुचराणा[7] योद्धृणां संख्या विष्टिमिति[8] । विश्रुतस्त्वं न्यवधीश्चक्रेण[9] दुष्प्रपदनेन[10] रथ्या रथावयवेनेति ॥

त्वमेतान् । त्वं एतान् जनपदानां राज्ञो विंशतिं बन्धुवर्जितेन सुश्रवसा राज्ञा उपजग्मुषः युद्धार्थं तदनुचराणां भटानां इयं संख्या षष्टिमिति । विश्रुतस्त्वं न्यवधीः चक्रेण दुष्पतनेन रथ्यायाम् ॥ (९)

[1] Read ऋजिश्वनावष्टब्धस्य.

[2] Read वङ्गृदस्य.

[3] The first letter in the line worm-eaten. Perhaps to read उग्रस्य.

[4] Read द्विर्दश.

[5] Read राज्ञा.

[6] Read उपजग्मुषो.

[7] Read तदनुचराणां.

[8] Read षष्टिमिति.

[9] ण at the end of the line, lost as the corner of the leaf is broken.

[10] Read दुष्पतनेन.

त्वमा॑विथ सु॒श्रव॑सं॒ तवो॒तिभि॒स्तव॒ त्राम॑भिरिन्द्र॒ तूर्व॑याणम् ।
त्वम॑स्मै॒ कुत्स॑मतिथि॒ग्वमा॒युं म॒हे रा॒ज्ञे यूने॑ अरन्धनायः ॥

त्वमाविथ । त्वमन्नक्षः[1] सुश्रवस्सं[2] राजानं तवेतिभिः[3] । तव त्राणैरिति[4] कुर्वयाणं[5] च । त्वमस्मै सुश्रवसे महते राज्ञे यूने कुत्सादींस्त्रीन् वशमनयः ॥

त्वमाविथ । त्वमरक्षः सुश्रवसं राजानं तवोतिभिः । तथा तव त्राणै-रिन्द्र तूर्वयाणं च । त्वमस्मै सुश्रवसे महते राज्ञे यूने कुत्सादीन् त्रीन् वश-मनयः ॥ (१०)

य उ॒दृचीन्द्र दे॒वगो॑पाः॒ सखा॑यस्ते शि॒वत॑मा॒ असा॑म ।
त्वां स्तो॑षाम॒ त्वया॑ सु॒वीरा॒ द्राघी॑य॒ आयुः॑ प्र॒त॒रं दधा॑नाः ॥

य उन्हचि[6] । ये वयं वयसं[7] उदके क् क्[8] देवैर्गुप्ताः सखाय-स्तेऽत्यन्तं कल्याणा आ[9] अभूम तेवयक्षां[10] स्तुयाम स्तुयाम[11] त्वया सुवृत्रा[12] दीर्घतरं चायुः प्रकृष्टतरं दधाना इति[13] ॥

[1] Read त्वमरक्षः

[2] Read सुश्रवसं.

[3] Read तवोतिभिः

[4] Read त्राणैरिन्द्र.

[5] Read तूर्वयाणं.

[6] Read य उदृचि.

[7] This word not wanted.

[8] द at the end of the line, lost as the corner of the leaf is broken. In the next line there is के and then क् क्. Read उदर्के:

[9] आ not wanted.

[10] Read ते वयम् । त्वां.

[11] Repetition of स्तुयाम not wanted.

[12] Read सुपुत्रा.

[13] Here there is the figure seven to mark the end of the sūkta.

य उदृचीन्द्र । ये वयमुदर्के देवैर्गुप्ताः सखायः ते अत्यन्तं कल्याणा अभूम । ते वयं त्वां स्तुयाम । त्वया सुपुत्रा दीर्घतरं च आयुः प्रकृष्टतरं दधाना इति अन्नपुत्रयोराशंसनम् ॥ (११)

---

मा नो॑ अ॒स्मिन्म॑घवन्पृ॒त्स्वंह॑सि न॒हि ते॒ अन्तः॒ शव॑सः परी॒णशे॑ ।
अक्र॑न्दयो न॒द्यो॒३॒॑ रोरु॑वद्वना॑ क॒था न क्षो॒णीर्भि॒यसा॒ समा॑रत ॥

मा नः । मा दा अस्मादस्मिन्[1] मघव + + पद्रवे +[2] सुसंग्रामेषु[3] । न हि तव शवसोऽन्तः पर्यन्तः पर्यवशो[4] भवति । पर्याप्तुमशक्यमित्यर्थः । स त्वमन्तरिक्षे स्थितो रोरूधमाणो[5] नदीरुदकानि क्रन्दयसीति द्विकर्मकः । कथं त्वद्भिया[6] क्षोणीः पृथिवीय + + + + न[7] संगच्छते ।

[1] Read अस्मानस्मिन्.

[2] After मघव only a small part of the next letter seen. Then two letters completely lost as the edge of the leaf is broken. Then पद्रवे is in tact. Another letter is lost as the corner of the leaf is broken, and Folio 44*a* ends. The letter before पद्रवे has only उ and not ऊ joined to it, as is quite clear from the final bit. What was written may be पृत्सु पद्रवेषु.

[3] I find a dot above स and ग्रा as if they are deleted. Perhaps the whole passage to read मा दा अस्मानस्मिन् मघवन्नुपद्रवे पृत्सु संग्रामेषु.

[4] Perhaps to read परिणशे.

[5] Read रोरूयमाणो.

[6] Not wanted.

[7] After य about four syllables missing as the edge of the leaf is missing. Perhaps to read पृथिवीयं भियसा भयेन.

कथं[1] चर्मवद्वेष्टिता[2] न भवति। बहुवचनान्तं वा क्षोणीरिति। विधृता इतिमे[3] लोकाः कथं न संगच्छन्त इति। अन्तरशब्दो रेफी निपातः सन्नन्तोदात्तः।

अन्तविच्छन्ति[4] तं जने (ऋ. वे. ८. ७२. ३)

इति। अयं चकारान्त[5] आद्युदात्त इति॥

मा नो अस्मिन्। मास्मानस्मिन् सङ्ग्रामेषु जायमाने उपद्रवे त्याक्षीः। न ते बलस्य पर्यन्तं केनचिदपि व्याप्तुं शक्यम्। स त्वं नदीरुदकानि क्रन्दयसि रोरूयमाणः। कथं न पृथिव्यस्तिस्रः तव भयेन संगच्छन्ते। भयाद्धीन्द्रस्य भूमयो विधृतास्तिष्ठन्ति॥ (१)

**अर्चा॑ श॒क्राय॑ शा॒किने॒ शची॑वते शृ॒ण्वन्त॒मिन्द्रं॑ म॒हय॑न्न॒भि ष्टु॑हि।**
**यो धृ॒ष्णुना॒ शव॑सा॒ रोद॑सी उ॒भे वृषा॒ वृष॒त्वा वृ॑ष॒भो न्यृ॒ञ्जते॑॥**

अर्च। अर्चोच्चारय[6] वचः शक्राय बलवते प्रज्ञापते[7]। शृण्वन्त-मिन्द्रं पूजयन्नभिष्टुभि[8]। यः शत्रूणां धर्षकेण बलेन रोदसी उभे नृञ्जते[9]

[1] ते and क completely lost as the corner of the leaf is broken. Only a conjecture.

[2] व worm-eaten and indecipherable. Only a conjecture.

[3] Read इमे.

[4] Read अन्तरिच्छन्ति.

[5] चाकारान्त.

[6] य completely lost as the corner of the leaf is broken. Only a conjecture.

[7] Read प्रज्ञावते.

[8] Read पूजयन्नभिष्टुहि.

[9] Read न्यृञ्जते.

प्रसाधयति वशीकरोति । वृषा वृषत्वेन वृषभः । वृषत्वमस्य वर्षणादेव[1] भवति । वृषभो वृषणवा[2] मुप्कवानिति[3] । यास्कस्तु वृषभो वृषति रेतः प्रजां वर्षति वेति[4] ॥

अर्चा शक्राय । उच्चारय स्तोत्रं शक्राय असहायाय प्रज्ञावते । शृण्वन्तमिन्द्रं पूजयन् अभिष्टुहि । यः शत्रूणामभिभविता बलेन उभे द्यावापृथिव्यौ प्रसाधयति वर्षणशीलो वृषभो वृषत्वेन च इति ॥ (२)

अर्चा दिवे बृहते शूष्यं १ वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥

अर्च । उच्चाय[5] दीप्ताय बृहते सुखकरं वचः । स्वक्षत्रं स्वबलम् । यस्य शत्रून् धर्षयतो धृष्टं मनो भवति स इन्द्रो बृहच्छ्रवा मनाकीर्तिः[6] असुरः शत्रूणां क्षेपकोच्चयासुरोऽसुरतो[7] बलरतोऽपि[8] वा असुमान् । बर्हणा परिबर्हणा सपत्नानां हिंसकः । पुरस्कृतो हरिभ्यामश्वाभ्यां वृषभो रथो रभणः[9] स इन्द्रः ॥

[1] र्ष mostly worm-eaten.

[2] Read वृषणवान.

[3] The उ mark in मु completely worm-eaten. The क in ष्क and वा lost as the corner of the leaf is broken.

[4] What Yāksa says is: वृषभः प्रजां वर्षतीति वा अतिबृहति रेत इति वा । तद्वर्षकर्मा । वर्षणाद्वृषभः (नि. ९. २२).

[5] Read उच्चारय.

[6] Read महाकीर्तिः

[7] Perhaps to read क्षेपकोऽथवासुरोऽसुमतो.

[8] Read बलवतोऽपि.

[9] Read रंहणः

अर्चा दिवे। उच्चारय दीप्ताय महते बलनिमित्तं वचोऽनाश्रितपरबलम्। यस्य शत्रून् धर्षयतो धृष्टं मनः। महाकीर्तिः शत्रूणामसिता शत्रुपरिबर्हणार्थं तस्येन्द्रस्य रथः कामानां वर्षिता अश्वाभ्यां पुरस्क्रियते स्तोतॄणां इति ॥ (३)

**त्वं दिवो बृहतः सानु कोपयोऽव त्मना धृषता शम्बरं भिनत्।**
**यन्मायिनो व्रन्दिनो मन्दिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ॥**

त्वम्। त्वं दिवो महतो नभसस्सानु समुच्छ्रितमद्भ्रम्[1]। कोपयोऽवाभिनच्चात्मना धर्षकेण सहायेन शंबरम्। यदा मायिनो व्रन्दिनोऽन्योत्[2] स्वबलेन मुन्दूककर्मन्दिना[3] सृष्टेन[4] धृषकेण[5] मनसा युक्तस्त्वं शितां तीक्ष्णीकृतां गभस्तिं गृहीतमशनिं पृतन्यसि प्रेरयसि ॥

त्वं दिवः। त्वं दिवो महतः समुच्छ्रूतं मेघमकोपयः। अवभिन्नवानात्मनैव धर्षयिता शम्बरमसुरम्। यदा मायावतोऽन्यान् स्वबलेन मृदूकर्तुं हृष्टेन मनसा धृष्टं तीक्ष्णं शत्रूणां गृहीतिमशनिमयोधयः तदानीमिति। यद्वा बाहुमशनिं चेति ॥ (४)

**नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना।**
**प्राचीनेन मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि ॥**

[1] मु after स partly worm-eaten. Still quite decipherable; after त the next letter is म and the line ends. The first letter in the next line is द्भ्र. Perhaps to read समुच्छ्रूतं मेघम्.

[2] Perhaps to read व्रन्दिनोऽन्यान्.

[3] Perhaps to read मृदूकर्तुर्मन्दिना.

[4] Read हृष्टेन.

[5] Read धर्षकेण.

नि धत्[1] । निवृणक्षि यदा श्वसतः शुष्णस्य मूर्धनि त्रन्दिनः । अत्र यास्कः । त्रन्दी त्रन्दत्तेर्मृदुभावकर्मणः । निवृणक्षति यच्छ्सनस्य मूर्धनिश्शुष्णस्यादित्यस्य शोषयितुः । रोरूयमाणो धनानीति वा[2] इति । प्राचीनेन[3] प्राचीनेनापराङ्मुखेन मनसा परिवर्हणावता यद्यद्यापि करोति शत्रुवधं कस्त्वा परिभवेत् । अपि वा निरुन्ध्यादिति ॥

नि यद्वृणक्षि । निवृणक्षि यदा शब्दकारिणः शुष्णस्यादित्यस्य शोषयितुः मूर्धनि मृदूकर्तुं स्थितान्युदकानि रोरूयमाणः । शत्र्वभिभवमुखेन वृद्धिमता मनसा यदीदानीमप्येतत् कृणोषि तं त्वां कः परिभवति ॥ (९)

**त्वमा॑विथ॒ नर्यं॑ तु॒र्वशं॒ यदुं॒ त्वं तु॒र्वीतिं॑ व॒य्यं॑ शतक्रतो ।**
**त्वं रथ॒मेत॑शं॒ कृत्व्ये॒ धने॒ त्वं पुरो॑ नव॒तिं द॑म्भयो॒ नव॑ ॥**

त्वमाविथ । त्वमरक्षो नर्यादींस्त्रीन् । अपि च वैर्यकुलजं[4] तुर्वीतिश्च[5] शतक्रतो । त्वं रथं चरथोक्तम्[6] ।

त्वं रथं प्र भरो योधमृष्वम् (ऋ. वे. ६. २६. ४)

[1] Read नि यत्.

[2] What is found in N. is: त्रन्दी क्रन्दतेर्मृदुभावकर्मणः (५. १५). नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना । निवृणक्षि यच्छ्वसनस्य मूर्धनि शब्दकारिणः । शुष्णस्यादित्यस्य च शोषयितुः । रोरूयमाणो वनानीति वा वधेनेति वा (५. १६).

[3] This word not wanted.

[4] Read वय्यकुलजं.

[5] Read तुर्वीतिं च.

[6] Folio 44*b* ends with चरथो. The word not clear.

इति । तथैतशमप्मृषिं कृत्व्ये धने कर्तव्ये धने । न संग्राम इत्यत्र[1] । उक्तं च ।

यथोत कृत्व्ये धने (ऋ. वे. ८. ५. २६)

इति । वर्णवाच्येततश्शब्दो[2]ऽन्तोदात्तः ।

यदेतरेभिः[3] पतरैः (ऋ. वे. १०. ३७. ३)

इति । त्वं नव नवतिं शंबरस्य पुरो दंभयोऽभिन इति ॥

त्वमाविथ । त्वमरक्षो नर्यादीन् पञ्च शतकर्मन् । तथा कर्मार्हधननिमित्तं त्वं एतशस्य रथं एतशं चावः । त्वं पुरो नव नवतिं चाप्यनाशयः । एतेषां रक्षणप्रकारमितस्ततो वक्ष्यन्ति ऋषय इति ॥ (६)

**स घा राजा सत्पतिः शूशुवज्जनो रातहव्यः प्रति यः शासमिन्वति ।**
**उक्था वा यो अभिगृणाति राधसा दानुरस्मा उपरा पिन्वते दिवः ॥**

स घ । स खलु जनो राजा स्तां[4] च पतिर्व्रद्धते[5] । यो दत्तहविष्कः सन्निन्द्रस्य स्तुतिं प्रेरयति । शासशब्दः स्तुतिशासनयोराद्युदात्तः । शासनोदाहरणम् ।

श्रोषण्ये[6] अस्य शासम् (ऋ. वे. १. ६८. ९)

शासिता चेदन्तोदात्तः ।

[1] Passage not clear.

[2] Read वर्णवाच्येतशशब्दो.

[3] Read यदेतशेभिः

[4] Read सतां. The letter त written very close to and below स so that it is स्त and not सत.

[5] Read पतिर्वर्धते.

[6] Read श्रोषन् ये.

अक्कवारिं दिव्यं शासमिन्द्रम् (ऋ. वे. ३. ४७. ५)

शास इत्था महाँ असि (ऋ. वे. १०. १५२. १)

उक्तानि[1] च योऽभिवदति। हविषा स ह दातास्मै इन्द्र उपराण्यभ्राणि दिवो दोग्धि। पपेरुपरम्[2]। उप्तमिव नभस्यभ्रमिति॥

स घा राजा। स खलु जनो राजा सतां च पतिः वर्धते दत्तहविष्कः यः शासितारमिन्द्रं प्रति गच्छति प्रीणयति वा। उक्थान्यभिवदति सह हविषा दाता। अस्मै दिवः सकाशादभ्राणि दोग्धि॥ (७)

**असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा सन्तु नेमे।**
**ये त इन्द्र ददुषो वर्धयन्ति महि क्षत्रं स्थविरं वृष्ण्यं च॥**

असमम्। असमं बलम्। असमा च बुद्धिः। तथा प्रतिप्रसन्तु[3] भवन्तु[4] सोमस्य पातारो वधकर्मणा। नेमशब्द एतच्छब्दपर्याया[5]।

उत घा नेमो अस्तृतः[6] (ऋ. वे. ५. ६१. ८)

इति। एतत्वेन्द्र[7] ददुषः स्तोमं दीदिवांसो[8] वर्धयन्ति महद्बलं प्रवृद्धं पुंस्त्वं च। क्वसोः संप्रसारणं प्रथमाया अपि बहुशो दृष्टमिति॥

[1] Read उक्थानि.

[2] But Yāska has. उपर उपलो मेघो भवति। उपरमन्तेऽस्मिन्नभ्राणि। उपरता आप इति वा (नि. २. २१)

[3] That text has only प्रसन्तु.

[4] व mostly worm-eaten.

[5] Read एतच्छब्दपर्यायः

[6] Read अस्तुतः

[7] Perhaps to read ये तवेन्द्र.

[8] Perhaps to read ददिवांसः

असमं क्षत्रम् । असमं बलमसमा प्रज्ञा । प्रभवन्तु सोमस्य पातारः कर्मणा । नेमशब्दोऽर्धवचनः । केचनेत्यर्थः । तानाह । ये तवेन्द्र ददिवांसो वर्धयन्ति महत् बलं प्रवृद्धं पुंस्त्वं च ॥ (८)

तुभ्येदे॒ते ब॑हु॒ला अद्रि॑दुग्धाश्चमू॒षद॑श्चम॒सा इ॑न्द्र॒पानाः॑ ।
व्य॑श्नुहि त॒र्पया॒ काम॑मेषा॒मथा॒ मनो॑ वसु॒देया॑य कृष्व ॥

तुभ्येत् । तुभ्यमेवैते बहवो ग्रावदुग्धाश्चमससादिनः सोमा इन्द्रपानार्हाः । तानिमान्याप्तुहि[1] । तपीय[2] च इन्द्रियाणां काममेतैः । अथ मनोऽस्माकं वसुदाताय[3] कुरु ॥

तुभ्येदेते । तुभ्यमेवैते बहवो ग्रावदुग्धाः चमससादिनः सोमाः इन्द्रस्य तव पानार्हाः । तानिमान् व्याप्नुहि । तर्पय च आत्मीयं काममेतैः । अथात्मनो मनो वसुदानाय कुरु ॥ (९)

अ॒पाम॑तिष्ठद्ध॒रुण॑ह्वरं॒ तमो॒ऽन्तर्वृ॒त्रस्य॑ ज॒ठरे॑षु॒ पर्व॑तः ।
अ॒भीमिन्द्रो॑ न॒द्यो॑ व॒व्रिणा॑ हि॒ता विश्वा॑ अनु॒ष्ठाः प्र॑व॒णेषु॑ जिघ्नते ॥

अपाम् । धरुणशब्दो धारावचनाः[4] । अपां धरुणंवरं[5] निरोधकं तमोऽतिष्ठन् । अस्यैव विशदवचनम् । अन्तर्वृत्रस्य जठरेषूदरेषु अन्तः

[1] Read तानिमान् व्याप्नुहि.

[2] Read तर्पय.

[3] Read वसुदानाय.

[4] Read धारावचनः

[5] Read धरुणह्वरं.

पर्वतो मेघोऽतिष्ठदिति । जठर उदरञ्ञ्चमस्मिंस्तिष्ठतीति[1] । जठराग्निश्चे-दाद्युदात्तः[2] ।

याभिः[3] पठर्वा[4] जठरस्य मज्मना (ऋ. वे. १. ११२. १७)

इति । अभिजिघ्नतं ईमेना[5] नदीरिन्द्रो वद्रिणा[6] वृत्रेण निहिता विश्वा व्याप्ता अनुष्ठा अनुतिष्ठन्निन्द्रः प्रवणेपु जघ्नते[7] । वृत्रोदरादिन्द्र उदकानि प्रच्यावयति[8] प्रवणेष्वित्यर्थः ॥

अपामतिष्ठत् । अपामतिष्ठत धारकगह्वरयुक्तं तमः । एतदेवाह वृत्रासुरस्य जठरेषु मेघोऽतिष्ठदिति । अभिजिघ्नते एनं पर्वतं वारकेण मेघेन निहिता विश्वा नदीरनुतिष्ठन् प्रवणेष्विन्द्रोऽभिजिघ्नते इति । द्विकर्मको निष्पेषो हन्तेरर्थः ॥ (१०)

**स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषाळिन्द्र तव्यम् ।**
**रक्षा च नो मघोनः पाहि सूरीन् राये च नः स्वपत्या इषे धाः ॥**

सः । शमणं[9] रोगाणाम् । तस्मिन् सति यद्वर्धते तदन्नं धनं

[1] After उदर some letter begun and completely scored off. Then ञ्ञ written. स्मि is completely worm-eaten.

[2] त: mostly worm-eaten.

[3] भि mostly worm-eaten.

[4] र्वा completely worm-eaten.

[5] ई written as a र with an anusvāra before and after it.

[6] Read वज्रिणा.

[7] Read जिघ्नते. This word not wanted here, as it has already been taken up.

[8] च्या mostly worm-eaten.

[9] This is how it begins स शमणं. Perhaps स is the Pratika. ण is mostly worm-eaten. It is ण and not न. Read शमनम् .

सावमस्मास्वधियेहि[1] । महच्च बलमिन्द्रञ्जनस्य[2] अभिभवितृ प्रवृद्धम् । रक्ष चास्मान् धनवतः । पाहि च स्तोतॄन् यनाय[3] । मा चास्मान् धेहि शोभनापश्यायान्नाय[4] । अपत्यं[5] पुत्रो नानेन पततीति[6] ॥

स शेवृधम् । स सुखे वर्धमानं सुखकरमन्नमस्मास्वधिधेहि । महच्च धनं जनस्य अभिभवितृ वृद्धम् । रक्ष चास्मान् शत्रुभ्यो हविष्मतः । पाहि स्तोतॄन् । शोभनापत्याय धनाय च अन्नाय च अस्मान् कुरु । इत्यन्नं पुत्रं च आशास्ते ॥　(११)

---

दिवश्चिदस्य वरिमा वि पप्रथ इन्द्रं न मह्ना पृथिवी चन प्रति ।
भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः ॥

दिवः[7] । द्युलोकादपि । स्योरुत्वं[8] विस्तीर्णमासीत् । इन्द्रन्त[9] महत्वेन पृथिव्यपि प्रतिभवति । भीमो यस्मादन्ये बिभ्यति । तुविष्ठान्[10]

[1] सावं not intelligible. Perhaps सर्वम्. Read अस्मास्वधिधेहि.

[2] Read बलमिन्द्र जनस्य.

[3] Read धनाय.

[4] Read शोभनापत्यायान्नाय.

[5] Folio 45*a* ends with अप.

[6] Here there is no figure to mark the end of the Sūkta.

[7] दि Partly worm-eaten.

[8] Read अस्योरुत्वं.

[9] Read इन्द्रन्न.

[10] Read तुविष्मान्.

वृद्धिमान् । चर्षणिभ्यो मनुष्यार्थम् । मनुष्याणां[1] आतपकः[2] । निश्रति[3] वज्र + +[4] तैक्ष्ण्यार्थं[5] । यथा तेजनार्थं[6] ऋषभः शृङ्गे इति ॥

दिविश्चिदस्य । द्युलोकादपीन्द्रस्य उरुत्वं विस्तीर्णमासीत् । इन्द्रं न महत्त्वेन पृथिव्यपि प्रतिभवति । भयंकरो वृद्धिमान् मनुष्यरक्षार्थं वज्रं तीक्ष्णीकरोति शत्रूणामातापयिता । यथा ऋषभः शृङ्गैस्तैक्ष्ण्यार्थं निश्यति ॥ (१)

**सो अर्णवो न नद्यः समुद्रियः प्रति गृभ्णाति विश्रिता वरीमभिः ।**
**इन्द्रः सोमस्य पीतये वृषायते सनात्स युध्म ओजसा पनस्यते ॥**

सा[7] । स समुद्र इव नदीस्समुद्रियः समुद्रेऽन्तरिक्षे वर्तमानः । प्रतिगृभ्णात्य + +[8] व्याप्ता उरुत्वैः । सोऽयमिन्द्रस्सोमस्य पानार्थं वृषेवाचरति[9] । वर्धते[10] सनाच्चिरादेवारभ्य[11] । अपिवा सनातनस्सन्धस्स[12]

[1] ष्या completely worm-eaten. The other letters in the word also slightly injured. Reading only a conjecture.

[2] The word in the text is only आतपः Perhaps to read आतापकः

[3] Read निश्यति.

[4] Read वज्रं. This is the last word in the line. Then at the end of the line space for about two syllables left blank. But nothing except anusvara seems missing.

[5] र्थं mostly worm-eaten. Read तैक्ष्ण्यार्थम्.

[6] र्थं mostly worm-eaten.

[7] Read either सो or सः

[8] After प्रतिगृभ्णात्य space for two syllables left blank. Perhaps to read प्रतिगृभ्णात्यत्यन्तं.

[9] ति completely worm-eaten.

[10] व completely worm-eaten. Only a conjecture.

[11] It seems there is a dot above च्चि in which case it becomes च्चिं.

[12] Read only सनातनस्स. The letter न in सना mostly worm-eaten.

योद्धा सन् ओजसा बलकर्मणा स्नूयते। नद्यो रदनात्[1]। अहावनदता हते तस्माद्द्यो[2] नाम स्थ इति च मन्द्र[3] इति ॥

सो अर्णवः। स समुद्र इव समुद्रपातिनीर्नदीः प्रतिगृह्णाति विविधं श्रिताः सेनाः उरुत्वैः। इन्द्रः सोमस्य पानाय वृष इवाचरति। चिरादेवारभ्य स योद्धा बलमहत्तया स्तोतृभिः स्तूयते ॥ (२)

**त्वं तमिन्द्र पर्वतं न भोजसे महो नृम्णस्य धर्मणामिरज्यसि ।**
**प्र वीर्येण देवतातिं चेकिते विश्वस्मा उग्रः कर्मणे पुरोहितः ॥**

त्वन्तम्। त्वं तमिन्द्र पर्वतं नाकार्षिभ्योजनाय[4]। न हि भतो भुक्ते[5]। अपिच महो नृम्णस्य[6] धनस्य धर्मणां[7] धारकाणामीशिषो[8]। सोऽयमिन्द्रो देवत[9] वीर्येणातिचेकिते प्रज्ञात आसीदन्येभ्यो बलिभ्यः। किञ्च विश्वस्मै कर्मणे दुतत्गूर्णोयदेवैः[10] पुरोहित इति[11] ॥

[1] Read नदनात्.

[2] Perhaps to read तस्मादा नद्यो.

[3] Read मन्त्र. T. S. 5. 6. 1. 2.

[4] Read नाकार्षीर्भोजनाय.

[5] Passage not clear. Perhaps to read न हि हतो भुङ्क्ते.

[6] ण in म्ण completely worm-eaten.

[7] All letters in this word slightly worm-eaten.

[8] Read धारकाणामीशिषे.

[9] Read देवतासु.

[10] Read उद्गूर्णोऽयं देवैः

[11] After this there is repeated in the correct form: किञ्च विश्वस्मै कर्मणे उद्गूर्णोऽयं देवैः पुरोहित इति.

त्वं तमिन्द्र । त्वं तमिन्द्र स्तोतारं धनप्रदानेन मेघमिव मनुष्याणां भोगाय करोषि । त्वं महतो धनस्य धारकाणां कर्मणामीशिषे । सोऽयमिन्द्रो देवतासु वीर्येणातिप्रचेकिते । विश्वस्मै कर्मणेऽयमुद्गूर्णो यजमानैः पुरो निधीयते ॥ (३)

**स इद्वने॑ नम॒स्युभि॑र्वचस्यते॒ चारु॒ जने॑षु प्रब्रुवा॒ण इ॑न्द्रि॒यम् ।**

**वृषा॒ छन्दु॑र्भवति हर्य॒तो वृषा॒ क्षेमे॑ण॒ धेनां॑ म॒घवा॒ यदिन्व॑ति ॥**

स इत् । स एवारण्ये नमस्युभिः स्तूयते । शोभनमिन्द्रियकार्त्मीयं[1] बलं जनेषु प्रब्रुवाणश्चरति ।

यदचरस्तन्वा वावृधानः (ऋ. वे. १०. ५४. २)

इति । किञ्च वृषायञ्चमन्दुरुपपादयिता[2] भवति । हर्यन्तः[3] प्रेप्सतः स्तोतुः । पुनर्वृषेति पूरणम् । क्षेमेण युक्तो मघवा यजमानो धेनां स्तुतिं प्रेरयति यदेति ॥

स इद्वने । स एवारण्ये नमस्युभिः स्तूयते जनपदेऽपि । शोभनमिन्द्रियं जनेषु प्रब्रुवाणः प्रकाशयन्निव ब्रुवाण एव । वर्षिता उपच्छन्दयिता भवतीच्छतो वर्षिता । क्षेमं कुर्वन् यजमानानां मघवा यदि स्तुतिवचनं प्राप्नोति ॥ (४)

**स इन्म॒हानि॑ समि॒थानि॑ म॒ज्मना॑ कृ॒णोति॑ यु॒ध्म ओज॑सा॒ जने॑भ्यः ।**

**अधा॑ च॒न श्रद्द॑धति॒ त्विषी॑मत॒ इन्द्रा॑य॒ वज्रं॑ नि॒घनि॑घ्नते व॒धम् ॥**

[1] Read शोभनमिन्द्रियमात्मीयं. The beginning looks like शोह as well as शोभ.

[2] Read वृषायं छन्दुरुपच्छन्दयिता.

[3] Read हर्यतः

स इत्। स एव महतः सङ्ग्रामान् बलेन करोति। समिथं युद्धं संयन्त्यस्मिन्निति। योद्धायमोजसा योद्धायमोजसा[1] जनार्थम्। अया[2] चन श्रद्दधति सत्यमिन्द्रो बलीति। दीप्तिमते इन्द्रो[3] निहन्ति वेगवन्तमायुधं पर्वतेषु ॥

स इन्महानि। स एव महतः सङ्ग्रामान् बलेन करोति योद्धा बलेन जनार्थम्। यदायं शत्रुषु हन्तारं वज्रं निहन्ति अथास्मै दीप्तिमते इन्द्राय श्रद्धत्ते सत्यमसौ बलवानिति ॥ (५)

**स हि श्र॒व॒स्युः सद॑नानि कृ॒त्रिमा॑ क्ष्म॒या वृ॑धा॒न ओज॑सा विना॒शय॑न्।**
**ज्योतीं॑षि कृ॒ण्वन्न॑वृ॒काणि॑ यज्य॒वेऽव॑ सु॒क्रतुः॒ सर्त॒वा अ॒पः सृ॑जत् ॥**

स हि। स ह्यन्नमिच्छन् सदनान्यसुरपुत्राणि[4] कृत्रिमाणि। क्षुधोजसा[5] विनाशयन्। क्षमा[6] क्षमेरभिभवार्थात्। क्षुधा दध्यष्योजसेति[7]। ज्योतींषि कण्वंस्तेनवर्जितानि[8] यज्यवे अवसृजत्युत्तराणि[9] सरणार्थं सुकर्मेति ॥

स हि श्रवस्युः। स ह्यन्नमिच्छन् असुरपुराणि कृत्रिमान्योजसा विनाशयन् भोगसाधनभूतया पृथिव्या वर्धमानो ज्योतींषि कृण्वन् स्तेनवर्जितानि यजमानायावसृजति सरणायोदकानि ॥ (६)

[1] Repetition of योद्धायमोजसा not wanted.
[2] Read अधा.
[3] Read इन्द्राय.
[4] Read सदनान्यसुरपुराणि.
[5] Read क्ष्मयोजसा.
[6] Read क्ष्मा.
[7] Read क्ष्मया दर्धर्ष्योजसा (ऋ. वे. ५. ८४. ३) इति.
[8] Read कृण्वंस्तेनवर्जितानि.
[9] Read अवसृजत्युदकानि.

दानाय मनः सोमपावन्नस्तु तेऽर्वाञ्चा हरी वन्दनश्रुदा कृधि ।
यमिष्ठासः सारथयो य इन्द्र ते न त्वा केता आ दभ्नुवन्ति भूर्णयः ॥

दाना:य[1] मनस्सोमपातरस्तु तवाम्मादभिमुखावश्वौ[2] स्तुतीनां[3] श्रोतराकृणुष्व[4] । यन्त्रृतमा भि[5] सारथयस्ते भवन्ति ये तव स्वभूतात[6] न त्वाभिमन्तर[7] आदभ्नुवन्ति शीघ्राः ॥

दानाय मनः । दानाय मनः सोमस्य पातरस्तु तव । अस्मदभिमुखावश्वौ स्तुतीनां श्रोतराकृणुष्व । यन्तृतमाः सारथयो ये भवन्ति इन्द्र त्वदीयाः न त्वां शत्रूणामभिमननानि भ्रमणशीलानि आदभ्नुवन्ति ॥ (७)

अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे ।
आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ॥

अप्रक्षितम् । अप्रक्षीणं धनं बिभर्षि हस्तयोनहिभवनीयं[8] तन्वि शरीरे[9] । विश्रुत इन्द्रो धारयति[10] । यथोदकोद्धरणप्रवृत्तैरवताः कूपाः

[1] Read दानाय. The Pratika is not separately given.

[2] Read तवास्मदभिमुखौ.

[3] Folio 45*b* ends here.

[4] The आ mark in र and the letters कृणु completely worm-eaten. Only a conjecture.

[5] Perhaps to read हि.

[6] Read स्वभूता: ते.

[7] Read त्वाभिमन्तार.

[8] Read हस्तयोरनभिभवनीयम् .

[9] सहः omitted.

[10] First written धरयति. Then आ mark inserted between ध and र below the line.

परिवृता भवन्ति तथा तव तनवः कर्तृभिः बलैः कृतैः कर्मभिरावृता भवन्ति। ततश्च तवाङ्गेष्विन्द्र बहूनि कर्माणि भवन्ति। तत्र ताण्डकम्। इन्द्रं सर्वाणि भूतान्यस्तुवंस्तस्यैकमंगमस्तुतमच्चायत्तदस्यैदेतनास्तौत् इति[1]। तदिदं ब्राह्मणमिन्द्रस्य पायुमधिकृत्य प्रवृत्तमिति[2] ॥

अप्रक्षितम्। अप्रक्षीणं धनं बिभर्षि हस्तयोः। अनभिभूतं बलं शरीरे विश्रुत इन्द्रः धारयति। यथोदकोद्धरणपरैः कूपाः परिवृता भवन्ति एवं तवाङ्गेषु तानि तानि बहूनि कर्माणि परिवृतानि। अत्र ताण्डकम्—इन्द्रं सर्वाणि भूतानि अस्तुवन्। तस्यैकमङ्गमस्तुतमचायत्—इति ॥ (८)

---

**एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः।**
**दक्षं महे पाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसम् ॥**

एषः। एष तस्य यजमानस्य चमससादनीर्बहीरिषः[3] सोमान् प्रावोद्यच्छति। यथाश्वो योषामुद्यच्छति मैथुनमाचरन्। भुर्वणिरत्ता भपूतेरत्तिकर्मणः[4]। प्रवृद्धमात्मानं सोमं पाययते महते कर्मणे वृत्रवधादिकाय। हिरस्मयं[5] रथमावृत्य हरिभ्यां युक्तं दीप्तम्। अत्र शाट्यायनकम्। यदा वै प्रत्यक्षं भवत्यथैष इत्याचक्षते। यदा वै परोक्षमथ सत् इति ॥

[1] The passage is: इन्द्रं सर्वाणि भूतान्यस्तुवंस्तस्यश्र्य एकमङ्गमस्तुतमचायत्तदस्यैतेनास्तौत (ता. ब्रा. ५. ४. १४).

[2] Here there is no figure to mark the end of the sūkta.

[3] Perhaps to read चमससादिनीर्बह्वीरिषः

[4] Perhaps to read भर्वतेरत्तिकर्मणः

[5] Read हिरण्मयं.

एष प्र पूर्वीः । अयं तस्य यजमानस्य प्रोद्यच्छत्यवस्थितानि चमसादीनि बहून्यन्नानि । अश्वो यथा अश्वां मैथुनाय अधःस्थितां दृढं परिगृह्योद्यच्छति । भुर्वणिः अत्ता भर्वतेरत्तिकर्मणः । प्रसिद्धं सोममात्मानं पाययते महते वृत्रहननकर्मणे । हिरण्मयं रथमावृत्य हरिभ्यां युक्तं दीप्तम् ॥ (१)

**तं गूर्तयो नेमन्निषः परीणसः समुद्रं न संचरणे सनिष्यवः ।**
**पतिं दक्षस्य विदथस्य नू सहो गिरिं न वेना अधि रोह तेजसा ॥**

तम् । स्तो + + रा[1] नेमन्निषः । ये नमन्त इच्छन्ति ते तथोक्ताः । यदि वा नीतहविष्काः । परीणस इत्याद्युदात्तो मनुष्यनाम भवति परितो गतिरेषामस्तीति ।

युष्माकेण[2] परीणसा तुरासः (ऋ. वे. १. १६६. १४)

इति[3] मारुतं शर्ध उच्यते ।

परीणसं कृणुते तिग्मशृङ्गः (ऋ. वे. ९. ९७. ९)

इति[4] परितो प्यासिमाह[5] अन्तोदात्तः । इनेर्वा प्रेरणार्थात् उत्तरं पादम्[6] । समुद्रमुदधिमिव सञ्चरणे सनिष्यवो यत्र देशे गच्छन्ति तत्र धनमिच्छन्तो

[1] Between स्तो and रा space for about two syllables left blank. Perhaps to read स्तोतारो. The missing letters must be ता and ए mark in रो.

[2] Read युष्माकेन.

[3] In R. V. 1. 56. 2 and 1. 166. 14 the accent is on प the first syllable in परीणस.

[4] Here the accent is on सं the last syllable in परीणसं.

[5] Read व्याप्तिमाह.

[6] Read पदम्.

धिरो भवन्त्येवं धिरो भवन्ति[1]। त्वं च स्तोतः। पतिमिन्द्रं बलस्य विदथस्य प्रख्यातस्य। क्षिप्रमेव सहस्सस्वन्तं[2] अधिरोह यथा गिरिं वेना अण्डवाहनार्थं[3] अधिरोहन्ति तेजसा तेजनेन स्तोत्रेण।

नू रोदसी[4] अभिना[5] बुध्न्येन (ऋ. वे. ४. ५५. ६)

इत्यत्र समुद्रं न इति पादो[6] न सृष्टः। श्रुतक्रियो भि[7] सः। यदि वा दिन्निरूपार्थमभत्राध्ययनमिति[8] ॥

तं गूर्तयः। तं त्वामुद्युक्ता गमनमिच्छन्तो मनुष्याः सन्नद्धाः प्रतीक्षन्ते समुद्रमिव संचरणकाले द्वीपान्तराद्धनमिच्छन्तो वणिजः। पतिं बलस्य यज्ञस्य च क्षिप्रं बलं त्वमिन्द्र गिरिमिव कान्तः सिंहः तेजसा युक्तोऽधितिष्ठ ॥ (२)

**स तु॒र्वणि॑र्म॒हाँ अ॑रे॒णु पौंस्ये॑ गि॒रेर्भृ॒ष्टिर्न भ्रा॑जते तु॒जा शवः॑ ।**
**येन॒ शुष्णं॑ मा॒यिन॑माय॒सो मदे॑ दु॒ध्र आ॒भूषु॑ रा॒मय॒न्नि दाम॑नि ॥**

स तुर्वणिः तुर्वणिः सूर्वतेः[9] गमनार्थात्। तूर्णवनिस्तुर्वणिरिति यास्कः[10]। स क्षिप्रो महांश्च भवति। तस्यारेणु + वोऽवद्यरहितं[11]

[1] Perhaps to read धीरा in both these places where धिरो occurs.
[2] Read सहस्सहस्त्रन्तं.
[3] Word not clear. Perhaps to read भाण्डवहनार्थं.
[4] द in रोदसी completely worm-eaten.
[5] Read अहिना.
[6] The third pāda in R. V. 4. 55. 6.
[7] Read हि.
[8] Passage not clear. The last portion must be उभयत्राध्ययनम्. The passage must be the explanation for the line appearing in two places.
[9] Read तुर्वणिः तूर्वतेः or तुर्वणिस्तूर्वतेः
[10] See तुर्वणिस्तूर्णवनिः (नि. ६. १४).
[11] After तस्यारेणु one syllable is completely worm-eaten. Read तस्य अरेणु शवोऽवद्यरहितं.

बलं पौंस्ये[1] युद्धे राजते । तुजा तुजेः[2] प्रेरकं[3] सपत्नानाम् । यथा गिरिर्भृष्टि[4] शृङ्गं नहसि[5] । येन शवसा शुष्णमसुरं मानाविमनयोमयशरीर[6] इन्द्रस्सोम-मदे वुद्धन[7] आभूपु निरमयद्दामनि गळे[8] कारागृहा आ + +[9] ।

तुजे तुजे[10] विमोचन (ऋ. वे. ८. ४. १५)

इत्याद्युदात्तो राकारान्तोपत्यवचनः[11] । सप्तम्यन्तो[12] रामयन्ति दामनि[13] ।

दामा रथस्य ददृशे (ऋ. वे. ८. ७२. ६)

वर्षन्तस्थौ[14] वरिमन् (ऋ. वे. १०. २८. २)

दिवश्चिदस्य वरिमा (ऋ. वे. १. ५५. १)

इति नपुंसके आद्युदात्तं पुंस्यन्तोदात्तम्[15] ॥

[1] Folio 46*a* ends here.

[2] The visarga is worm-eaten. It is put only as a conjecture.

[3] र completely worm-eaten. It seems something is left out.

[4] Read गिरेर्भृष्टिः

[5] Word not clear.

[6] Read मायाविनमयोमयशरीर.

[7] Read वुध्न or perhaps दुर्धर.

[8] Read निगळे.

[9] कारा fairly legible. गृ only a conjecture. हा quite legible. आ is also legible. Then two letters completely gone. Reading uncertain. Perhaps कारागृहे आत्मीये. But the missing letters cannot be त्मीये considering the space available and the bits remaining.

[10] Read तुजे राये. The letter त in तु after तुजे completely gone.

[11] Read इत्याद्युदात्तो जकारान्तोऽपत्यवचनः

[12] The relevancy of this word not clear. तुजे is not सप्तमी but चतुर्थी.

[13] Read रमयन्ति दामनि. This was already explained.

[14] Read वर्ष्मन्तस्थौ.

[15] In R. V. 8. 72. 6. दामा has accent on मा; in R. V. 10. 28. 2 the accent of वर्ष्मन् and वरिमन् are on व; in R. V. 1. 55. 1 the accent of वरिमा is on मा.

स तुर्वणिः । स क्षिप्रो महांश्च तस्य वीरकर्मणि रेणुवर्जितं शुद्धं बलं शिलोच्चयस्य सानुरिव पृथग्भूतं विस्पष्टं राजते शत्रूणां हिंसया बलं प्रकाशं भवति । येन शवसा शुष्णमसुरं मायाविनं दृढशरीर इन्द्रः सोममदे दुर्धर आत्मीयदेशेषु कारागृहे निगळे अत्यन्तं अरमयत् ॥ (३)

देवी यदि तविषी त्वावृधोतय इन्द्रं सिषक्त्युषसं न सूर्यः ।
यो धृष्णुना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ॥

देवी । दैवं यदि बलं च यास्तुतिभिर्वृद्धमिन्द्रं सेवेतोषसमिव[1] सूर्यः । यो धृष्णुना शवसा बाधते[2] तमो नरस्तदानीं प्रेरयति महान्तं रेणुं पापं अर्हरिष्वणिर्बलवान् । अर्हरतेः शत्रु[3] । तस्याह्वातार्हरिष्वणिरिति ॥

देवी यदि तविषी । दैवं यदि बलं त्वां वर्धयन् तव रक्षणार्थं इन्द्रं सेवते उषसमिव सूर्यः । य इन्द्रो धृष्णुना बलेन सङ्ग्रामस्थं तमो बाधते स इन्द्रः स्तोतः त्वदर्थं सङ्ग्राममागत्य महद्रेणुमुत्थापयति शत्रूणां हरणशीलस्वनः ॥ (४)

वि यत्तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा ।
स्वर्मीळ्हे यन्मद इन्द्र हर्ष्याहन् वृत्रं निरपामौब्जो अर्णवम् ॥

[1] In सेवे the letter स partly worm-eaten. Originally only व written after this. Then ए mark inserted below the line between से and व with a cross mark above the line. स after ष partly worm-eaten.

[2] ध and ए mark in ते partly worm-eaten.

[3] Perhaps to read अर्हरिर्हरतेः शत्रुः

वि धत्[1] । वृत्रं हत्वापोऽवास्नृजदिति[2] समुदायार्थः । व्यधिष्ठिपे[3] विधं[4] स्थापितवानसि[5] यदा त्वं तिरोहितजगतो धारकमक्षिणं[6] उदकमन्तरिक्षमातासु आतदासु[7] दिक्षु परिबर्हण[8] शत्रूणाम् । स्वर्म्मीळ्ह[9] संग्रामः । स हि व्याप्तधनः । यदा सोममदे सति हृष्या सिष्टया[10] विस्नृतया[11] वाष्यान्[12] । तदानीमपां पूर्णवर्णवं[13] मेख्यन्निरौब्जो[14] ऽधोमुखं कृताः[15] ॥

वि यत्तिरः । वृत्रं हत्वापोऽवासृजदिति समुदायार्थः । यथा त्वं अन्तरितो भूत्वा जगतो धारकमक्षीणं उदकमन्तरिक्षात् दिक्षु विविधं स्थापितवानसि परिबर्हणया मेघस्य । यदा च उदकार्थे सङ्ग्रामे सोमस्य मदे सति हृष्टया बुद्ध्या वृत्रमसुरं हतवानसि । तदा त्वमपां पूर्णमर्णवं मेघमधः स्थितं रश्मिभिर्हतवानसि । अर्ण इत्युदकनाम । तद्यस्यास्ति सोऽर्णव इति ॥ (९)

[1] Read वि यत.

[2] वा mostly worm-eaten.

[3] Read व्यतिष्ठिपो.

[4] Read विविधं.

[5] व in वा mostly worm-eaten.

[6] Read धारकमक्षीणं·

[7] Read आततासु.

[8] Read परिबर्हणा or परिबर्हणया. But there is no परि in the text. Perhaps to read दिक्षूपरि बर्हणा or बर्हणया instead of दिक्षु परिबर्हणा.

[9] Read स्वर्मीळ्हः

[10] Read हृष्र्या हृष्टया.

[11] Perhaps to read विस्तृतया.

[12] ष्यान् mostly worm-eaten. But from the bits that remain it s certain that this is the letter. Read वा अहन्. The word वृत्र not taken up.

[13] Read पूर्णमर्णवं.

[14] Read मेघं निरौब्जो.

[15] Perhaps to read कृतवान्.

त्वं दि॒वो ध॒रुणं॑ धिष॒ ओज॑सा पृथि॒व्या इ॑न्द्र॒ सद॑नेषु॒ माहि॑नः ।
त्वं सु॒तस्य॒ मदे॑ अरिणा अ॒पो वि वृ॒त्रस्य॑ स॒मया॑ पा॒ष्या॑रुजः ॥

त्वम् । त्वमन्तरिक्षमुदं[1] करोषि बलेन पृथिव्या इन्द्र स्थानेषु महान् । त्वं सोमस्य मदे प्रेरितवानस्यपः । व्यभिंसीश्च[2] व्रतत्र[3] समया पाष्या । पाषी शिला । यदि वा शक्तिः पेषणादिति[4] ॥

त्वं दिवः । त्वं दिव उदकं प्रयच्छसि बलेन पृथिव्या इन्द्र तेषु तेषु स्थानेषु महान् । त्वं सोमस्य मदे प्रेरयस्यपः । तथा त्वं वृत्रशरीरेण तुल्यया शिलया वृत्रं व्यरुजः । हिंसार्थयोगे कर्मणि षष्ठी दृष्टा इति । स्तुतिमात्रमेव भवति । सूक्तेनाशीः ॥ (६)

---

प्र मंहि॑ष्ठाय बृह॒ते बृ॒हद्र॑ये स॒त्यशु॑ष्माय त॒वसे॑ म॒तिं भ॑रे ।
अ॒पामि॑व प्रव॒णे यस्य॑ दु॒र्धरं॒ राधो॑ वि॒श्वायु॒ शव॑से॒ अपा॑वृतम् ॥

प्र मंहिष्ठाय । प्रभरामि दातृतमाय महते महाधनाय स्त्यबलाय[5] वृद्धाय स्तुतिम् । अपामिव प्रवणेऽभिमुखो वेगो यस्य दुर्धरं बलं

[1] Perhaps to read त्वमन्तरिक्षमुदकं.

[2] Read व्यहिंसीश्च.

[3] Read वृत्रस्य ; or perhaps to read वृत्रसमया together.

[4] Here there is no figure to mark the end of the Sūkta.

[5] Read सत्यबलाय. The letters स and त्य are very close to each other and look like स्त्य.

भवति। ये च च[1] रायो[2] विश्वायु परिपूर्णं स्तोतॄणां शवसे विवृतद्वारं[3] भवति ॥

प्र मंहिष्ठाय। दातृतमाय महते महाधनाय सत्यबलाय वृद्धाय स्तुतिं प्रभरामि। येन स्तोतॄणां प्रदीयमानं धनं स्तोतृभिः दुर्धरं भवति अपामिव वेगः प्रवणाभिमुखः। सर्वगामि धनं स्तोतॄणां बलाय विवृतद्वारम ॥ (१)

**अधं ते विश्वमनु हासदिष्टय आपो निम्नेव सवना हविष्मतः ।**
**यत्पर्वते न समशीत हर्यत इन्द्रस्य वज्रः श्नथिता हिरण्ययः ॥**

अध ते। अनन्तरं ते सर्वमिदं जगदिष्टये भयज्ञाय[4] भान्वभवत्[5]। ततः प्रभृति त्वां यष्टुं यतत इत्यर्थः। इष्टिशब्दो हविर्यज्ञे आद्युदात्तः। यज्ञमात्रे प्रैषे चान्तोदात्तः।

यासामग्निरिष्टचा (ऋ. वे. १०. १६९. २)

इ + +[6] शोभनवचनोऽप्याद्युदात्तः। आपो निम्नानीव त्वां भजन्ते सवनानि हविष्मतः। यदेन्द्रस्य विचरणस्य कर्ता हिरण्मयो वज्रो वृत्रे शिलोच्चये वा न समशीत न सक्तो भवत्यध्वर्यतः[7] शोभनः ॥

[1] Repetition of च not wanted.

[2] Read राधो.

[3] द्व in द्वा completely worm-eaten.

[4] Read हविर्यज्ञाय.

[5] Read अन्वभवन्.

[6] यासामग्निरिष्टचे. Then space for about two syllables left blank. Perhaps to read इत्यत्र.

[7] Perhaps to read भवति हर्यतः

अथ ते विश्वम । सर्वमिदं जगदनन्तरमेव क्रमेण तव यागाय अभवत् । तथा यजमानस्य सवनानि च त्वामेवापो निम्नानीवाभिगच्छन्ति । यदेन्द्रस्य विवरणस्य कर्ता हिरण्मयो वज्रः शिलोच्चये न समशीत सहावस्थानं नाकरोत् । भित्वा निर्गत इत्यर्थः । प्रेप्साकर्मा हर्यतिः । कामयमानस्य शिलोच्चयेन भेद इति ॥ (२)

**अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे ।**
**यस्य धाम श्रवसे नामेन्द्रियं ज्योतिरकारि हरितो नायसे ॥**

अस्मै । अस्मै भीमायेन्द्रायास्मान् यज्ञे हविषा संसृज उषः[1] । संप्रत्यर्थीयो नकाराः[2] । सर्वेऽप्युपमार्थीयाः संप्रत्यर्थीयाश्च भवति[3] । शोभमाने स्तुत्यमाय[4] । यस्येन्द्रस्य याम[5] धारकं श्रवसेऽन्नाय नामा[6] नमकं इन्द्रियमैश्वर्यलिङ्गं ज्योतिरयसेऽकारि । इतस्ततो गमनमयः । हरितो न यथाश्वानितस्ततो गमयन्ति ॥

अस्मै भीमाय । उषः शुभ्रे अस्मै भीमायेन्द्राय अस्मान् यज्ञेऽन्नेन संसृज व्युष्टा सती स्तुत्यतमाय । सम्प्रत्यर्थीयो नकारः । यस्येन्द्रस्य शरीरं नाम च श्रवणायाकारि बलं च ज्योतिश्च कृतं गमनाय । यथाश्वा गच्छन्ति तद्वदिति ॥ (३)

**इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।**
**नहि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति नो हर्य तद्वचः ॥**

[1] Folio 46*a* ends with उष. The next page begins स्संप्रत्यर्थीयो.
[2] Perhaps to read नकारः
[3] Perhaps to read भवन्ति.
[4] Read स्तुत्यतमाय.
[5] Read धाम.
[6] Read नाम.

उमे[1] । त्स इमे[2] वयमिन्द्र तव स्वभूताः स्मो बहुभिः स्तुत । ये त्वारम्भमिवारभ्य[3] चरमो[4] बहुधन । न हि त्वत्तोऽन्यो गिर्वणः सहते स्तुतीः । तथा सति क्षोणीरितिव[5] अस्माकं प्रतिकामयते तद्वचः । पृथिवी यथा भूतानि प्रतिगच्छति ॥

इमे त इन्द्र । इमे वयमिन्द्र तव स्वभूता बहुभिः स्तुत ये त्वामारभ्य चरामो बहुधन। न हि त्वत्तोऽन्यो गीर्भिवननीय स्तोतॄणां स्तोत्राणि सहते । न हि दरिद्रः स्तोत्राणि सोढुं शक्नोति । पृथिवीव सर्वद्रव्याण्यस्माकं स्तुतीः प्रतिकामय ॥ (४)

**भूरि त इन्द्र वीर्यं१ तव स्मस्यस्य स्तोतुर्मघवन्काममा पृण ।**
**अनु ते द्यौर्बृहती वीर्यं मम इयं च ते पृथिवी नेम ओजसे ॥**

भूरि । भूरि बिभर्तीति । यदि वा बहु तवेन्द्र वीर्यम । तव वयं स्मः । त्वमस्य स्तोनुममघवन्नापूरस्य[6] कामम् । अनुमेने[7] गोर्बृहतीति[8] तव वीर्यम् । यस्यामुपरि ष्ठेति । यं च पृथिवी तवौजसे नेमे । बलिनस्वत्तो[9] भीतायस्तिष्ठतीति[10] ॥

[1] Read इमे.
[2] Read त इमे.
[3] There is nothing in the text corresponding to आरम्भमिव.
[4] Read चरामो.
[5] Read क्षोणीरिव.
[6] Read स्तोतुर्मघवन्नापूरय.
[7] Read अनुममे.
[8] Read द्यौर्बृहती.
[9] Read बलिनस्त्वत्तो.
[10] Read भीताधस्तिष्ठतीति.

भूरि त इन्द्र। बहु ते इन्द्र वीर्यम्। तव वयं स्मः। त्वमस्य सर्वस्य स्तोतुर्मघवन् आपूरय कामम्। इन्द्र अनुममे बृहती द्यौस्तव वीर्यम्। त्वदीयाद्वीर्याद्वीनामीयत। इयं च ते पृथिवी तवौजसोऽर्धे भवति। इदं भूयामिदाण्यमिति (?) सन्देहेन ओजसोऽर्धे भवति। ओजस्तु पूर्णमेव इति॥ (५)

त्वं तमिन्द्र पर्वतं महामुरुं वज्रेण वज्रिन्पर्वशश्चकर्तिथ।
अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः॥

त्वं तमिन्द्र[1] पर्वतं महामुरुं तं विस्तीर्णं वज्रेण वज्रिन् पर्वः[2] शकलीकृतवानसि। अथावासृजश्च निरुद्धा अपस्सरणाय। सत्रा महत् सत्यमेव व्याप्तं धारयसि केवलमसाधारणं बलमिति[3]॥

त्वं तमिन्द्र। पूर्वोक्तस्य समर्थनम्। त्वं तमिन्द्र मेघं महान्तं विस्तीर्णं वज्रेण वज्रीन् पर्वशः शकलीकृतवानसि। अथावासृजश्च निरुद्धा अपः सरणाय। सत्यमेव व्याप्तं धारयसि असाधारणं बलम्। इति सर्वानुक्तान् कामान् आशास्ते सूक्तेन इति॥ (६)

---

नू चित्सहोजा अमृतो नि तुन्दते होता यद्दूतो अभवद्विवस्वतः।
वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति॥

[1] Pratika not separately given.

[2] Read पर्वशः

[3] Here there is the figure eleven to mark the end of the Sūkta.

नूचित् । गोतमो नोया:[1] ।

नोयस्सुवृक्ति[2] प्र भर (ऋ. वे. १. ६४. १)

इति । तत्र[3] शाट्यायनकम्—नोया[4] दिवे कक्षीवतो ज्योगप्रतिष्ठितश्चरन्निति[5] । क्षिप्रमेव सहसो जातोऽमृतो[6] नचलिति[7] होता । यदा दूतो भवति यजमानस्य । विममे विस्तृतं करोति । साधकतमैः पथिभिस्तेजोभी रजोऽन्तरिक्षम । परिचरति यज्ञे हविषा देवान ॥

नू चित्सहोजाः । नोधा आङ्गिरसः । क्षिप्रमेव मथनेन जातो मरणवर्जितः निचलति होता यदा दूतो भवति यजमानस्य । साधुतमैः पथिभिरनुपहतैर्मार्गैः अन्तरिक्षं परिच्छिनत्ति । परिचरति यज्ञे हविषा देवानिति ॥ (१)

**आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति ।**
**अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ॥**

आ स्वम् । अतिष्ठति[8] स्वतदनीयं[9] तृणगुल्मादिकमात्मना । संमिश्रयन्नजरं क्षिप्रं संभक्षयन्नतसेषु नीलपुष्पेषु । ते ह्यग्नेः[10] प्रियाः ।

[1] Read नोधाः

[2] Read नोधस्सुवृक्तिं.

[3] त्र mostly worm-eaten.

[4] Read नोधा.

[5] This may be compared with नोधा वै काक्षीवतो ज्योगवरुद्धश्चरन् । स ज्योगप्रतिष्ठोऽचार्षम् (जै. ब्रा. ४०).

[6] Read जातोऽमृतो.

[7] Read निचलति.

[8] Read आतिष्ठति.

[9] Read स्वमदनीयं.

[10] Read ह्यग्नेः

दतस्यास्य[1] पृषितस्येतस्ततो गच्छतः पृष्ठमत्य इव रोचते । सोऽयं दिव इव सानु समुच्छ्रितमभ्रं सानयचिक्रदत्[2] क्रन्दते ॥

आ स्वमद्म । आतिष्ठति स्वमन्नं तृणगुल्मादिकं आत्मना सम्मिश्रयन् अजरः । क्षिप्रं सर्वं भक्षयन् काष्ठेषु । वनस्थैः काष्ठैरुक्षितस्याग्नेः पृष्ठं अश्व इव रोचते इतस्ततः शीघ्रगमनात् । तथासौ स्तनयन् दिवः सानुं मेघ इव शब्दं करोति ॥ (२)

**क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः ।**
**रथो न विक्ष्वृञ्जसान आयुषु व्यानुषग्वार्या देव ऋण्वति ॥**

क्राणा । कुर्वाणो रुदादिभिः[3] पुरो निहितो होता यज्ञे निषण्णः[4] शत्रुधनानामभिभविता अमर्त्यः । रथ इव मनुष्येषु स्तूयमान उक्थैर्वरणीयानि अनुषक्तः व्यृण्वति देव इति ॥

क्राणा रुद्रेभिः । कुर्वाणो रुद्रादिभिः पुरो निहितो होता यज्ञे निषण्णः शत्रुधनानामभिभविता अमर्त्यः । रथ इव अनोरथं मनुष्येष्वाघारादिभिः प्रसाध्यमानः प्रक्षिपत्यनुषक्तं धनानि देवः ॥ (३)

**वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।**
**तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥**

[1] Not clear. Perhaps to read तस्यातस्य.

[2] Read स्तनयन्नचिक्रदत्.

[3] Read रुद्रादिभिः

[4] ण्ण mostly worm-eaten.

ष वातजूत:[1] । वितिष्ठदे[2] वातप्रेरितोऽन्तमेषु । वृथेत्यनायासजन:[3] । जुहूभिर्युक्त[4] सृण्या व[5] । जुह्वो रश्मयः । सृणिज्वाला मक्तः[6] । महास्वनः । क्षिप्रं यदा[7] त्वमग्ने वृक्षान् प्रति[8] वृथेवाचरसि । भन् + + +[9] । तदानीन्तव मार्गः कृष्णो[10] भवति । श्वेतंत्वाल[11] अजर ॥

वि वातजूतः । वितिष्ठते वातप्रेरितोऽन्तमेषु अनायासेन हूयमानैः काष्ठैः ज्वालालक्षणेनाङ्कुशेन च युक्तो महास्वनः । क्षिप्रं यदा त्वं अग्ने वृक्षान् प्रति वृथेवाचरसि दहसीत्यर्थः । तदानीं तव गमनमार्गः कृष्णो भवति श्वेतज्वालासङ्घ अजर ॥ (४)

**तपुर्जम्भो वन आ वातचोदितो यूथे न साह्वाँ अव वाति वंसगः । अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ॥**

तपुर्जम्भः । तापकःज्वालाजंभः[12] । अरण्ये वातेन प्रेरितो यूथे न[13]

[1] Read वि वातजूत:

[2] Read वितिष्ठते.

[3] Read वृथेत्यनायासवचनः

[4] Read जुहूभिर्युक्तः

[5] Read च.

[6] Perhaps to read सृणिर्ज्वाला सक्तः

[7] य completely worm-eaten.

[8] Folio 37*a* ends here.

[9] After भन् about three letters are completely worm-eaten. The first looks like क्ष, क, नृ or त्र. Perhaps to read भक्षयसि.

[10] त is completely worm-eaten. The आ mark in दा can just be made out. A bit of न्त is seen. व completely lost. मा is just decipherable. र्गः and कृ completely lost. Reading only a conjecture.

[11] Read श्वेतज्वाल.

[12] Perhaps to read तापकज्वालाजम्भः

[13] Read यूथे न. Or is the reading यूथेन?

ज्वालासंघेन सह[1] सह्वान् अवगच्छति वंसगः + + इव गोयूथे। अभित्रजन्नक्षीणं[2] ज्वालाया[3] ज[4] आदुवृक्षेस्थ उदक[5] स्थावरं जंगमं च बिभेत्यस्मान् पतनशीलान् ॥

तपुर्जम्भ। तापयितृज्वालादंष्ट्रो वृक्षेषु वातेन प्रेरितो ज्वालासंयुक्तः सहनशीलोऽग्निरववाति वननीयगमनः अधोगच्छति। अक्षीणमरण्यमध्यस्थ-मप्युदकं ज्वालयाभिगच्छन् अववाति। तस्मादग्ने स्थावरं जङ्गमं च बिभेति पक्षिणश्च ॥ (५)

दधुष्ट्वा भृगवो मानुषेष्वा रयिं न चारुं सुहवं जनेभ्यः।
होतारमग्ने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ॥

यदधुः[6]। न्यदधुप्या[7] भृगवो मानुषेषु। धनमिव शोभनम्। यस्त्वं जनेभ्यः सुह्वानो भवसि। होतारमग्नेऽतिथिं वरणीयम्। मित्रमिव सुखकरं दिवि भवाय[8] जन्मने। देवेभ्य इत्यर्थः ॥

[1] This lends support to the reading being यूथेन instead of यूथे न.

[2] After सह the entire line is badly worm-eaten. स is in tact. ह्वा mostly worm-eaten; only small bits seen. नवग in tact. च्छति completely lost. So also वंस. The letter गः in tact. Two letters completely broken off. इव गोयू and ए in थे can be made out. अभित्रज completely lost. Line ends. Reading only a conjecture.

[3] Read ज्वालया.

[4] Read रज.

[5] Not intelligible. There must be वृक्षस्थं उदकं.

[6] Read only दधुः

[7] Read न्यदधुष्ट्वा or is it आदधुष्ट्वा. There is आ coming after.

[8] य completely worm-eaten.

दधुष्ट्वा । आदधुस्त्वां भृगवो मानुषेषु धनमिव शोभनं स्वाह्वानं जनानां होतारं अग्ने अतिथिं वरणीयं मित्रमिव सुखकरं दिवि जाताय देवगणाय ॥ (६)

**होतारं सप्त जुह्वो३ यजिष्ठं यं वाघतो वृणते अध्वरेषु ।**
**अग्निं विश्वेषामरतिं वसूनां सपर्यामि प्रयसा यामि रत्नम् ॥**

होतारम् । होतारं सप्त होतार ऋत्विजः यष्टृतमं यं वृणते यज्ञेषु अग्निं विश्वेषां वसूनामरतिम् । पतिमित्यर्थः । परिचराम्यन्नेन । याचे च रन्तम्[1] ।

युवोर्ऋतं[2] रोदसी (ऋ. वे. ३. ५४. ३)

इत्यत्र संपर्यामि[3] इति पादो[4] न दृष्टः[5] । तत्र हि कर्म सामर्थ्यलभ्यम् । इह त्वग्निमिति ॥

होतारं सप्त । होतारं प्रवृत्ताहुतीनां सप्त होतारः यष्टृतमं यमृत्विजः सप्त वृणते यज्ञेष्वग्निं विश्वेषां अभिगन्तारं धनानां परिचराम्यन्नेन । याचे च रत्नम् ॥ (७)

**अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ ।**
**अग्ने गृणन्तमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः ॥**

अच्छिद्रा । अच्छिद्राणि सहस्पुत्रासुभ्यं[6] अद्य स्तोतृभ्यो मित्रमहः

[1] Read रत्नम्.
[2] ऋं looks more like नृ.
[3] Read सपर्यामि.
[4] The last pāda in R. V. 3. 54. 3.
[5] Read सृष्टः
[6] Read सहसस्पुत्रास्मभ्यं.

शर्म सुखानि यच्छ । अग्ने गृणन्तमंहसो रक्षात्[1] तस्य पुत्र । पूर्भिर्विस्तृताभिः ॥

अच्छिद्रा सूनो । अच्छिद्रं गृहं सहसस्पुत्र अस्मभ्यमद्य स्तोतृभ्यो मित्राणां पूजयितः प्रयच्छ । अग्ने स्तुवन्तं अर्वते रक्ष अन्नस्य पुत्र आयसैः पुरैः । गर्भो अस्योषधीनामिति मन्त्रः ॥ (८)

**भवा वरूथं गृणते विभावो भवा मघवन्मघवद्भ्यः शर्म ।**
**उरुष्याग्ने अंहसो गृणन्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥**

भव[2] वारकं गृहं स्तुवते विभावः । भव च व व[3] हविष्मद्भ्यः[4] सुखम् । रक्षाग्ने सत्रो[5] स्तुवन्तम् । प्रातः शीघ्रं पुनरप्यग्निरागच्छतु कर्मवसुरिति[6] ॥

भवा वरूथम् । भव गृहं स्तुवते दीप्तिमन् । भव धनवन् हविष्मद्भ्यो गृहम् । रक्षाग्ने स्तुवन्तमवर्तेः । प्रातरेवाग्निः कर्मणा वासयिता इह आगच्छतु इति देवस्याग्नेर्गृहं सूक्तेनाशास्ते ॥ (९)

---

[1] Read रक्ष. The आत् must belong to नपात्. Something evidently missing. May be to read रक्ष । ऊर्जो नपात् । ऊर्ग् अन्नम् । तस्य पुत्र.

[2] Pratika not separately given.

[3] व व must perhaps be read as मघवन्.

[4] व in वि and ष्म completely lost. Reading only a conjecture.

[5] Not intelligible. This must be the meaning of अंहसः

[6] Here there is the figure 12 to mark the end of the sūkta.

व॒या इद॑ग्ने अ॒ग्नय॑स्ते अ॒न्ये त्वे विश्वे॑ अ॒मृता॑ मादयन्ते ।
वैश्वा॑नर॒ नाभि॑रसि क्षिती॒नां स्थूणे॑व॒ जनाँ॑ उप॒मिद्य॑यन्थ ॥

वया इतीत्[1] । वयाश्शाखाः[2] वेतेः । शाखा एवाग्ने तवान्येऽग्नयः । त्वयि सर्वे देवा माद्यन्ति शरीरेषु स्थिते[3] । वैश्वानर त्वं नाभिर्बन्धकोऽसि प्रजानाम् । स्थूणेव वंशमुपनीयमानान् जनान् अयच्छताः[4] ॥

वया इदग्ने ।

ओषधीषु मनुष्येषु भूमौ संवत्सरे तथा ।
पचन् यो वर्तते सोऽग्निर्वैश्वानर इति स्मृतः ॥

शाखा एवाग्ने तवान्ये अग्नयः । त्वयि सर्वे देवा माद्यन्ति । वैश्वानर नाभिस्थानीयोऽसि प्रजानां यथोत्तम्भनार्थमुपनीयमाना स्थूणा वंशान् धारयति एवं त्वं जनानयच्छथाः ॥ (१)

मू॒र्धा दि॒वो नाभि॑र॒ग्निः पृ॑थि॒व्या अथा॑भवदर॒ती रोद॑स्योः ।
तं त्वा॑ दे॒वासो॑ऽजनयन्त दे॒वं वैश्वा॑नर॒ ज्योति॒रिदार्या॑य ॥

मूर्धा । दिवो मूर्धाग्निः पृथिव्याश्च नाभिरिति[5] धारकं ब्रूते । अपिचायं रोदस्योः अरतिः भवति । तं त्वा देवा अजनयन् देवं वैश्वानर ज्योतिराय्यय[6] मनवे ॥

[1] Read वया इत्.

[2] खाः mostly worm-eaten. Difficult to decipher.

[3] Perhaps to read स्थिताः

[4] Perhaps to read अयच्छथाः

[5] Read नाभिः । नभिरिति.

[6] Read ज्योतिरार्याय. The letter ज्या in ज्यो completely worm-eaten.

मूर्धा दिवः । उच्छ्रितः स्वर्गस्य नहनमग्निः पृथिव्याः । अथाभवदरतिर्द्यावापृथिव्योः । इतस्तत्र गच्छति । ततोऽस्यामित्यर्थः । अपिवा द्यावापृथिव्योर्मध्ये गच्छत्यादित्यः सन् । तं त्वा देवासोऽजनयन्त देवं वैश्वानरं ज्योतिर्भूतमार्याय मनवे ॥　(२)

**आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि ।**
**या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥**

आ सूर्ये । आदधिरे सूर्ये इव रश्मीन् ध्रुवानग्नौ वैश्वानरे वसूनि । ततश्च त्वं पर्वतादिषु यानि वसूनि तस्य तस्य[1] सर्वस्येश्वरो भवसि । यदि वा या इत्येकवचनम् । तथा च

या ते धामानि दिवि या पृथिव्याम् (ऋ. वे. १. ९१. ४)

इत्यत्र या पर्वतेष्विति पादो[2] न सृष्ट इति ॥

आ सूर्ये न । आदधिरे सूर्ये इव रश्मीन् ध्रुवान् । असुरैः सह विजयमुपयन्तो देवा अग्नौ वैश्वानरे यानि वसूनि पर्वतादिषु यानि च मानुषेषु तस्य सर्वस्य ईश्वरस्त्वं भवसि ॥　(३)

**बृहती इव सूनवे रोदसी गिरो होता मनुष्यो३ न दक्षः ।**
**स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः ॥**

बृहती । रोदसीति पादान्ताः[3] । तथा भ्यर्थः[4] समञ्जसः । समश्च

[1] Repetition of तस्य not wanted.

[2] The second pāda in R. V. 1. 91. 4.

[3] Read पादान्तः

[4] Read ह्यर्थः

विभागः । विच्छोदोऽन्यः[1] प्रमादजः[2] । यदिमे रोदसी बृहती भवतः तदिदं बृहन्तं[3] वैश्वानरं दृष्ट्वा तस्य यथेच्छावस्थानार्थमिति मे वदति । किञ्च शिरः[4] स्तुतीः होता मनुष्यव[5] इव समर्थः । उच्चे[6] व्याप्तोमते[7] । सत्यबलाय । बह्वी[8] वैश्वानराय नेतृतमाय महनी[9] प्रयुङ्क्त[10] इति ॥

बृहती इव । आत्मनः सूनवे वैश्वानराय तदर्थं महती इव भवतो द्यावापृथिव्याविति पादान्तः । गिरो होता मनुष्यश्च समर्थः । सर्ववते सत्यबलाय बह्वीर्वैश्वानराय नेतृतमाय महतीः प्रयुङ्क्ते ॥ (४)

**दिवश्चित्ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वम् ।**
**राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ ॥**

[1] Read विच्छेदोऽन्यः

[2] This looks like an anuṣṭup verse. Perhaps a part of his Anukramaṇī. The pāda ends here. I have not been able to find out the alternative division into pādas mentioned here. Perhaps to read

रोदसी इति पादान्तस्तथा ह्यर्थः समञ्जसः ।
समश्चैवं विभागः स्याद्विच्छेदोऽन्यः प्रमादजः ॥

[3] बृ completely worm-eaten. This begins the last line. Since the end of the leaf is narrow, the line begins only an inch and a half away from the margin.

[4] Read गिरः

[5] Read मनुष्य.

[6] The relevancy of this word not clear. Perhaps किंच.

[7] Read व्याप्तिमते.

[8] Read बह्वीः

[9] Read महती.

[10] Folio 37*b* ends with प्रयु.

दिवोऽपि च तो[1] महते मा[2] जातवेदो वैश्वानर[3] प्ररिरिचे महमत्वम्[4] । राजा त्वमसि मनोजातानां कृष्टिमाम्[5] । युद्धेन च देवेसश्चकर्थ[6] धनमसुरहृतम् ॥

दिवश्चित्ते । दिवोऽपि ते महतो जातवेदो वैश्वानर प्ररिरिचे महत्वम् । राजा भवसि मानुषीणां विशाम् । मनुष्याणामित्यर्थः । युद्धेन देवेभ्यश्च धनं चकर्थ ॥　　　　(५)

**प्र नू म॑हि॒त्वं वृ॑ष॒भस्य॑ वोचं॒ यं पू॒रवो॑ वृत्र॒हणं॒ सच॑न्ते ।**
**वै॒श्वा॒न॒रो दस्यु॑म॒ग्निर्ज॑घ॒न्वाँ अधू॑नो॒त्काष्ठा॒ अव॒ शम्ब॑रं भेत् ॥**

प्र नु । निरुक्तम् । वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एव नरा नयन्तीति वोपिवा विश्वानर एव स्यात् प्रत्यृतस्य सर्वाणि भूतानि तत्को वैश्वानरो मध्यम इत्याचार्या वर्षकर्मणा ह्येनं स्तौति प्रनू महित्वमिति[7] ।

[1] The आ mark in वो and the beginning of पि completely worm-eaten. After दिवोपि there is च तो. The end of त worm-eaten; but the letter can thus be deciphered. Read दिवोऽपि च ते Pratika not separately given.

[2] मा not wanted.

[3] One ए mark in वै, the whole of श्वा and the lower half of नर worm-eaten.

[4] Read महत्वम्.

[5] Read मनोर्जातानां कृष्टीनाम्.

[6] Read देवेभ्यश्चकर्थ.

[7] The Nirukta has: वैश्वानरः कस्मात् । विश्वान्नरान्नयति । विश्व एनं नरा नयन्तीति वा । अपि वा विश्वानर एव स्यात् । प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः (नि. ७. २१) तत्को वैश्वानरः । मध्यम इत्याचार्याः वर्षकर्मणा ह्येनं स्तौति (नि. ७. २२) प्रनूमहित्वं . . . . (नि. ७. २३).

प्रब्रवीमि तन्महित्वं माहाभाग्यं क्षिप्रं वृषभस्य वर्षितुरपाम्[1] । यं पूरव: पूरयितव्या मनुष्या वृत्रहणं सचन्ते सेवन्ते वर्षकामा: । वैश्वानरोऽग्निरुपक्षयितारं[2] जघत्वान्[3] अधूनोत् अव:[4] काष्ठा: । अवाभिनच्छम्बरं मेघमिति ॥

प्र नू महित्वम् । प्रब्रवीमि तन्महित्वं माहाभाग्यं क्षिप्रं वर्षितुरपाम् । यं पूरयितव्या मनुष्या मेघहनं सेवन्ते वर्षकामा: । वैश्वानरोऽग्निरुपक्षिपयितारं घ्नन् अवाधूनोत् काष्ठा अप: । अवाभिनच्च मेघम् ॥ (६)

**वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा ।**
**शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान ॥**

वैश्वानरो[5] महिना[6] व्याप्तमनुष्यो भवेद्वाजेषु[7] यष्टवो[8] दीप्तिमान् । श:वनो[9] नाम कश्चित् । ततस्य[10] पुत्र:[11] । श्शतिनिभि:[12] स्तुतिभि: । पुरुणीथे च नृपतौ स्तूयते सूनृतावान् वाग्मीति[13] ॥

[1] व completely worm-eaten.
[2] Read वैश्वानरोऽग्निरुपक्षपयितारं.
[3] Read जघन्वान्.
[4] अव: not wanted here. Or to read काष्ठा अप: instead of अव: काष्ठा:
[5] Pratika not separately given.
[6] Read महिम्ना.
[7] Read भरद्वाजेषु.
[8] Read यष्टव्यो.
[9] Read शतवनो.
[10] Read तस्य. What is written in the MS. is कश्चित्तत्स्य.
[11] Perhaps something missing; the word शातवनेय: to be added after पुत्र:. Perhaps also तस्मिन्.
[12] Read शतिनीभि:
[13] Here there is the figure 13 to mark the end of the Sūkta.

वैश्वानरः । वैश्वानरो महत्तया सर्वमनुष्यः सर्वा प्रजा अस्य भरद्वाजेषु यजनीयो दीप्तिमान् । शतवनो नाम कश्चित् । तस्य पुत्रः पुरुणीथः । तस्मिन् अयमग्निः शतसंख्याभिः स्तुतिभिः स्तूयते सत्यकर्मा । वैश्वानराग्नेः स्तुतिमात्रमिति ॥ (७)

---

वह्निं॑ य॒शसं॑ वि॒दथ॑स्य के॒तुं सु॑प्रा॒व्यं॑ दू॒तं स॒द्योअ॑र्थम् ।
द्वि॒जन्मा॑नं र॒यिमि॑व प्रश॒स्तं रा॒तिं भ॑र॒द्भृग॑वे मा॒तरि॑श्वा ॥

वह्निम् । वोढ्धारं[1] यशस्विनं यज्ञस्य केतुभूतम् । सुष्ठु प्रकर्षेण च योऽभिरक्षति सुप्रावि[2] । तम् । ज्ञता[3] । सद्योगमम्[4] । द्विजन्मानं[5] द्वयोर्लोकयोररण्योर्वा जायमानम् । रयिमिव प्रशस्तम् । यातिमभरन्[6] मृगवे[7] मातरिश्वा । रातिः पुत्रः । मातरिश्वना भृगव आभृतस्सन् तस्य हि रातिर्भवति ।

रातिः[8] भृगूणामुच्छिजा[9] कविक्रतुम् (ऋ. वे. ३. २. ४)

इत्युक्तम् ॥

[1] Read वोढारं.

[2] Perhaps to read स सुप्राव्यः. After व्य something is worm-eaten, perhaps a visarga is lost.

[3] Word not clear. In the text there is the word दूतम्.

[4] Perhaps to read सद्योगन्तारम्.

[5] First written द्विजन्मनं. Then आ mark inserted below the line between न्म and नं.

[6] Read रातिमभरत्.

[7] Read भृगवे.

[8] Read रातिं.

[9] Read भृगूणामुशिजं.

वह्निं यशसम्। वोढारमग्निं यशस्विनं यज्ञस्य ध्वजभूतं सुष्ठु प्रकर्षेण रक्षणीयं दूतं सद्यो गन्तारं द्वयोररण्योर्जायमानं धनमिव प्रशस्तं अभरत् भृगवे दिव आहृत्य मातरिश्वा ॥ (१)

**अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च मर्ताः ।**
**दिवश्चित्पूर्वो न्यसादि होतापृच्छ्यो विश्पतिर्विक्षु वेधाः ॥**

अस्य । अस्य शासितुः सेवनमुभये कुर्वन्ति ।

श्रुतच्छासुरिव[1] वध्रिमन्या[2] (ऋ. वे. १. ११६. १३)

इति[3] । हुतेन हविषा हवृहन्त[4] । उच्छिषो[5] देवाः वष्टेः इच्छन्ति सुन्वतः । ये च मर्ताः यजमानाः । दिवश्चिदादित्यादिपि[6] पूर्व एवोषस्सु निषीदति होता आपृच्छ्य आप्रष्टव्यः प्रशस्तः । विशां पतिर्विक्षु विधाता इत्यौषसमग्निमाह । यदि वाग्निहोत्रिकम् ।

उषो यदग्निं समिधे चकर्थ (ऋ. वे. १. ११३. ९)

इति ॥

अस्य शासुः । अस्य शासनमुभये सेवन्ते हविष्मन्त उशिजो देवाः । उशिग्वष्टेः कान्तिकर्मणः । ये च मर्त्याः । सोऽयं दिवोऽपि प्रत्नः होता प्रष्टव्यः विशां स्वामी नृषु स्थापितो मातरिश्वना विधाता इति ॥ (२)

[1] Read श्रुतं तच्छासुरिव.

[2] Read वध्रिमत्याः

[3] What is written is वध्रिमन्येति.

[4] Read हविष्मन्तः

[5] Read उशिजो.

[6] Read दिवश्चिदादित्यादपि.

तं नव्यसी हृद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।
यमृत्विजो वृजने मानुषासः प्रयस्वन्त आयवो जीजनन्त ॥

तं नव्यसी । भृत् प्राणो भरते:[1] । तं नवतरा प्राणाज्जायमानमस्माकं सुकीर्तिः स्तुतिर्मादनज्वालमश्नौतु[2] । यभृत्विजो[3] वृजने युद्धे सञ्जाते मनुष्याणां हितकामा हविष्ठन्तो[4] मर्त्या यज्ञार्थं जनयन्तीति ॥

तं नव्यसी । तमग्निं जायमानं मत्तो हृदयान्निर्गम्य नवतरा सुष्टुतिः कीर्त्यमाना मादयितृजिह्वं व्याप्नोतु । यमृत्विजः उपद्रवे मनुष्येषु जाता हविष्मन्तो गच्छन्तः तत्परिहारार्थं अरण्योर्जनयन्ति ॥ (३)

उशिक्पावको वसुर्मानुषेषु वरेण्यो होताधायि विक्षु ।
दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणाम् ॥

उशिक् । उशिक् शोधको वासधिता[5] मानुषेषु परीरणीयो[6] होता निहितो विक्षु[7] विष्टेषु[8] । दमूना रक्षसां दमनो[9] यस्य स दमूनाः ।

[1] Read हृत् प्राणो हरते:

[2] Usually र्म is written as one म following another with a dot between them. Here it is written as a single म with a dot above. A dot above usually indicates that the letter is to be deleted. The latter word to be read as अश्नोतु.

[3] Read यमृत्विजो.

[4] Read हविष्मन्तो.

[5] Read वासयिता.

[6] Read वरणीयो. Folio 38*a* ends here.

[7] विक्षु mostly worm-eaten. Only bits remaining. Only a conjecture.

[8] The first letter mostly worm-eaten. वि only a conjecture. Perhaps to read निविष्टेषु.

[9] Perhaps to read दमनमनो.

रक्षोघ्नेषु हि मन्त्रेषु पदमिदं प्रयुज्यते । अपिच युद्धलिङ्गेषु सूक्तेषु । यास्कस्त्वाह—दमूना दममना[1] वा दममानमना वापिवा[2] दम इति गृहनाम । दमेराकर्षणार्थात्[3] । आकारान्तः[4] पादः । स्वरेभ्युदये पदान्त आकार ति[5] प्रगृह्यं भवति । सर्वत्र चाथ[6] न्यायोऽनुसन्धेयः । तत्राग्निर्भुवद्भूत् मातदरिश्वना[7] भूतः । रयिपती रयीणाम् ।

नि काव्या[8] वेधसः (ऋ. वे. १. ७२. १)

इत्यत्र शिभुवदिति[9] लेट् । इह तु भूतापदेश इति । तत्र[10] न विसृष्टः ॥

उशिक् पावकः । कामयिता शोधयिता मनुष्येषु वासयिता देवः सन् वरणीयो निहितो निविष्टेषु । दममना गृहे गृहपतिः सोऽयमग्निर्भवति रयीणां रयिपतिः ॥ (४)

[1] दममा in tact. Then two letters broken off. नम only a conjecture.

[2] वापि clear. Then next letter broken off. वा only a conjecture. There is a small downward stroke, which cannot belong to व. It can belong only to क, त etc. The letter actually written, uncertain.

[3] See दमूना दममना वा दानमना वा दान्तमना वा । अपि वा दम इति गृहनाम । तन्मना स्यात् (नि. ४. ४.)

[4] First written आकारन्तः Then आ mark inserted below the line between र and न्तः

[5] Perhaps to read इति. Yet meaning not clear.

[6] Read चायं.

[7] Read मातरिश्वना.

[8] व्या not clear. Looks like य्या also.

[9] Read अग्निर्भुवदिति. This is the third pāda in R. V. 1. 72. 1.

[10] Or is it to read ततो ?

तं त्वां वयं पतिमग्ने रयीणां प्र शंसामो मतिभिर्गोतमासः ।
आशुं न वाजंभरं मर्जयन्तः प्रातर्मक्षू धियावसुर्जगम्यात् ॥

स्पष्टार्थोत्तरा[1] । आशुरश्वा[2] । वाजंभरोऽन्नं य आहरति । मार्जजनं[3] अश्वस्य पृष्ठे भवति । तत्राग्निसंमार्गे[4] ।

क्षिपन्त[5] उदमृक्षन्त पज्राः[6] (ऋ. वे. १. १२६. ४)

इति[7] ॥

तं त्वा वयम् । तं त्वां वयं पतिमग्ने रयीणां प्रशंसामः स्तुतिभिर्गोतमाः । अश्वमिवान्नस्याहर्तारं पाणिना स्पृशन्तः सादिनः । यथाग्निरस्मिन् लोके आहृतः तदुक्तं सूक्ते ॥ (९)

---

अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय ।
ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ॥

[1] The verse No. 5.

[2] Perhaps to read आशुरश्वः

[3] Read मार्जनं.

[4] The first letter must be अ. I am not sure if what is written is अ or त. It looks like त. But it can be अ also.

[5] Read कक्षीवन्त.

[6] ज्रा completely worm-eaten.

[7] Here there is the figure fourteen to mark the end of the sūkta.

अस्मै । अस्मा एव प्रहरामि वृद्धाय क्षिप्रायान्नमिव स्तोमं महते । तत्र निरुक्तम् । ऋचीष[1] ऋचा समः । अध्रिगुरध्धृतगमन इति[2] । यः स्तुत्या समः कर्मभिः स ऋचीषः[3] सत्यमन्त्र[4] । ओमं[5] वहेः । य इन्द्रं प्रापयति । इन्द्राय हि स्तोत्राणि स्तोतृभिरत्यन्तं दत्तानि भवन्तीति ॥

अस्मा इदु । इन्द्रायैव वृद्धाय प्रभरामि शत्रूणां हिंसित्रे अन्नमिव स्तोत्रं महते स्तुत्या समाय अधृतगमनाय वहनसाधनं इन्द्राय स्तोत्राण्यत्यन्तं स्तोतृभिर्दत्तानि ॥ (१)

**अस्मा इदु प्रयं इव प्र यंसि भराम्याङ्गूषं बाधे सुवृक्ति ।**
**इन्द्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयन्त ॥**

अस्मै । अस्मा एवान्नमिव प्रयच्छामिव[6] । तदेवाह । भराम्याङ्गूषं स्तोत्रं बाधितुं सपत्नान् सुप्रवृत्तमन्यूनानधिकम्[7] । आगूष आंघोषः[8] पर्यासपोषः[9] ।

[1] Read ऋचीषम.

[2] See स्तवे वज्र्यृचीषमः । स्तूयते वज्र्यृचा समः (नि. ६. २३) and तुभ्यं श्चोतन्त्यध्रिगो शचीवः। अधृतगमनकर्मवन् (नि. ५. ११).

[3] Read ऋचीषमः

[4] Read सत्यमन्त्रः

[5] Read ओहं.

[6] The final व not wanted. Evidently a mistake due to मिव in अन्नमिव just before.

[7] अन्यूनाधिकम् is enough.

[8] Read आङ्गूष आघोषः

[9] Read पर्याप्तघोषः

बाधो[1] मरुतो अह्वाम देवान् (ऋ. वे. ६. ५०. ४)

इत्यकारान्तो युद्धवचनोऽन्तोदात्तः[2] । इन्द्राय हृदयेन मनसा च मनीषया च पुराणाय पतये धियः स्तुतीः संस्कुर्वन्ति स्तोतारः । हृत् हरतेः । मनो मनेरिति ॥

अस्मा इदु । अस्मा एवान्नमिव स्तोत्रं प्रयच्छामि । भरामि स्तोत्रं बाधित्रे सुप्रवृत्तम् । इति प्रथमपादोक्तं एवोक्तम् । इन्द्राय हृदादिभिः पुराणाय पालयित्रे कर्माणि संस्कुर्वन्ति ॥ (२)

**अस्मा इदु त्यमुपमं स्वर्षां भराम्याङ्गूषमास्येन ।**
**मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ॥**

अस्मै । अस्मा एव तमुपमं प्रशस्तं उपमां प्रशस्तं[3] उपमानभूतं स्वर्षां धनस्य दातारं भराम्याङ्गूषमास्येन । दात्रममच्छोक्तिभिः[4] सूरिं वावृधध्यै[5] वर्धनीयमहं च स्तोमीति[6] ॥

अस्मा इदु । अस्मा एव तमुपमानभूतं सर्वस्य दातारं भरामि स्तोत्रमास्येन दातृतमं स्तुतीनामभिमुखोक्तिभिः सुप्रवृत्तैः प्राज्ञं वर्धयितुं आङ्गूषं भरामीति ॥ (३)

**अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय ।**
**गिरश्च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं मेधिराय ॥**

[1] Read बाधे.
[2] In R. V. 6. 50. 4. बाधे has accent on धे.
[3] उपमां प्रशस्तं not wanted.
[4] Read दातृतममच्छोक्तिभिः
[5] Read वावृधध्यै.
[6] Read स्तौमीति. The words मतीनां सुवृक्तिभिः not commented.

अस्मै । अस्मा एवाहं स्तोमं संप्रेरयामि रथमिव तष्टा रक्षका:[1] तत्सिनारयतनाय[2] रथजीवनाय स्वामिने । सिनमन्नं सिनाति भूतानि । गिरश्चल[3] ऋचश्च गीर्भिरुह्यमानाय सुप्रवृत्ता: । अपिच इन्द्राय विश्वमिन्वं प्रहरामि मेधाविने । विश्वं यत् प्रीणयति तद्विश्वमिन्वं हविश्चेति ॥

अस्मा इदु । अस्मा एवाहं स्तोत्रं संप्रेरयामि रथमिव संस्कर्ता निष्कृतमन्ते । तत्सिनाय तेन यो बाधते तस्मै स्वामिने । गिरश्च केवला गीर्भिरुह्यमानाय सुप्रवृत्ता: संहिनोमि इन्द्राय सर्वस्य प्रीणनं हविश्च यज्ञार्हाय ॥ (४)

**अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समञ्जे ।**
**वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ॥**

अस्मै । अस्मा एवाश्वमिवान्नेच्छया[4] र +[5] इन्द्राय शक्तं[6] मन्त्रं याचा[7] संयोजयामि । वीरं दाननिलयं वदनीयं[8] पुरां दारकं उद्गूर्णान्नं स्तौमि[9] । वन्दध्यै इत्याख्यातमिति यास्कं दर्शनमिति[10] ॥

[1] Read तक्षका:

[2] Perhaps to read only तत्सिनाय.

[3] र completely worm-eaten. The final ल not wanted. There is an anusvāra or आ mark after this ल which is completely worm-eaten. Perhaps some word, केवला missing.

[4] Folio 38*b* ends with एवा. The letter य in या slightly worm-eaten. It may as will be ध.

[5] After र a letter completely worm-eaten. The word not clear.

[6] Read अर्कं.

[7] Perhaps to read वाचा.

[8] Read वन्दनीयं.

[9] The औ mark in स्तौ completely and मि partly worm-eaten.

[10] The expression यास्कं दर्शनं rather unusual ; not traceable to the Nirukta.

अस्मा इदु । अस्मा एवाश्वमिवान्नेच्छया इन्द्राय स्तोत्रं वाचा संश्लेषयामि। वीरं दाननिलयं असुरपुराणां दारयितारं वन्दितुमुद्गूर्णान्नं समञ्जे इति ॥ (५)

**अस्मा इदु त्वष्टा तक्षद्वज्रं स्वपस्तमं स्वर्यं१ रणाय ।**
**वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥**

अस्मै । अस्मा एव त्वष्टाकरोद्वज्रं सुकर्माणां[1] प्रेरणीयं[2] युद्धार्थम् । वृत्रस्य चित् वृददविन्दत्[3] । अभिवा[4] वेदनार्थो विदिः । मर्म येन हिंसन्नीशानो हिंसको नकियेथा[5] मबलवान्[6] । कियतो बलस्य धत्तेति[7] यास्कः[8] ॥

अस्मा इदु । अस्मा एव त्वष्टाकरोत् वज्रमतिशयेन शोभनकर्मयुक्तं अच्छतया शब्दकुशलं युद्धाय । वृत्रस्य चिद्विदत् येन वज्रेण द्युस्थानं हिंसन् ईश्वरो हिंसित्रा वज्रेण कियतो बलस्य धारयिता इति बलवन्तमाहेति ॥ (६)

**अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।**
**मुषायद्विष्णुः पचतं सहीयान् विध्यद्वराहं तिरो अद्रिमस्ता ॥**

[1] The second म in र्मा completely and ण partly worm-eaten. Read सुकर्मणां.

[2] सुकर्मणां प्ररणीयं must be the explanation of स्वपस्तमं स्वर्यं. Perhaps something missing.

[3] Read विददविन्दत्.

[4] Read अपिवा.

[5] The initial न not wanted.

[6] The initial म not wanted. Or does Madhava have a different reading in the text?

[7] Read धर्तेति.

[8] Yāska has : कियेधाः कियद्धा इति वा क्रममाणधा इति वा (नि. ६. २०).

अस्येदु । अस्येदु निमातुः[1] सवनेषु सद्यो महान्तं पानीयं सोमं चारूणि चान्नानि पविवान्[2] यजमानः । प्रेरयतीति शेषः । अपिवा पविवान्[3] विष्णुः । पचनीयमिन्नं[4] इन्द्रस्य स्वभूतं सहीयान् । तं वराहरूपं विष्णुमिन्द्रो विष्णुमिन्द्रो[5] विध्यक्तिरो[6] वज्रं क्षेप्ता । वराहोऽयं वा ममोषः[7] । सप्तानां गिरीणां[8] अध्वर्युर्ब्राह्मणं[9] अनुसन्धेयम् । अथवा अयमत्रार्थः । अस्यैव मातुः सवनेषु सोममन्नानि च संभावति[10] । स सोमं पपिवानविध्यद्वराहमिति ॥

अस्येदु । अस्यैवेन्द्रस्य जगतो निर्मातुः स्वभूतेषु सवनेषु सद्य एव महत् पानीयं सोमं पपिवान् चारूणि चान्नानि । चरुपुरोडाशादीनि भक्षयित्वा मुषितवान् वराहरूपो विष्णुः पचतमन्नं असुरपुराणां स्वभूतं बलं वा वराहमविध्यत् इन्द्रस्तिरो वज्रं क्षेप्ता । वराहो मेघो वराह एव वा । वराहोऽयं वा महिषः । सप्तानां गिरीणां परस्तात् वित्तं वेद्यमसुराणां बिभर्ति इति ब्राह्मणं अध्वर्युभ्योऽवगन्तव्यम् ॥ (७)

**अस्मा इदु ग्नाश्चिद्देवपत्नीरिन्द्रायार्कमहिहत्य ऊवुः ।**
**परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ॥**

[1] Read निर्मातुः

[2] Read पपिवान्.

[3] It is not certain if what is written is पपि or पवि. Read पपिवान्.

[4] Read पचनीयमन्नं. The word मुषायन् not commented.

[5] Repetition of विष्णुमिन्द्रो not wanted.

[6] Read विध्यत्तिरो.

[7] Read मेघः

[8] Add इति after this word.

[9] Not traced.

[10] Perhaps to read संभावयति.

अस्मै । अस्मा एव ग्ना गमनस्वभावा गायत्र्याद्या देवपत्न्यः इन्द्रा-यार्चनीयं[1] मन्त्रं हरतेऽरक्षन्[2] अस्तुवन् अभिहनने[3] उद्युक्त इत्यर्थः । शाक-ल्यसरूपुरादिपदेऽन्तस्विते[4] परिगृह्णाति ।

नास्य ते महिमानं परि ष्टः[5] ।

इति ।

वस्वीन्नो[6] अत्र पत्नीरा धिये धुः (ऋ. वे. ५. ४१. ६)

इत्यार्दिष्विन्ततः[7] स्थितं च[8] धुरिति पदं च परिगृह्णाति ।

हर्तेव[9] गर्भं स्वमिच्छयो[10] धुः (ऋ. वे. ५. ५८. ७)

इति न परिगृह्णाति ।

प्रति श्वसन्तमव दानवं हन् (ऋ. वे. ५. २९. ४)

परिगृह्णाति[11] ।

नव[12] च देह्यो हन् (ऋ. वे. ६. ४७. २)

[1] र्च is usually written as a double च with a dot above. Here there is only one च. It is doubtful if there is a dot above. It has got mixed up with the bottom portion of the letter in the line above, if at all a dot has been put.

[2] There is no need for the word हरते.

[3] Read अहिहनने.

[4] Perhaps to read शाकल्यस्तूपुरादिपदेऽन्तःस्थिते.

[5] The last pāda here.

[6] Read वस्वीर्नो.

[7] Read इत्यादिष्वन्ततः

[8] This च not wanted.

[9] Read भर्तेव.

[10] Read स्वमिच्छवो.

[11] Add इति before this word.

[12] The pāda begins वि नवतिं नव.

परिगृह्णाति[1] । सर्वत्र निदानं समयानुक्रमण्यां[2] उक्तमिति । सोऽयन्द्यावा-पृथिवी[3] स्मृते[4] परिहरति महिम्ना । नास्य ते महिमानं परिभवतः ॥

अस्मा इदु । अस्मा एव स्त्रियो देवपत्न्य इन्द्राय स्तोत्रमहिहननेऽरक्षन् । अस्तुवन्नित्यर्थः । सोऽयं तेजसा द्यावापृथिवी परिहरति । नास्य ते महत्वं परितो भवतम् ॥ (८)

**अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् ।**
**स्वराळिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥**

अस्य । अस्यैव महत्वं त्रिभ्यो लोकेभ्योऽतिरिक्तमासीत । परिः पञ्चम्यर्थः[5] स्फुटीकरोति । स्वराळिन्द्रो दमे विश्वैर्गूर्तः[6] आभूतः । स्वरिः शोभनारिः ।

अकवारिं दिव्यं शासमिन्द्रम् (ऋ. वे. ३. ४७. ५)[7]

इति । अमित्रो[8] ववक्ष्ये[9] रणाय उह्यते युद्धार्थिभिः ॥

अस्येदेव । अस्यैव महत्वं त्रिभ्योऽपि लोकेभ्यः प्रकर्षेणातिरिक्तमासीत् । परिः पञ्चम्यर्थे स्पुटीकरोति । स्वयमेव राजेन्द्रो गृहे च सर्वैराहूतः शोभनारिः अमत्रो महान् गच्छति युद्धार्थम् ॥ (९)

[1] Here add इति and also न before this word.
[2] य in या completely worm-eaten. This is the seventh of the twelve Anukramaṇis of the author. See note 3 on p. 168.
[3] सोऽय completely worm-eaten. Only a conjecture.
[4] Read विस्तृते.
[5] Read पञ्चम्यर्थे.
[6] श्वै mostly worm-eaten.
[7] This appears also in R. V. 6. 19. 11.
[8] Read अमत्रो.
[9] Read ववक्षे.

अस्येदेव शवसा शुषन्तं वि वृश्चद्वज्रेण वृत्रमिन्द्रः ।
गा न व्राणा अवनीरमुञ्चदभि श्रवो दावने सचेताः ॥

अस्य । अस्यैव बलेन शुष्यन्तं विवृश्चद्वज्रे[1] वृत्रमिन्द्रः । गाव[2] चोरहृता प्रावृणा[3] वृत्रेण वृता अवनीरपोऽमुञ्च[4] । अतिप्रापयति[5] चान्नन्दावने दाव्ने[6] यजमानाय[7] सचेताः[8] तेनैकचित्तः ॥

अस्येदेव । अस्यैव बलेन शुष्यन्तं विवृश्चद्वज्रेण वृत्रमिन्द्रः । गा इव संहता नदीः वृत्रादभ्यमुञ्चत् । इमं लोकं प्रत्यपातयदन्नस्य दानाय मनुष्याणां सचेताः सन्निति ॥ (१०)

अस्येदु त्वेषसा रन्त सिन्धवः परि यद्वज्रेण सीमयच्छत् ।
ईशानकृद्दाशुषे दशस्यन् तुर्वीतये गाधं तुर्वणिः कः ॥

अस्य । अस्यैव[9] बलेन स्वे स्वे स्थाने रमन्ते सन्धवः[10] । पर्ययच्छत्

[1] Read विवृश्चद्वज्रेण.

[2] Read गा इव.

[3] Perhaps to read only व्राणा.

[4] Read अवनीरपोऽमुञ्चत्.

[5] Read अभिप्रापयति.

[6] After चान्नन्द there is a break in the leaf and about four or five syllables are missing. But in the transcript prepared a few years ago चान्नन्दावने दाव्ने is seen. व्न is in tact. Reading uncertain.

[7] Folio 39*a* ends with यजमा. The letters नाय on the next page completely worm-eaten.

[8] सचे mostly worm-eaten.

[9] अ completely worm-eaten.

[10] Read सिन्धवः

सीमेनाम्[1] । सिन्धून् यतो वज्रेण । ईशानकृत्[2] आत्मानमीश्वरं[3] कुर्वन्[4] बलरक्षणे दाशुषे[5] प्रयच्छन्[6] कुर्वीतये[7] उदके गाधिय[8] तस्मिन् गाधस्थेल[9] क्षिप्रोऽकार्षीः ।

त्वं महीमचनिं[10] निश्वसेनाम्[11] (ऋ. वे. ४. १९. ६)

अस्येदु । अस्यैव दीप्तेन बलेन कूलयोरन्तं नद्यो न गच्छन्ति यस्मादसौ वज्रेण नदीः सर्वतः अयच्छत् । ऐश्वर्यं यजमानाय परमिच्छन् तुर्वीतये गाधे उदके स्थिताय ऋषये स्थलं कृतवान् शत्रूणां तारकः ॥ (११)

**अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।**
**गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥**

[1] It is not certain if the last syllable is नन् or नाम्. After न the mark following is partly worm-eaten. What remains can be a part of either. नाम् is a nearer approximation.

[2] What was orginally written is वज्रेणशानकृत्. Then ए mark inserted below the line between ज्रे and ण and we have वज्रेणेशानकृत्.

[3] व mark in श्व completely worm-eaten.

[4] कुर्वन् partly worm-eaten.

[5] रक्ष partly and दाशु mostly worm-eaten.

[6] This word mostly worm-eaten.

[7] Read तुर्वीतये.

[8] After कुर्वीत the leaf is broken and about four or five syllables missing. In the transcript made some time back is written कुर्वीतय उदके . . . . य. Now उदक lost. After the break आ mark and धि clear. Then one letter missing. Then there is य in the next line. Reading uncertain.

[9] ध after गा mostly worm-eaten. Read गाधस्थले. After स्थेल there is some mark, perhaps an anusvāra, which is worm-eaten.

[10] Read महीमवनिं.

[11] Read विश्वधेनाम्.

अस्मै । अस्मा एव प्रहर[1] त्वरमाणो वृत्राय वज्रमीशानः क्रियेथाः क्रियद्धा[2] इति वा क्रममणाधा[3] इति वा[4] । गौरिव विरद[5] पर्वाणि तिरश्चीनं मेघस्येष्यन्नण्यांस्यपां[6] शरणायेति[7] । निरुक्तम् । इष्यन् प्रेरयन्नर्णांसि[8] द्वाराणीति[9] ॥

अस्मा इदु । अस्मा इदु प्रभर त्वरमाणो वृत्राय वज्रमीशानः कियतो बलस्य धारयिता । गौरिव पर्वाणि विरद तिरश्चीनं वृत्रं प्रेरयन् उदकमार्गादपां चरणाय ॥ (१२)

**अस्येदु प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः ।**
**युधे यदिष्णान आयुधान्यृघायमाणो निरिणाति शत्रून् ॥**

अस्य । अस्यैव ब्रूहीति हतः[10] । प्रत्नानि क्षिप्रस्य कर्माणि । सोऽयं

[1] Perhaps to read प्रभर.

[2] Read क्रियेधाः कियद्धा.

[3] Read क्रममाणधा.

[4] See note 8 on page 463.

[5] वि completely worm-eaten.

[6] After तिरश्च the leaf broken and about four or five syllables lost. In the transcript made some time back is found तिरश्चीनं मेघस्ये etc. Now, स्ये is in tact. The letters in between lost. Read मेघस्येष्यन्नर्णांस्यपां. In ण्यां the anusvāra juts out into the margin; perhaps a later addition. स्यपां mostly worm-eaten. Only a conjecture.

[7] Read चरणायेति.

[8] Written प्रेरयन् नर्णांसि and not with the double न्न.

[9] Nirukta has only इष्यन्नर्णांसि अपां चरणाय (नि. ६. २०).

[10] The text has प्रब्रूहि. Passage not clear. Perhaps to read प्रब्रूहि स्तोतः

स्तुत्यो भवत्युक्थैः । सोऽयं स्तुत्यो भवत्युक्थैः[1] । योधनार्थं यदायमायुधानि प्रेरयात्[2] हिंसन् शत्रूनुपक्षयति[3] ॥

अस्येदु । अस्यैव प्रब्रूहि स्तोतः प्रत्नानि क्षिप्रस्य कर्माणि । स्तुत्योऽयमुक्थैः । यदायं युद्धायायुधानि प्रेरयन् शत्रून् हिंसन् युद्धाद्गमयति तदा प्रब्रूहि इति ॥ (१३)

**अस्येदु भिया गिरयश्च दृळ्हा द्यावा च भूमा जनुषस्तुजेते ।**
**उपो वेनस्य जोगुवान ओणिं सद्यो भुवद्वीर्याय नोधाः ॥**

अस्य । अस्यैव हयेन[4] पर्वता अपि दृढाः स्वस्थाने तिष्ठन् द्यावाभूमि[5] च जनुषः प्रादुर्भूतादस्मात् कम्पेते । वेनस्य कान्तस्यासौनिमवर्णि[6] उपजोगुवानः कीर्तयन् सद्य[7] एव भवतु वीर्याय वीर्यवान् भवतु । नोधा नवनं[8] दधातीति ॥

अस्येदु । अस्यैव भयेन पर्वताश्च दृढाः स्वस्थाने तिष्ठन्ति द्यावाभूमी च प्रादुर्भूतात् कम्पेते । कान्तस्येन्द्रस्य रक्षणं उपोच्चारयन् सद्य एव भवतु वीर्याय अयं नोधाः ॥ (१४)

[1] This passage, which is a repetition, not wanted.

[2] Read प्रेरयन्.

[3] It is very doubtful if what is written is हिंसञ्चित्रनुपक्षयति or हिंसञ्छत्रूनुपक्षयति. Read शत्रूनुपक्षपयति.

[4] Read भयेन.

[5] Read द्यावाभूमी.

[6] The आ mark in का completely and the letter न्त mostly worm-eaten. Read कान्तस्यौणिमवनं.

[7] स completely worm-eaten.

[8] Perhaps to read नवधनं.

अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः ।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ॥

अस्मै । अस्मा एव तत् स्तोत्रमनुदाय्येभिः । एको यद्दधौ[1] भूरिधकनमीशानः[2] । प्रावदै + कतरमृषिं[3] सूर्ये स्पर्धमानम् । सौपश्व्ये[4] सुष्वमभिषोतारं[5] इन्द्रः । स्वश्वस्य राज्ञः सूर्यः पुत्रो बभूव । तेन सहैतशस्यर्षेरभवद्युद्धमिति ॥

अस्मा इदु । अस्मा एव तत् स्तोत्रं एषां स्वभूतं अन्वदायि । यस्मादयमेक एव धनं प्रयच्छति भूरेरीश्वरः । प्रावदेतशं नाम सूर्ये स्पर्धमानं स्वश्वस्य पुत्रे अभिषोतारमिन्द्रः ॥ (१५)

एवा ते हारियोजना सुवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन् ।
ऐषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥

एव । भिरी[6] यध्य[7] योजनौ प्राप्यकौ[8] स हारियोजनः । एवान्ते[9] हारियोजन सुवृक्तानीन्द्र ब्रह्माणि गोतमासो अक्रन् ।

[1] Written यददधौ and not with the double द्.

[2] Read भूरिधनमीशानः

[3] Read प्रावदेतशमृषिं. Between दै and क there is space for a letter; but the portion is completely worm-eaten.

[4] Read सौवश्व्ये. The letter सौ completely worm-eaten.

[5] Read सुष्विमभिषोतारं.

[6] Read हरी.

[7] Read यस्य.

[8] Read प्रापकौ.

[9] Read एवा ते.

आया[1] एवु गौतमेषु[2] विश्वरूपां धिनं[3] धनम् । अपि वा कर्मैव धीरिति ॥

अध मतिंगहनार्थो[4] व्याकृतोऽध्याय इत्थं
नतिपुण[5] इह कश्चिद्दृश्यते मृग्यमाणः ।
कृतमपितिरपि[6] दैवादर्बुदे मानवः स्यात्
पुरुषमृगविधानं चाश्वमेधे हि मृष्टम्[7] ॥

एवा ते । एवं ते हरी प्रापयितारौ यस्य तस्य सुप्रवृत्तानि इन्द्र स्तोत्राणि गोतमा अक्रन् । कृतेषु च एतेषु विश्वरूपां बुद्धिमाधाः । प्रायेण स्तुतिमात्रं सूक्तं इति ॥ (१६)

इत्थं चतुर्थमध्यायं व्याकरोत् प्रथमेऽष्टके ।
अष्टकस्य कुले जातो माधवो वेङ्कटात्मजः ॥

---

## चतुर्थोऽध्यायः

---

[1] Read आधा.

[2] Read गोतमेषु.

[3] Read धियं.

[4] Read अयमतिगहनार्थो.

[5] Written इत्थन्नतिपुण. Perhaps to read. न निपुण.

[6] Read कृतमतिरपि. The second पि mostly worm-eaten.

[7] Here there is no mention of the end of the adhyāya. The pratika of the next, प्र मन्महे follows this.